४—महामहोपाध्यायस्वामिश्रीरघुवराचार्यग्रन्थमालायाश्चतुर्थं पुष्पम् ।

आचार्यसम्राड्भगवच्छ्रीरामानन्दाचार्यप्रणीतं

शारीरकमीमांसाया

# श्रीमदानन्दभाष्यम्

अधिकरणरत्नमालाऽलङ्कृतम्

संशोधकः—महामहोपाध्याय

**—स्वामि श्रीरघुवराचार्य—**

वेदान्तकेसरी न्यायमीमांसोपाध्याय तर्कवेदान्ततीर्थ व्याकरणाचार्य

वेदान्तशिरोमणि दर्शननिधि श्रीशैपमठाधीशः

प्रकाशक :—स्वामी श्रीरघुवराचार्यचरणचञ्चरीक

**स्वामी श्रीबालकृष्णाचार्य वेदान्तरत्न**

श्रीरघुवरवेदान्तपीठाधिपति श्रीरामचौक शिवपुर ।

द्वितीयावृत्ति ] श्रीरामनवमी सं० २०२४ वि० [ मूल्य
१००० ] श्री रामानन्दाब्द ६६७ [ ८)रु०

४—महामहोपाध्यायस्वामिश्रीरघुवराचार्यग्रन्थमालायाश्चतुर्थं पुष्पम् ।

आचार्यसम्राड्भगवच्छ्रीरामानन्दाचार्यप्रणीतं

## शारीरकमीमांसाया

# श्रीमदानन्दभाष्यम्

अधिकरणरत्नमालाऽलङ्कृतम्



*

संशोधकः—महामहोपाध्याय

**—स्वामि श्रीरघुवराचार्य—**

वेदान्तकेसरी न्यायमीमांसोपाध्याय तर्कवेदान्ततीर्थ व्याकरणाचार्य

वेदान्तज्ञशिरोमणि दर्शनधि श्रीशेषमठाधीशः

प्रकाशकः—स्वामी श्रीरघुवराचार्यचरणचञ्चरीक

**स्वामी श्रीबालकृष्णाचार्य वेदान्तरत्न**

श्रीरघुवरवेदान्तपीठाधिपति श्रीरामचौक शिढपुर।

द्वितीयावृत्ति ] श्रीरामनवमी सं० २०२४ वि० ] मूल्य
१००० ] श्री रामानन्दाब्द ६६७ ] ८) रु०

सिद्धपुरस्थ श्रीरघुवर वेदान्तपीठाचार्य



महान्त स्वामी श्रीबालकृष्णाचार्यजी महाराज, वेदान्तरत्न

प्रकाशकः ।

श्रीः

## प्रस्थानत्रयानन्दभाष्यकाराय नमः ।

# प्राक्कथनम्

भक्तानामुपकारार्थं तत्त्वार्थाधिगमाय च ।
श्रीगीताऽऽनन्दभाष्यार्थचन्द्रिका येन निर्मिता ॥
तथैव ब्रह्मसूत्राणां वेदान्तवृत्तिरीरिता ।
श्रीमन्त्रराजमीमांसामुखा ग्रन्थाः कृतास्तथा ॥
पूज्यो मनीषिमूर्द्धन्यः सोऽयं वेदान्तकेसरी ।
श्रीमान् रघुवराचार्यो गुरुवर्यः प्रणम्यते ॥

सुविदितमेवेदमस्ति यद् ग्रन्थरत्नस्यास्य प्रथमसंस्करणस्य भूमिकायाः लेखकाः परमपूज्याः प्रातः स्मरणीयाः श्रीसाकेतधामवासिनो ममैव श्रीगुरुदेवा आसन् । ते हि व्याकरणे, न्याये, मीमांसायां तथा वेदान्तादिशास्त्रेषु सुमहान्तो विद्वांसोऽभूवन् । तेषां वैदुष्येण प्रभावितो भूत्वा तदानीन्तनः सर्वकारः 'महामहोपाध्याय' इतिपदवीप्रदानेन श्रीगुरुदेवान् तान् समलङ्कृतवान् । ते च 'वेदान्तकेसरी' इत्याख्यया प्रसिद्धाः समवर्तन्त । वस्तुतस्ते गुरुमहानुभावा वेदान्तशास्त्राणां साक्षान्मूर्तिरूपा एवाविद्यन्त । आनन्दभाष्यन्त्विदं समग्रमपि वस्तुतस्तेषां कण्ठाग्रे स्थितमभूदि इति ।

साम्प्रतञ्चात्र द्वितीयसंस्करणे ग्रन्थस्यास्य महिमान श्रीमतां भवतां पाठकानां पुरस्तात् परमादरणीयानां मम श्रीगुरूणामेव शब्दैः प्रथमसंस्करणस्य भूमिकातः कञ्चित् सामयिकं प्रसङ्गं परित्यज्य—समुपस्थापयामीति

निवेदकः

**स्वामिश्रीबालकृष्णाचार्यः**

मीमांसारत्नः

श्रीमते रामानन्दाचार्याय नमः ॥

अथ महामहोपाध्यायस्वामिश्रीरघुवराचार्यप्रणीता

तत्त्वप्रकाशिकाख्या—

# भूमिका

जगल्लीलाबीजं निरवधिककल्याणगुणकं-
महेशाद्यैर्वन्द्यं कलुषितगुणास्पृष्टवपुषम् ।
शरण्यं लोकानां श्रुतिनुतपदं भक्तसुखदम्-
श्रयेऽहं श्रीरामं द्विभुजकमनीयं प्रतिदिनम् ॥१॥

तं नौमि परमाचार्यं रामानन्दं जगद्गुरुम् ।
यद्वचः स्मरतां नित्यं जगत्त्रासनिरासकृत् ॥२॥

सीतानाथसमारम्भां रामानन्दार्यमध्यमाम् ।
अस्मदाचार्यपर्य्यन्तां वन्दे गुरुपरम्पराम् ॥३॥

यस्य प्रतापतपनेन च मद्धृदिस्थं-
दुर्बुद्धताजनकसन्तमसं न्यषेधि ।
शास्त्रेषु चाप्रतिमधीस्ममकारि तं वै-
वन्दे स्वदेशिकवराङ्घ्रिसरोजरेणुम् ॥४॥

## उपक्रमः

अथाखिलहेयप्रत्यनीकानन्तकल्याणगुणगणार्णवस्य जगदुदयविभवलय-लीलारसिकस्य परमपुरुषस्य भगवतः श्रीजानकीजानेश्चरणनलिनानुकम्पानुकम्पयैव परमपुरुषावाप्तिलक्षणस्य मोक्षस्य सिद्धिरित्यखिलाम्नायविदां समयः ।

तदेतदतिमतिविषयीकृताम्नायान्तसत्सिद्धान्त आध्यात्मिकादिवृजिनार्णवनिमग्नाखिलजनोद्धरणदयोदयवान् भगवद्वासुदेवापरावतारः श्रीकृष्णद्वैपायनाचार्यः परमदुर्गममाम्नायान्तस्तलसमापन्नं सकललोककल्याणैकप्रयोजनमनल्पफलकमप्यल्पीयसा श्रमेण साध्यं स्वमनीषोपकल्पितवैतण्डिकपथमाश्रयद्भिर्दुराराध्यमपि साम्प्रदायिकाचारविचारप्रवणीकृतान्तःकरणैः समाराध्यं वेदान्तरहस्यं प्रतिष्ठापयामास कर्मस्वरूपावगमपरेणापश्चिममीमांसाशास्त्रेणैकशास्त्रत्वमापन्नेषूत्तरमीमांसापरनामधेयेषु ब्रह्मसूत्रेषु*। यस्य सिद्धान्तसौरभं समाघ्राय। जननिकायः स्वोपार्जिताखिलकर्मफलमप्यवनितलमुपभुज्यान्तरेण श्रममनुभवति सुखैकसरणिं मोक्षवरणिम्।

तत्प्रमाणकमेतन्निखिलविशिष्टाद्वैताचार्यसर्वस्वभूतं भगवद्द्वैपायनमुनिना प्रवर्तितं श्रीशुकपुरुषोत्तमगङ्गाधररामेश्वरराघवानन्दयतिभिरुपकृतं परमाचार्यजगद्गुरुश्रीरामानन्दमुनीन्द्रैरुपबर्धितं श्रुतिशिरस्समुद्दीपितं मिथ्यावादिवर्गकुतर्करचनाचयानवगतमनवच्छिन्नानादिधीसम्प्रदायजुष्टं विशिष्टाद्वैतमतमिदानीन्तने नूतनेऽप्यनेहसि भृशमभ्युज्जृम्भतेऽवनिमण्डले।

---

*अत्रैकशास्त्र्यञ्चैकवाक्यत्वरूपम्। तत्र वर्णसमुदायात्मनः शास्त्रस्य स्वरूपेणैक्यं न सम्भवतीत्यतः साक्षात्परम्परया वा समानचरमप्रयोजनोद्देश्यकप्रवृत्तिजनकत्वेनैकव्याख्येयव्याख्यानरूपत्वेन चैकशास्त्रत्वमवगन्तव्यम्। अस्ति चैव पूर्वमीमांसावगतस्वरूपाणां कर्मणां फलाभिसन्धिवर्जनपुरस्सरमनुष्ठितानां ज्ञानजनकत्वम्।

ज्ञानस्य च मोक्षजनकत्वमित्युत्तरमीमांसावसेयम्। तथा कर्मोपासनयोः पूर्वोत्तरमीमांसाप्रतिपाद्ययोः साक्षात्परम्परया वा निःश्रेयसरूपैककार्यार्जकत्वात्तत्प्रतिपादकशास्त्रयोरप्येकफलोद्देश्यकप्रवृत्त्युत्पादकत्वेनैकशास्त्र्यम्। एवमाम्नायरूपैकग्रन्थव्याख्यानत्वस्याप्युभयत्र तुल्यत्वादैकशास्त्र्यमुपपन्नमेव। तदुक्तं "एकव्याख्येयव्याख्यानात्मना विंशतिलक्षणमेकं शास्त्रमि" ति। इत्थमेव च "अल्प श्रुतेरिति चेत्तदुक्तम्"(ब्र०सू०१।३।२१)

## श्रीमद्रामानन्दस्वामिजन्मकारणम्

कदाचिदासीदिदमेकतोऽवनिमण्डलं मण्डलानुविधायिनां परमवैदिकसन्मतद्वेषदूषितान्तःकरणानां दुरुद्धरदुर्मदविरोधानुबन्धिदुर्ग्रन्थगन्थिताशापटलानां परस्परामर्शसंघर्षपितापविलसितमानसानां अहमहमिकयैकयाहितालवंगवर्णां चार्वाकशाक्यजिननिचयचर्चिताध्वबन्धुराध्वनीनानां क्रीडास्थलं सकलम् । अपरतोऽखिलखलाखण्डलमण्डलीध्वस्तसमस्तवैष्णवाचारविहारप्राङ्गणं दुर्नयप्राज्यसाम्राज्यम् । तदनेहसि रहसि कथञ्चिदनुष्ठीयमानस्वाम्नायक्रियाकलापमपि पापमित्युद्घोषयन्तोऽनन्तमामन्तश्रीमन्तो यवनदुर्नयपक्षदक्षाः पर्यटन्त आसन् । धर्मशासकेषु केचिच्छौद्धोदन्यधिगताध्वान्धतमसाच्छन्नविचारचक्षुषः शून्यमेवेदमित्युदाजह्रुः । अपरे चार्हदनर्हसमयसमीरसमीरितदुराग्रहरेणुरञ्जितलोचना नास्तीश्वरो विश्वविलासहेतुरित्येव प्रथयाञ्चक्रुः । अन्ये त्वनल्पकल्पनाकल्पितः शुक्तिशकलकलधौतमिवेशायं चिदचिद्विभागो न पारमार्थिक इत्यभिदधुः । किं बहुना नास्ति पारलौकिकफलं किमपि यागदानादिलक्षणं कर्म न पाषाणप्रचुररचि-

---

'हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्' । ( ब्र० सू० ३।३।२६ ) इत्याद्युत्तरमीमांसासूत्रघटकी भूततदुक्तमित्यादितात्पर्यविषयीभूतार्थप्रतिपादकत्वेनापि पूर्वमीमांसायास्तन्निरूपितैकग्रन्थतावत्त्वमक्षुण्णम् । न च भिन्नकर्तृकत्वेन नैकग्रन्थत्वमिति वाच्यम्, कादम्बर्यादौ तथा दर्शनात् ।

एवञ्च "अर्थैकत्वादेकं वाक्यं साकांक्षञ्चेद्विभागे" ( जै. सू. २।१।४६ ) इति सूत्रसिद्धं साकांक्षत्वे सत्येकार्थप्रतिपत्तिपरत्वमेवात्र तत्वमिति दिक् । एवमनेकसमाधानानां जागरूकत्वान्निर्णयसागरीयशास्त्रदीपिकाभूमिकाकारैर्भिन्नत्वसाधने केवलं श्रम एवाङ्गीकृत इति निश्चिनुमः ।

महामहोपाध्याय श्रीरघुवराचार्यः

तत्कलेवरा मन्दिरैकदेशशिल्पिनिवहनिहिता काचिदमरविनिपमूर्तिरप्याम्नायसम्मता न वास्थिनिकरनिक्षेपफलानि प्रेतप्रेप्सितपिण्डप्रक्षेपेण किल पङ्किलानि सरित्प्रस्रवणसरोजलमयानि तीर्थानीदतेतमामघौघप्रमार्जनं कर्तुमित्यसकृदकार्षुरिमं कालुष्योपचितकलेवरं हालाहलविषविषमकोलाहलं विवादवद्धादरा दुर्बलदूकाः ।

इतीमामेव भगवज्जनहृदयाहितव्यथां दुरवस्थामुत्थापयितुं संस्थापयितुञ्च निरस्तसमस्तदोषाशङ्ककलङ्कपङ्कापौरुषेयाम्नायान्तसमधिगतानाद्यनन्तं विशिष्टाद्वैतराद्धान्तम् । प्रखिलयोगिजनजेगीयमानयशोनिकरकरुणाकमनीयकान्तिकलितकलेवरप्रतिवादिमत्तमातङ्गघटाविघटनकेसरिणः श्रीमज्जानकीजानिप्रसादसमुल्लसितश्रीराममन्त्रादिरहस्यत्रयप्रवर्तकाचार्याः श्रुतिशिरःसमुद्भासितविशिष्टाद्वैतमतप्रतिपन्थिपयोधरोत्सारणप्रबलप्रभञ्जना गुरमुनिमनुजमनोमोदमादधानाः सकलसंयमिहृदयमानसविकसितारविन्दवृन्दारकवृन्दवन्दनीयपादारविन्दश्रीमद्रामानन्दमुनीन्द्रा भारतीयावनितलमलञ्चक्रुः ।

अत्रेदमवधेयं--लोकानां हितकाम्यया पूर्वं साकेतलोक एव प्रहितं निरतिशयप्रियं श्रीराममहामनुं कलावपि सर्वेषु लोकेषु विशेषेण प्रवर्तयिष्यन् साकेतपतिर्भगवान् श्रीरामचन्द्रः-

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत !

अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥गी० अ० ४

इति स्वकीयोक्तिं चरितार्थयन् स्वयमेव भगवद्रामानन्दाचार्यस्वरूपेणावततार ।

तदुक्तं वैश्वानरागस्त्यसंहितादिषु । तथाहि-

सोऽवातरज्जगन्मध्ये जन्तूनां भव-सङ्कटात् ।

पारं कर्तुं हि धर्मात्मा रामानन्दः स्वयं स्वभूः ॥

माघे तु कृष्णसप्तम्यां चित्रानक्षत्रसंयुते !

कुम्भलग्ने सिद्धयोगे सप्तदण्डगते रवौ ॥
रामानन्दः स्वयं रामः प्रादुर्भूतो महीतले । वैश्वा० सं०
मुने स भगवान्नित्थं सुतीक्ष्ण जगदीश्वरः ।
सत्यसंधो हरिर्जातो विधास्यति शुभ नृणाम् ॥
श्री सम्प्रदायश्रेष्ठञ्च जनोद्धारपरं सदा ।
विज्ञाय राघवानन्दं लब्ध्वा तस्मात् षडक्षरम् ॥अग०सं० इति ।

## श्रीभगवत्पादानां प्रादुर्भावे देशसमयादीनां निर्णयः

इमे च लोकोत्तरप्रकर्षशालिनस्त्रय्यन्तारविन्दमरीचिमालिनः श्रीसम्प्रदायाचार्यवर्यसार्वभौमाः स्वावतारवैभवेन कदा क जनपदं वंशञ्चावतंसयामासुरित्येतदुच्यते । अस्ति भारतवसुन्धराधामललामालङ्कारभूतोऽशेषकल्मषविमर्दिनिजह्नुकलिन्दनन्दिनीनिनादानुरञ्जितप्रवाहगावितक्षोणिभागः सुरमुनि मनुजेन्द्रनिचयोपरचितविविधयागस्तीर्थराजः प्रयागः । तत्र च परममान्य-वदान्यकान्यकुब्जान्ववायाब्जदिवाकरस्य स्वाध्यायाध्ययनविशुद्धवदनस्य श्रीपुण्यसदनस्याधिसदनं तस्यैव पाणिगृहीत्यां सकलकलाकलापकलितललितलीलायां श्रीमतिसुशीलानाम्न्यां रसेषुगुणवरसा ( १३५६ ) सम्मितायां विक्रमशरदि विमले तपसोऽसितदले सप्तम्यामखिलदुराग्रहधियामज्ञानान्धतमसं ध्वंसयन्तः प्रादुरभूवन्निमे भवदवदहनदग्धहृदयदीनजनैकशरणा श्रीमदाचार्यभगवच्चरणाः । स्पष्टमुपवर्णितमेतदाचार्यचरितं वाल्मीकिवैश्वानरागस्त्यसंहितादिष्विति नात्र विकल्पशिलिकल्पितार्थवृत्तिविनाशचतुरः प्रखरसमालोचनावसर इति नाधिकमातन्यते ।

## संक्षेपतस्तच्चरितम्

ततस्ते दिव्यदृशो ब्रह्मचर्यावस्थायामधिवाराणसि वेदवेदाङ्गाद्यखिलानवद्यविद्योदन्वतः परमहंसपरिव्राजकाचार्यश्रीमद्राघवानन्दस्वामिनः सकाशादल्पीयसांहसा सरहस्यं समस्तविद्यामध्यगीषत । तदनु च पूर्व-

## बोधायनवृत्तिकार भगवान बोधायन
## श्रीपुरुषोत्तमाचार्यजी



मन्त्रो रामषडक्षरः शुकमुनेर्वैयासिकेर्योऽलभद्
ग्रीवायां तुलसीस्रजो च परितो भास्वत्प्रभामण्डलम् ।
आचार्यः पुरुषोत्तमः सदपर यस्याभिधानं हि स
श्रीबोधायनवृत्तिकृज्जयतां बोधायनः शाश्वतम् ॥

तनानन्तभवाम्यस्तवैषयिकविलासवागुराग्रथितस्वान्ताब्जगजजालजटिला-ब्जनाब्जगदसारतां निखिलानन्दनिलयनिलम्पनिबन्धपादारविन्दश्रीरा-मचन्द्रचरणानुध्यानजन्यानुभवस्य चोपादेयतामुपदिदिक्षवो ब्रह्मचर्यादेव स्वीचक्रुस्ततः एव च गुरो पञ्चसंस्कारपुरस्सरं पारिव्राज्यम् ।

एवं तुर्याश्रममङ्गीकृत्य काशीमेवाधिवसन्तः प्रथयामासुर्भागवतं धर्मम् । ग्रानैपुश्चानल्पजल्पाकान्पण्डितप्रकाण्डाननेकाञ्छ्रीवैष्णवाम्नायधर्मम् । अत्रैषामाश्रयार्थपारदृश्वनामेषां श्रीमदनन्तानन्दप्रभृतयः परमात्मप्रत्यगा-त्मस्वरूपयाथार्थ्यविदिनो द्वादश विनेया विरक्तिमादधानाः प्राधान्येनास-न्नित्येतेषां चरित्रं भक्तमालादिषूपलभ्यतेऽतोऽत्र नाप्रस्तुतं प्रपञ्च्यते ।

कर्हिचिदेते भगवच्चरणा भारतीयानेकतीर्थदिदृक्षया पर्यटन्तस्तुरीया-श्रमशालितया वादवदावदेन दिग्विजयमनीहमाना अपि सौगतार्हतप्रच्छ-न्नास्तिकान् नैजागमोद्धोपमात्रेण कान्दिशीकान्विदधतः स्वतः एव दिग्व-जयेन स्वकीयकीर्तिपताकां स्फालयन्तो जनमनस्सु प्रत्यतिष्ठिपञ्छ्रीवैष्ण-वधर्मम् । एवं सर्वत्र स्वीयानितरसाधारणेन वैदुष्यवैदग्ध्येन लोकोत्तरम-हिमवैभवेन स्वकीयविजयवैजयन्तीम्प्रसार्य तत्र तत्र जनांश्च परात्परश्री-रामरहस्यपरान्विधाय पुनः समवाप्य स्वकीयकाशिकाश्रमं सश्रम विशि-ष्टाद्वैतराद्धांत तत्सर्वस्वभूतं षड्वर्णकं श्रीराममहामनुञ्च सविधि वसुधा-तले प्राचीचरन् ।

## भाष्यनिर्माणकारणम्

अथैकदास्य मुनिजनमानसोल्लासकरस्य निःश्रेयसानन्यसाधनस्य महा-महिमशालिनो विश्वजनीनस्य मंत्रराजस्य श्रीराममनो प्रचारतानवमा-कलय्य निरसंमकरुणापूरिते चेतसि कथमिमे लोकाः श्रीराममनुमा-गृह्णीयुः कथन्तराञ्च विशिष्टाद्वैतमतस्य भूयान् प्रचारः स्यादिति चिन्तो-द्रेकः समुदपद्यत ।

श्रीमदाञ्जनेयाब्जयोनिवसिष्ठपराशरव्यासवैयासकिपुरुषोत्तमगङ्गा-धरप्रमुखाचार्यप्रबन्धोपजीव्यं वेदान्तहृदयावेदकमिदमानन्दभाष्यम् । इद-

ञ्च विशिष्टाद्वैतसिद्धांतप्रतिपादकं श्रीवैष्णवानां सर्वस्वमेवेति नाविदितं वेदान्तश्रमजुषां विदुषाम् ।

एवञ्च भगवत्पादैरस्य भाष्यस्य 'आनन्दभाष्यम्' इति नाम्ना प्रसिद्धिरकारि । अस्याभिप्रायस्त्वेवमनुमिनुमः । ब्रह्मण आनन्दगुणसारत्वादानन्दपदेन व्यपदेशो दृश्यते 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' (ब्र० सू० २।३।३०) इति पारमर्षानुशासनात् । अत एव "आनन्दो ब्रह्म व्यजानात्" "को ह्येवान्यात्कः प्राण्यात् यद्येष आकाश आनन्दो न स्यात्" "आनन्दादेव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्ति" इत्याद्याः श्रुतयः सङ्गच्छन्ते । अयमर्थश्च विस्तरेणानन्दमयाधिकरणेऽभ्यधायि प्रमाणबाहुल्येन श्रीमदाचार्येण । तत एव च हेतोरानन्दपदाभिधेयब्रह्मनाम्नास्य भाष्यस्य ख्यातिरुपादर्शि श्रीमदाचार्यधुरीणैरिति । यदि त्वियं ख्यातिस्तदीयेतरजनैरेवोदपादि न भगवत्पादैस्तदा 'श्रीरामानन्द' इति भाष्यकर्तृनामघटकानन्दपदमादायैव भवेत् । 'शांकरभाष्य" 'रामानुजभाष्य' मितिवदानन्दभाष्यमित्यपि युक्तमेव । अत्र च "विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः" इत्यनुशासनेन पूर्वपदस्य लोपे 'आनन्द' पदेन श्रीरामानन्द एवाभिधीयते भामेति वत् । एवञ्चानन्दभाष्यमिति सहेतुकमेवास्याभिधानमुपपद्यतेतराम् ।

एतद्ब्रह्मसूत्रमेव शारीरकमीमांसाशब्देन व्यपदिश्यते । अस्यार्थस्तु-शरीरस्यायं शारीरः परमात्मा तस्येदम्' (पा० सू० ४।३।१२०) इति सम्बन्धेऽण् । शारीरं परमात्मानं कायति प्रतिपादयति शारीरकं ब्रह्ममीमांसाशास्त्रम् । शब्दाभिधायिनः कै धातोः "आतोऽनुपसर्गे कः (पा० सू० ३।२।३।) इति कः । तथा च जीवनियन्तृपरमात्मप्रतिपादकविचारशास्त्रमित्यर्थः पर्य्यवस्यति साम्प्रदायिकानाम् । एतेन शरीरमेव शरीरकं कुत्सितत्वात् तत्र निवासी शारीरक उपाधिविशिष्टो जीवात्मा तस्य ब्रह्मत्वविचारो मीमांसेत्याद्यर्थजातमपास्तम् ।

नह्य पहितस्य जीवस्यात्र प्रतिपादनं लेशतोऽपि कृतम् । अथातो ब्रह्मजिज्ञासेत्यनेन परब्रह्मण एव जिज्ञासाविषयत्वेनाभिमतत्वात्सूत्रकृतामित्यल पल्लवितेन ।

## भाष्यान्तरेभ्योऽस्योत्कृष्टत्वम्

अथास्यानन्दभाष्यस्येतरेभ्योऽखिलेभ्य एव भाष्येभ्यो वरीवर्त्युत्कृष्टत्वम् । नह्यत्र विवादलेशः । तथा हि कस्मिंश्चिद्भाष्ये केवलं वृत्तिरिवैव सूत्रार्थो वर्णित । क्वचिच्चाऽशेषवद्याद्विशेषनिर्देशेन महता संदर्भेण संरम्भेण च परमतनिराकरणम्, जिज्ञासितार्थानभिधानञ्च । क्वचिदुक्तस्यैवार्थस्यासकृद्वर्णनेन पौनरुक्त्यम् । क्वचिच्च भाष्यान्तरानुकृतिमुपसृत्यापरमतनिराकरणम् । एतत्सर्वमस्मिन् भाष्ये लेशतोऽपि नोपलभ्यते । अत्र नु भगवत्पादाः श्रीमदाचार्याः सूत्रकारीयाभिमतभावगर्भया नैसर्गिकप्रसादविशदगर्भरया गिरा व्याचख्युः सर्वमपि प्रशस्तार्थं शास्त्रम् । न च क्वचिदप्यणुतोऽप्युत्सूत्रं दुराग्रहबलेशकवलित वाभिदधुः । तथा च -

सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥
पदच्छेदः पदार्थश्च विग्रहो वाक्ययोजना ।
आक्षेपश्च समाधानं व्याख्यानं षड्विध मतम् ॥
विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः ।
प्रयोजनञ्च पञ्चाङ्गं प्राञ्चोऽधिकरणं विदुः ॥

केचिद्दशाङ्गात्मकमधिकरणमाहुः—

सगतिर्विषयश्चैव संशयोत्थानकारणम् ।
संशयश्च प्रकारश्च तदर्था च विचारणा ॥
तस्यां फलफलित्वञ्च न्यायौ द्वौ पक्षयोर्द्वयोः ।
निर्णयस्तत्फलञ्चेति बोध्यान्यधिकृतौ दश ॥

इति भाष्यव्याख्यानाधिकरणलक्षणान्यभियुक्तैरभिहितान्युपपद्यन्तेत-

रामत्र याथार्थ्यंनेति प्रत्यक्षं भविष्यति निष्पक्षपाताक्षाणां प्रेक्षावतां प्रेक्षणे नातोऽधिकं प्रपञ्च्यते ।

## भाष्याशयवर्णनम्

इदं पुना रहस्यमवश्यमभिदध्महे । भाष्यमेतद्विशिष्टाद्वैतमतानुगामित्वेन वेदान्तशास्त्रस्य सामञ्जस्यमादधाति । विशिष्टाद्वैतमेव च मताभिमतं सूत्रकृताम् । तथा हि-"तदनन्यत्वमारम्भणशब्दादिभ्यः" ( ब्र० सू० २।१।१४ ) एतस्मिन्नधिकरणे स्थूलचिदचिद्विशिष्टस्य ब्रह्मण उपादेयजगद्रूपतां सूक्ष्मचिदचिद्विशिष्टस्य तस्यैव चोपादानकारणतामुक्त्वा शरीरशरीरिभावनिबन्धनमेव स्वरूपेणानभिन्नयोश्चेतनाचेतनयोस्तथा चेतन्येनैक्येऽपि स्वरूपेण भिन्नयोः परमात्मप्रत्यगात्मनोरपृथक्सिद्धिलक्षणस्तादात्म्यसम्बन्धः साधितः । तदेव च "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत", "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि", 'तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्' इति श्रुतिनिकरैरभिधाय 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा" "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इत्यादिभिः श्रुतिभिः सामानाधिकरण्यप्रतिपादनपुरस्सरं तादात्म्यमुपदर्शितम् । एवञ्च परजीवाचेतनानां स्वरूपेणैक्यस्य दुर्वचत्वेन शरीरशरीरिभावनिबन्धनतादात्म्यमूरीकृत्य सामानाधिकरण्यमेवात्र सूत्रहृदयम् । एवं 'नेतरोनुपपत्तेः' ( १।१।१७ ) 'अनुपपत्तेस्तु न शारीरः' ( १।२।३ ) 'न च स्मार्तमतद्धर्माभिलापात्' ( १।२।२० ) 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' ( १।२।२१ ) 'विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ' ( १।२।२३ ) 'भेदव्यपदेशात्' ( १।३।५ ) 'इतरपरामर्शात्स इति चेन्नासम्भवात्' ( १।३।४२ ) 'अधिकन्तु भेदनिर्देशात्' २।१।२२, 'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्' ( ३।४।८ ) एवमादिसूत्रनिचयैः परमात्मप्रत्यागात्मनोर्भेदस्यासकृदभिहितत्वात् । तस्मादिदमेव सूत्रकृन्मतम् । अस्मिन्नेव चामूलचूडं सङ्गच्छते कृत्स्नमपि वेदान्तशास्त्रम् ।

परमने त्वस्य वेदान्तदर्शनस्य सर्वथाऽसामञ्जस्यमेव व्यज्यते। तथा हि "अथातो ब्रह्मजिज्ञासा" इत्यादिमेन सूत्रेण जिज्ञासितस्य ब्रह्मणो 'जन्माद्यस्य यत' इति द्वितीयेन जगज्जन्मादिकारणत्वरूपं तटस्थलक्षणमभिधीयते। इदञ्च मायाशबलितस्यैव जगत्कारणत्वमिति वादिनां मायिनां मते न सङ्गच्छते। निलक्षयिषितस्य ब्रह्मणो जिज्ञासाविषयत्वाभावात्। यदि जगत्कारणत्वादिविशिष्टस्यैव ब्रह्मणो जिज्ञास्यत्वमाद्येन सूत्रेणोच्यते हन्त तर्हि निर्विशेषे शुद्धे ब्रह्मणि प्रमाणव्याहृतिर्न निवर्तते। एवं शास्त्रयोनित्वमपि सविशेषस्यैव ब्रह्मणः सम्भवति न निर्विशेषस्येत्युपक्रम एवासामञ्जस्यम्।

एवं 'नेतरोऽनुपपत्तेः' (१।१।१७) 'अनुपपत्तेस्तु न शारीरः' (१।२।३) 'न च स्मार्तमतद्धर्माभिलापात्' (१।२।२०) शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' (१।२।२१) 'विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ' (१।२।२३) 'भेदव्यपदेशात्' (१।३।५) 'इतरपरामर्शात्स इति चेन्नासम्भवात् (१।३।१८) 'सुषुप्त्युत्क्रान्त्योर्भेदेन' (१।३।४२) 'अधिकन्तु भेदनिर्देशात्' (२।१।२२) इत्याद्यनेकसूत्राणां काल्पनिकभेदाभिधायित्वेन न वस्तुस्थितिबोधकत्वम्। एवं सति 'यत्परः शब्दः स शब्दार्थः' इति सार्वभौमस्य न्यायस्योपरोधोऽपि। न ह्यस्मिन् शास्त्रे केनचिदपि सूत्रेण काल्पनिकार्थावबोधकमिदं दर्शनमिति बोध्यते।

अपिच विदुषो जीवन्मुक्तिसमनन्तरं तत्रैव ब्रह्मतादात्म्यमासादयति प्रत्यगात्मेति न तस्योत्क्रान्तिरिति तन्मतम्। तदपि ब्रह्मसूत्राननुगुणम्। न ह्येवं मुक्तिरुत्क्रान्त्यभावश्च केनापि सूत्रेण प्रतिपाद्येते। प्रत्युत तुरीयाध्यायः सर्वोऽप्युपासनादिसाधनवतो विदुषो मूर्धन्यनाड्योत्क्रम्यार्चिरादिकां सृतिमाश्रित्य देशविशेषमधिष्ठाय ब्रह्मप्राप्तिलक्षणैव मुक्तिरित्यर्थ एवादधाति सार्थकताम्। न च सगुणब्रह्मोपासकानामेवेयं हिरण्यगर्भादिलोकगमनादिरूपा क्रममुक्तिरिति साम्प्रतम्। सूत्रकारैः सगुणोपास्तिमतामिय क्रममुक्तिरिति क्वाप्यनुक्तत्वात्। तस्मादसामञ्जस्यमेव मतान्तरेऽ-

स्य वेदान्तदर्शनस्येत्यलमनेन प्रासङ्गिकेन विचारेणेति प्रकृतमनुसरामः।

इमे च श्रीमदाचार्यभगवत्पादाः आनन्दभाष्यम् उपनिषद्भाष्यम् गीताभाष्यम् वैष्णवमताब्जभास्करः श्रीरामार्चनपद्धतिश्चेतीमे ग्रन्था विश्वेषामुपकाराय विरचयाञ्चक्रुः।

तत्र—

(१) आनन्दभाष्यम्—श्रीवैष्णवानां परमनिःश्रेयसनिधानं निखिलवेदान्तार्थप्रकाशनपरम्।

(२) उपनिषद्भाष्यं—परेषां दुर्व्याख्यानेन मालिन्यमुपगतानां श्रुतीनां विशुद्धार्थप्रकाशनपरम्।

(३) गीताभाष्यम्—श्रुतिसूत्रानुसारिसुगमव्याख्यानसमन्वितं परभक्तिप्रकाशनपरम्।

(४) श्रीवैष्णवमताब्जभास्करः—भगवदुपासनारहस्यकालक्षेपाद्यभिधायकः श्रीवैष्णवैरनुष्ठेयार्थस्योपदेशकः।

अमुष्मिन् वेदान्तदर्शने द्विकद्वयभेदेन चत्वारोऽध्याया वर्तन्ते। चतुर्भिरध्यायैर्निरतिशयसुखरूपायाः परमात्मप्राप्तेः साधनमपि स्वयमेव परमात्मेति समुदितार्थं एवाभिधीयते। तत्र ब्रह्मशब्दार्थं विवृण्वता पूर्वद्विकेन ब्रह्मणो जगज्जन्मादिकारणत्वं सिद्धोपायोपेयत्वञ्चाभिधीयते। उत्तरेण द्विकेन च प्राप्यप्रापकत्वं साध्योपायोपेयत्वञ्च प्रतिपाद्यते। तत्रापि समन्वयाख्येन प्रथमेनाध्यायेन जगत्कारणत्वाभिधायिनां वाक्यानां ब्रह्मण्यन्वयोऽभिधीयते। द्वितीयेन चाविरोधाध्यायेन जगत्कारणे परस्मिन् पुंसि वेदान्तवाक्यविरोध आगमान्तरसिद्धे प्रधानवस्तुनि चाविरोध इत्येतत्रिरूप्यते। साधनाभिधेन तृतीयाध्यायेन तु ब्रह्मप्राप्तेः साधनमभिधीयते। तथा तुरीयेण फलाख्येनाध्यायेन च परप्राप्तेः फलस्वरूपं विविच्यते। इत्येवं चतुर्णामप्यध्यायानां विषयव्यवस्था वर्तते। प्रत्यध्यायञ्च चत्वारः पादास्तत्र प्रथमाध्यायस्य।

प्रथमे पादे—अस्पष्टतरजीवादिलिङ्गकानां विचारो वर्तते।
द्वितीये—पुनरस्पष्टजीवादिलिङ्गकानाम्।
तृतीये—स्पष्टजीवादिलिङ्गकानाम्।
तुरीये—स्पष्टतरजीवादिलिङ्गकानाम्।

द्वितीयाध्यायस्य प्रथमे पादे—सांख्यादिस्मृतिविरोध-न्यायविरोधाच्च प्रसक्तदोषस्य परिहारः।
द्वितीये—सांख्यादिस्मृत्यनुकूलतर्काणां वेदान्तानुसारिसत्तर्कैर्निराकरणम्।
तृतीये—वियदादीनां कार्यत्वसमर्थनम्।
चतुर्थे—इन्द्रियादीनां कार्यत्वनिरूपणम्।

तृतीयाध्यायस्य प्रथमे पादे—ब्रह्मोपासिसिद्धये जागराद्यवस्थाश्रयस्य जीवस्य दोषाणां निरूपणम्।
द्वितीये—परमपुरुषस्योभयलिङ्गत्वनिरूपणम्।
तृतीये—ब्रह्मोपासनात्मकविद्याभेदनिरूपणम्।
चतुर्थे—उपासनस्य वर्णाश्रमधर्मेतिकर्तव्यताकत्वेन प्रतिपादनम्।

एवं चतुर्थाध्यायस्य प्रथमे पादे—ब्रह्मोपासनाफलकथनाय उपासनास्वरूपनिरूपणपूर्वकं तदनुष्ठानप्रकारो विद्यामाहात्म्यञ्च विविच्यते।
द्वितीये—ब्रह्मोपासकस्योत्क्रान्तिप्रकारः।
तृतीये—अर्चिरादिगतिनिर्देशपुरस्सरमर्चिरादिनैव विदुषो ब्रह्मप्राप्तिरिति।
चतुर्थे तु—अर्चिरादिना ब्रह्मलोकं गतवतो मुक्तस्य ब्रह्मानुभवलक्षणस्य मोक्षस्य सिद्धिरिति।

एवं षोडशपादात्मिकया चतुरध्याय्या मुमुक्षोरुपादेयतयाऽवश्यकः सर्वोऽप्यर्थो विचिन्तितः। अत्रैकपञ्चाशदुत्तरपञ्चशतानि ( ५५१ ) सूत्राणि

वर्तन्ते । तत्र प्रथमेऽध्याये सप्तत्रिंशदुत्तरैकशतं (१३७) सूत्राणि । द्वितीये पञ्चपञ्चाशदुत्तरैकशतं (१५५) तृतीये त्र्यशीत्युत्तरैकशतं (१८३) चतुर्थे तु षट्सप्तति (७६) सूत्राणीति सूत्रसंख्या ज्ञेया । एवं प्रथमेऽध्याये ऽष्टत्रिंशद (३८) धिकरणानि द्वितीये षट्त्रिंशत् (३६) तृतीये चतुष्पञ्चाशत् (५४) चतुर्थे द्वात्रिंशत् (३२) इत्येव सकलनया षष्ट्युत्तरैकशत (१६०) मधिकरणानि भवन्तीति ।

अत्र च मनुजस्वभावसुलभप्रमादादस्मदीयमतिमान्द्याद्वर्णनियोजकानवधानाद्वा समागतेषु दोषेषु गुणैकपक्षपातिनो दोषज्ञान् प्रार्थयन्तोऽधस्तने पद्ये एव विनिवेदयामः सविनयम् ।

क्वेमा भाष्यगिरो गूढाः क्वाहं मन्दमतिः पुनः ।
यथाबुद्धि विशोध्यैव प्रार्थयामि विपश्चितः ॥१॥
त्रुटयोऽत्र समापन्नाः स्युरेवेति दयाचणैः ।
क्षन्तव्यास्ताः सदा सद्भिर्मानुष्यात्सम्भवन्ति हि ॥२॥

अथेदानीमन्ते स्वान्ते श्रीरामानन्दीयानामनुदिनमेधमानामुन्नतिमभिकामयमाना वयमभ्यर्थयामहे साञ्जलिबन्धं भगवद्भ्यः श्रीरामचन्द्रचरणसरसीरुहेभ्यो यत् तुष्यतु किलानेन कर्मणा स एव साकेतनिलयो देवः पुष्णातु चाहर्दिवं श्रीरामानन्दान्ववायमिति शम् ।

महामहोपाध्यायः स्वामिश्रीरघुवराचार्यः
वेदान्तकेसरिणः दर्शननिधयः
( तर्कवेदान्ततीर्थन्यायमीमांसोपाध्यायवेदान्तशिरोमणयश्च )



# महामहोपाध्याय उपाधि का प्रमाणपत्र

## SANAD

To

Mahant Shri Raguvaracharyaji,
Mahant of Shingda Math,
Porbandar State.

I hereby Confer upon you the title of Mahamahopadhyaya as a personal distinction.

Sd/Wavell

New Delhi, Viceroy of India
The 14te June, 1945.



श्रीरामानन्दसम्प्रदायकी महती विभूती

महामहोपाध्याय स्वामी श्रीरघुवराचार्यजी महाराज, वेदान्तकेसरी



पारगः सर्वशास्त्राणामग्रणी प्रतिभावताम् ।
वादेऽप्रतिभटःसोऽयं श्रीमान् रघुवरः सुधीः ॥

—संशोधकः ।

# अकारादिक्रमेण सूत्राणां सूची।

पृष्ठाङ्कः सूत्रम् अध्यायाद्यङ्कः

# अधिकरणानां सूचीपत्रम्

अथ भगवद्बादरायणप्रणीत–

# शारीरकमीमांसा सूत्राणि

## प्रथमाध्याये प्रथम पादः

अथातो ब्रह्मजिज्ञासा १। जन्माद्यस्य यतः २। शास्त्रयोनित्वात् ३। तत्तु समन्वयात् ४। ईक्षतेर्नाशब्दम् ५। गौणश्चेन्नात्मशब्दात् ६। तन्निष्ठस्य मोक्षोपदेशात् ७। हेयत्वावचनाच्च ८। प्रतिज्ञाविरोधात् ९। स्वाप्ययात् १०। गतिसामान्यात् ११। श्रुतत्वाच्च १२। आनन्दमयोऽभ्यासात् १३। विकारशब्दान्नेतिचेन्न प्राचुर्यात् १४। तद्धेतुव्यपदेशाच्च १५। मान्त्रवर्णिकमेव च गीयते १६। नेतरोनुपपत्तेः १७। भेदव्यपदेशाच्च १८। कामाच्च नानुमानापेक्षा १९। अस्मिन्नस्य च तद्योगं शास्ति २०। अन्तस्तद्धर्मोपदेशात् २१। भेदव्यपदेशाच्चान्यः २२। आकाशस्तल्लिङ्गात् ।२३। अत एव प्राणः २४। ज्योतिश्चरणाभिधानात् २५। छन्दोऽभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् २६। भूतादिपादव्यपदेशोपपत्तेश्चैवम् २७। उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् २८। प्राणस्तथाऽनुगमात् २९। न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ३०। शास्त्रदृष्ट्यातूपदेशो वामदेववत् ३१। जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ३२। इति।

## प्रथमाध्याये द्वितीयः पादः

सर्वत्र प्रसिद्धोपदेशात् १। विवक्षितगुणोपपत्तेश्च २। अनुपपत्तेस्तु न शारीरः ३। कर्मकर्तृव्यपदेशाच्च ४। शब्दविशेषात् ५। स्मृतेश्च ६। अर्भकौकस्त्वात्तद्व्यपदेशाच्चेति चेन्न निचाय्यत्वादेवं व्योमवच्च ७। सम्भो-

गप्राप्तिरिति चेन्न वैशप्यात् ८। अत्ताचराचरग्रहणात् ९। प्रकरणाच्च १०। गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ११। विशेषणाच्च १२। अन्तर उपपत्तेः १३। स्थानादिव्यपदेशाच्च १४। सुखविशिष्टाभिधानादेव च १५। अत एव च तद्ब्रह्म १६। श्रुतोपनिषत्कगत्यभिधानाच्च १७। अनवस्थितेरसम्भवाच्च नेतरः १८। अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् १९। न च स्मार्तमतद्धर्माभिलापात् २०। शारीरश्चोभयेऽपि हि भेदेनैनमधीयते २१। अदृश्यत्वादिगुणको धर्मोक्तेः २२। विशेषणभेदव्यपदेशाभ्यां च नेतरौ २३। रूपोपन्यासाच्च २४। वैश्वानरः साधारणशब्दविशेषात् २५। स्मर्यमाणमनुमानं स्यादिति २६। शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते २७। अतएव न देवताभूतञ्च २८। साक्षादप्यविरोधं जैमिनिः २९। अभिव्यक्तेरित्याश्मरथ्यः ३०। अनुस्मृतेर्बादरिः ३१। सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ३२। आमनन्ति चैनमस्मिन् ३३। इति ।

## अथ प्रथमाध्याये तृतीयः पादः

द्युभ्वाद्यायतनं स्वशब्दात् १। मुक्तोपसृप्यव्यपदेशात् २। नानुमानमतच्छब्दात् ३। प्राणभृच्च ४। भेदव्यपदेशात् ५। प्रकरणात् ६। स्थित्यदनाभ्यां च ७। भूमा संप्रसादादध्युपदेशात् ८। धर्मोपपत्तेश्च ९। अक्षरमम्बरान्तधृतेः १०। सा च प्रशासनात् ११। अन्यभावव्यावृत्तेश्च १२। ईक्षतिकर्मव्यपदेशात्सः १३। दहर उत्तरेभ्यः १४। गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गञ्च १५। धृतेश्चमहिम्नोऽस्यास्मिन्नुपलब्धेः १६। प्रसिद्धेश्च १७। इतरपरामर्शात्स इति चेन्नासम्भवात् १८। उत्तराच्चेदाविर्भूतस्वरूपस्तु १९। अन्यार्थश्च परामर्शः २०। अल्पश्रुतेरिति चेत्तदुक्तम् २१। अनुकृतेस्तस्य च २२। अपि च स्मर्यते २३। शब्दादेव प्रमितः २४। हृद्यपेक्षया तु मनुष्याधिकारत्वात् २५। तदुपर्यपि बादरायणः सम्भवात् ।२६। विरोधः कर्मणीति चेन्नानेकप्रति–

पत्तेर्दर्शनात् २७। शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् २८। अत एव च नित्यत्वम् २९। समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ३०। मध्वादिष्वसम्भवादनधिकारं जैमिनिः ३१। ज्योतिषिभावाच्च ३२। भावन्तु बादरायणोऽस्ति हि ३३। शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ३४। क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ३५। संस्कारपरामर्शात्तदभावाभिलापाच्च ३६। तदभावनिर्धारणे च प्रवृत्तेः ३७। श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ३८। कम्पनात् ३९। ज्योतिर्दर्शनात् ४०। आकाशोऽर्थान्तरत्वादिव्यपदेशात् ४१। सुषुप्त्युत्क्रान्त्योर्भेदेन ४२। पत्यादिशब्देभ्यः ४३। इति ।

## अथ प्रथमाध्याये चतुर्थः पादः

आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च १। सूक्ष्मन्तु तदर्हत्वात् २। तदधीनत्वादर्थवत् ३। ज्ञेयत्वावचनाच्च ४। वदतीति चेन्न प्राज्ञो हि प्रकरणात् ५। त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ६। महद्वच्च ७। चमसवदविशेषात् ८। ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ९। कल्पनोपदेशाच्च मध्वादिवदविरोधः १०। न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ११। प्राणादयो वाक्यशेषात् १२। ज्योतिषैकेषामसत्यन्ने १३। कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः १४। समाकर्षात् १५। जगद्वाचित्वात् १६। जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् १७। अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके १८। वाक्यान्वयात् १९। प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः २०। उत्क्रमिष्यत एवं भावादित्यौडुलोमिः २१। अवस्थितेरिति काशकृत्स्नः २२। प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् २३। अभिध्योपदेशाच्च २४। साक्षाच्चोभयाम्नानात् २५। आत्मकृतेः २६। परिणामात् २७। योनिश्च हि गीयते २८। एतेन सर्वे व्याख्याता व्याख्याताः २९। इति ।

## अथ द्वितीयाध्याये प्रथमः पादः

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् १। इतरेषाञ्चानुपलब्धेः २। एतेन योगः प्रत्युक्तः ३। न विलक्षणत्वादस्य तथात्वञ्च शब्दात् ४। अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ५। दृश्यते तु ६। असदिति चेन्न प्रतिषेधमात्रत्वात् ७। अपीतौ तद्वत्प्रसंगादसमञ्जसम् ८। न तु दृष्टान्तभावात् ९। स्वपक्षदोषाच्च १०। तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ११। एतेन शिष्टापरिग्रहा अपि व्याख्याताः १२। भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् १३। तदनन्यत्वमारम्भणशब्दादिभ्यः १४। भावे चोपलब्धेः १५। सत्त्वाच्चावरस्य १६। असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् १७। युक्तेः शब्दान्तराच्च १८। पटवच्च १९। यथा च प्राणादिः २०। इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः २१। अधिकन्तु भेदनिर्देशात् २२। अश्मादिवच्च तदनुपपत्तिः २३। उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि २४। देवादिवदपि लोके २५। कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा २६। श्रुतेस्तु शब्दमूलत्वात् २७। आत्मनि चैवं विचित्राश्चहि २८। स्वपक्षदोषाच्च २९। सर्वोपेता च तद्दर्शनात् ३०। विकरणत्वान्नेति चेत्तदुक्तम् ३१। न प्रयोजनवत्त्वात् ३२। लोकवत्तु लीलाकैवल्यम् ३३। वैषम्यनैर्घृण्येन सापेक्षत्वात्तथा हि दर्शयति ३४। न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च ३५। सर्वधर्मोपपत्तेश्च ३६। इति

## अथ द्वितीयाध्याये द्वितीयः पादः

रचनानुपपत्तेश्च नानुमानम् १। प्रवृत्तेश्च २। पयोऽम्बुवच्चेत्तत्रापि ३। व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ४। अन्यत्राभावाच्च न तृणादिवत् ५। अङ्गित्वानुपपत्तेश्च ६। पुरुषाश्मवदिति चेत्तथापि ७। अन्यथानुमितौ च ज्ञशक्तिवियोगात् ८। अभ्युपगमेऽप्यर्थाभावः ९। विप्रतिषेधाच्चासमञ्जसम् १०। महद्दीर्घवद्वा ह्रस्व-

परिमण्डलाभ्याम् ११। उभयथापि न कर्मातस्तदभावः १२। समवायाभ्युपगमाच्च साम्यादनवस्थितेः १३। नित्यमेव च भावात् १४। रूपादिमत्त्वाच्चविपर्ययोदर्शनात् १५। उभयथा च दोषात् १६। अपरिग्रहाच्चात्यन्तमनपेक्षा १७। समुदायउभयहेतुकेपि तदप्राप्तिः १८। इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावानिमित्तत्वात् १९। उत्तरोत्पादे च पूर्वनिरोधात् २०। असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा २१। प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् २२। उभयथा च दोषात् २३। आकाशे चाविशेषात् २४। अनुस्मृतेश्च २५। नासतोऽदृष्टत्वात् २६। उदासीनानामपि चैवं सिद्धिः २७। नाभाव उपलब्धेः २८। वैधर्म्याच्च न स्वप्नादिवत् २९। न भावोऽनुपलब्धेः ३०। क्षणिकत्वाच्च ३१। सर्वथा नुपपत्तेश्च ३२। नैकस्मिन्न सम्भवात् ३३। एवं चात्माकार्त्स्न्यम् ३४। न च पर्यायादप्यविरोधो विकारादिभ्यः ३५। अन्त्यावस्थितेश्चोभय नित्यत्वादविशेषः ३६। पत्युरसामञ्जस्यात् ३७। सम्बन्धानुपपत्तेश्च ३८। अधिष्ठानानुपपत्तेश्च ३९। करणवच्चेन्न भोगादिभ्यः ४०। अन्तवत्त्वमसर्वज्ञता वा ४१। उत्पत्त्यसम्भवात् ४२। न च कर्तुःकरणम् ४३। विज्ञानादिभावे वा तदप्रतिषेधः ४४। विप्रतिषेधाच्च ४५। इति।

## अथ द्वितीयाध्याये तृतीयः पादः

न वियदश्रुतेः १। अस्ति तु २। गौण्यसम्भवात् ३। शब्दाच्च ४। स्याच्चैकस्य ब्रह्मशब्दवत् ५। प्रतिज्ञाहानिरव्यतिरेकात् ६। शब्देभ्यश्च ७। यावद्विकारन्तु विभागो लोकवत् ८। एतेन मातरिश्वा व्याख्यातः ९। असम्भवस्तु सतोऽनुपपत्तेः १०। तेजोऽतस्तथाह्याह ११। आपः १२। पृथिवी १३। तदधिकाररूपशब्दान्तरेभ्यः १४। तदभिध्यानादेव तु तल्लिङ्गात्सः १५। विपर्ययेण तु क्रमोऽत उपपद्यते च १६। अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् १७। चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् १८। नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः १९। ज्ञोऽत एव २०। उत्क्रान्तिगत्यागतीनाम् २१। स्वात्मना

चोत्तरयोः २२। नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् २३। स्वशब्दोन्मानाभ्याञ्च २४। अविरोधश्चन्दनवत् २५। अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि २६। गुणाद्वाऽलोकवत् २७। व्यतिरेको गन्धवत्तथा च दर्शयति २८। पृथगुपदेशात् २९। तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ३०। यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ३१। पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ३२। नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमो-वान्यथा ३३। कर्ता शास्त्रार्थवत्त्वात् ३४। उपादानाद्विहारोपदेशाच्च ३५। व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ३६। उपलब्धिवदनियमः ३७। शक्तिविपर्ययात ३८। समाध्यभावाच्च ३९। यथा च तक्षोभयथा ४०। परात्तु तच्छ्रुतेः ४१। कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ४२। अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके। ४३। मन्त्रवर्णाच्च ४४। अपि स्मर्यते ४५। प्रकाशादिवत्तु नैवं परः ४६। स्मरन्ति च ४७। अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ४८। असन्ततेश्चाव्यतिकरः ४९। आभास एव च ५०। अदृष्टानियमात् ५१। अभिसन्ध्यादिष्वपि चैवम् ५२। प्रदेशभेदादिति चेन्नान्तर्भावात ५३। इति।

## द्वितीयाध्याये चतुर्थः पादः

तथा प्राणाः १। गौण्यसम्भवात् २। तत्प्राक् श्रुतेश्च ३। तत्पूर्वकत्वाद्वाचः ४। सप्तगतेर्विशेषितत्वाच्च ५। हस्तादयस्तु स्थितेऽतो नैवम् ६। अणवश्च ७। श्रेष्ठश्च ८। नवायुक्रिये पृथगुपदेशात् ९। चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः १०। अकरणत्वाच्च न दोषस्तथा हि दर्शयति ११। पञ्चवृत्तिर्मनोवद्व्यपदिश्यते १२। अणुश्च १३। ज्योतिराद्यधिष्ठानन्तु तदामननात् १४। प्राणवता शब्दात् १५। तस्य च नित्यत्वात् १६। त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् १७। भेदश्रुतेर्वैलक्षण्याच्च १८। संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात १९। मांसादि भौमं यथाशब्दमितरयोश्च २०। वैशेष्यात्तु तद्वादस्तद्वादः २१।

## अथ तृतीयाध्याये प्रथमः पादः

तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् १। त्र्यात्मकत्वात्तु भूयस्त्वात् २। प्राणगतेश्च ३। अग्न्यादिगतिश्रुतेरितिचेन्न भाक्तत्वात् ४। प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ५। अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ६। भाक्तं वानात्मवित्त्वात्तथा हि दर्शयति ७। कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च ८। चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ९। आनर्थक्यमितिचेन्न तदपेक्षत्वात् १०। सुकृतदुष्कृते एवेति तु बादरिः ११। अनिष्टादिकारिणामपि च श्रुतम् १२। संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् १३। स्मरन्ति च १४। अपि च सप्त १५। तत्रापि च तद्व्यापारादविरोधः १६। विद्याकर्मणोरिति तु प्रकृतत्वात् १७। न तृतीये तथोपलब्धेः १८। स्मर्यतेपि च लोके १९। दर्शनाच्च २०। तृतीयशब्दावरोधः संशोकजस्य । २१। साभाव्यापत्तिरुपपत्तेः २२। नातिचिरेण विशेषात् २३। अन्याधिष्ठिते पूर्ववदभिलापात् २४। अशुद्धमिति चेन्न शब्दात् २५। रेतः सिग्योगोऽथ २६ । योनेः शरीरम् २७। इति ।

## अथ तृतीयाध्याये द्वितीयः पादः

सन्ध्ये सृष्टिराह हि १। निर्मातारं चैके पुत्रादयश्च २ मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ३। पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ४। देहयोगाद्वा सोऽपि ५। सूचकश्च हि श्रुतेराचक्षते च तद्विदः ६। तदभावो नाडीषु तच्छ्रुतेरात्मनि च ७। अतः प्रबोधोऽस्मात् ८। स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ९। मुग्धेऽर्द्धसम्पत्तिः परिशेषात् १०। न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ११। भेदादिति चेन्न प्रत्येकमतद्वचनात् १२। अपि चैवमेके १३। अरूपवदेव हि तत्प्रधानत्वात् १४। प्रकाशवच्चावैयर्थ्यात् १५। आह च तन्मात्रम् १६। दर्शयति चाथो अपि स्मर्यते १७। अत एव चोपमा सूर्यकादिवत् १८।

अम्बुवदग्रहणात्तु न तथात्वम् १९। वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च २०। प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः २१। तदव्यक्तमाह हि २२। अपि संराधने प्रत्यक्षानुमानाभ्याम् २३। प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् २४। अतोऽनन्तेन तथा हि लिङ्गम् २५। उभयव्यपदेशात्त्वहिकुण्डलवत् २६। प्रकाशाश्रयवद्वा तेजस्त्वात् २७। पूर्ववद्वा २८। प्रतिषेधाच्च २९। परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्य ३०। सामान्यात्तु ३१। बुद्ध्यर्थः पादवत् ३२। स्थानविशेषात्प्रकाशादिवत् ३३। उपपत्तेश्च ३४। तथान्यप्रतिषेधात् ३५। अनेन सर्वगतत्वमायामशब्दादिभ्यः ३६। फलमत उपपत्तेः ३७। श्रुतत्वाच्च ३८। धर्मं जैमिनिरत एव ३९। पूर्वं तु बादरायणो हेतुव्यपदेशात् ४०। स्मर्यते च ४१।

## अथ तृतीयाध्याये तृतीयः पादः

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् १। भेदान्नेति चेदेकस्यामपि २। स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ३। दर्शयति च ४। उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ५। अन्यथात्वं शब्दादिति चेन्नाविशेषात् ६। न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ७। संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ८। व्याप्तेश्च समञ्जसम् ९। सर्वाभेदादन्यत्रेमे १०। आनन्दादयः प्रधानस्य ११। प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे १२। इतरे त्वर्थसामान्यात् १३। आध्यानाय प्रयोजनाभावात् १४। आत्मशब्दाच्च १५। आत्मगृहीतिरितरवदुत्तरात् १६। अन्वयादिति चेत्स्यादवधारणात् १७। कार्याख्यानादपूर्वम् १८। समान एवं चाभेदात् १९। सम्बन्धादेवमन्यत्रापि २०। न वा विशेषात् २१। दर्शयति च २२। सम्भृतिद्युव्याप्त्यपि चातः २३। पुरुषविद्यायामपि चेतरेषामनाम्नानात् २४। वेधाद्यर्थभेदात् २५। हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दःस्तुत्युपगानवत्तदुक्तम् २६। साम्पराये तर्तव्याभावात्तथा ह्यन्ये २७। छन्दत उभयाविरोधात् २८। गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः २९। उपपन्न-

स्तल्लक्षणार्थोपलब्धेर्लोकवत् ३०। यावदधिकारमवस्थितिराधिकारिकाणाम् ३१। अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ३२। अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ३३। इयदामननात् ३४। अन्तराभूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ३५। व्यतिहारो विशिंषन्ति हीतरवत् ३६। सैव हि सत्यादयः ३७। कामादीतरत्र तत्र चायतनादिभ्यः ३८। आदरादलोपः ३९। उपस्थितेऽतस्तद्वचनात् ४०। तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ४१। प्रदानवदेव तदुक्तम् ४२। लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ४३। पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ४४। अतिदेशाच्च ४५। विद्यैव तु निर्द्धारणाद्-दर्शनाच्च ४६। श्रुत्यादिबलीयस्त्वाच्च न बाधः ४७। अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ४८। न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ४९। परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ५०। एक आत्मनः शरीरे भावात् ५१। व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ५२। अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ५३। मंत्रादिवद्वाऽविरोधः ५४। भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ५५। नानाशब्दादिभेदात् ५६। विकल्पोऽविशिष्टफलत्वात् ५७। काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ५८। अङ्गेषु यथाश्रयभावः ५९। शिष्टेश्च ६०। समाहारात् ६१। गुणसाधारण्यश्रुतेश्च ६२। न वा तत्सहभावाश्रुतेः ६३। दर्शनाच्च ६४।

## अथ तृतीयाध्याये चतुर्थः पादः

पुरुषार्थोऽतः शब्दादिति बादरायणः १। शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः २। आचारदर्शनात् ३। तच्छ्रुतेश्च ४। समन्वारम्भणात् ५। तद्वतो विधानात् ६। नियमाच्च ७। अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ८। तुल्यन्तु दर्शनम् ९। असार्वत्रिकी १०। विभागः शतवत् ११। अध्ययनमात्रवतः १२। नाविशेषात् १३। स्तुतयेऽनुमतिर्वा १४। कामकारेण चैके १५। उपमर्दञ्च १६। ऊर्ध्वरेतस्सु च

शब्दे हि १७। परामर्शं जैमिनिरचोदनाच्चापवदति हि १८। अनुष्ठेयं वादरायणः साम्यश्रुतेः १९। विधिर्वा धारणवत् २०। स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् २१। भावशब्दाच्च २२। पारिप्लवार्था इति चेन्न विशेषितत्वात् २३। तथा चैकवाक्योपबन्धात् २४। अत एव चाग्नीन्धनाद्यनपेक्षा २५। सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् २६। शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् २७। सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् २८। अबाधाच्च २९। अपि च स्मर्यते ३०। शब्दश्चातोऽकामकारे ३१। विहितत्वाच्चाश्रमकर्मापि ३२। सहकारित्वेन च ३३। सर्वथाऽपि त एवोभयलिङ्गात् ३४। अनभिभवञ्च दर्शयति ३५। अन्तरा चापि तु तद्दृष्टेः ३६। अपि स्मर्यते ३७। विशेषानुग्रहश्च ३८। अतस्त्वितरज्ज्यायो लिङ्गाच्च ३९। तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ४०। न चाधिकारिकमपि पतनानुमानात्तदयोगात् ४१। उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ४२। बहिस्तूभयथापि स्मृतेराचाराच्च ४३। स्वामिनः फलश्रुतेरित्यात्रेयः ४४। आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ४५। सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ४६। कृत्स्नभावात्तु गृहिणोपसंहारः ४७। मौनवदितरेषामप्युपदेशात् ४८। अनाविष्कुर्वन्नन्वयात् ४९। ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ५०। एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ५१। इति।

## अथ चतुर्थाध्याये प्रथमः पादः

आवृत्तिरसकृदुपदेशात् १। लिङ्गाच्च २। आत्मेति तूपगच्छन्ति ग्राहयन्ति च ३। न प्रतीके न हि सः ४। ब्रह्मदृष्टिरुत्कर्षात् ५। आदित्यादिमतयश्चाङ्ग उपपत्तेः ६। आसीनः सम्भवात् ७। ध्यानाच्च ८। अचलत्वं चापेक्ष्य ९। स्मरन्ति च १०। यत्रैकाग्रता तत्राविशेषात् ११। आप्रायणात्तत्रापि हि दृष्टम् १२। तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ

तद्व्यपदेशात् १३। इतरस्याप्येवमसंश्लेषः पाते तु १४। अनारब्धकार्ये एव तु पूर्वे तदवधेः १५। अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् १६। अतोऽन्यापि ह्येकेषामुभयोः १७। यदेव विद्ययेति हि १८। भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते १९। इति।

## अथ चतुर्थाध्याये द्वितीयः पादः

वाङ्मनसि दर्शनाच्छब्दाच्च १। अत एव सर्वाण्यनु २। तन्मनः प्राण उत्तरात् ३। सोऽध्यक्षे तदुपगमादिभ्यः ४। भूतेषु तच्छ्रुतेः ५। नैकस्मिन् दर्शयतो हि ६। समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ७। तदापीतेः संसारव्यपदेशात् ८। सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ९। नोपमर्देनातः १०। अस्यैव चोपपत्तेरूष्मा ११। प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषा १२। स्मर्यते च १३। तानि परे तथा ह्याह १४। अविभागो वचनात् १५। तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया १६। रश्म्यनुसारी १७। निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च १८। अतश्चायनेऽपि दक्षिणे १९। योगिनः प्रति स्मर्यते स्मार्ते चैते २०। इति।

## अथ चतुर्थाध्याये तृतीयः पादः

अर्चिरादिना तत्प्रथितेः १। वायुमब्दादविशेषविशेषाभ्याम् २। तडितोऽधि वरुणः सम्बन्धात् ३। आतिवाहिकास्तल्लिङ्गात् ४। वैद्युतेनैव ततस्तच्छ्रुतेः ५। कार्यं बादरिरस्य गत्युपपत्तेः ६। विशेषितत्वाच्च ७। सामीप्यात्तु तद्व्यपदेशः ८। कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ९। स्मृतेश्च १०। परं जैमिनिर्मुख्यत्वात् ११। दर्शनाच्च १२। न च कार्ये प्रत्यभिसन्धिः १३। अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च १४। विशेषञ्च दर्शयति १५। इति।

## अथ चतुर्थाध्याये चतुर्थः पादः

सम्पद्याविर्भावः स्वेन शब्दात् १। मुक्तः प्रतिज्ञानात् २। आत्मा प्रकरणात् ३। अविभागेन दृष्टत्वात् ४। ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ५। चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ६। एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ७। सङ्कल्पादेव तच्छ्रुतेः ८। अत एव चानन्याधिपतिः ९। अभावं बादरिराह ह्येवम् १०। भावं जैमिनिर्विकल्पामननात् ११। द्वादशाहवदुभयविधं बादरायणोऽतः १२। तन्वभावे सन्ध्यवदुपपत्तेः १३। भावे जाग्रद्वत् १४। प्रदीपवदावेशस्तथा हि दर्शयति १५। स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि १६। जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च १७। प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः १८। विकारावर्ति च तथा हि स्थितिमाह १९। दर्शयतश्चैवं प्रत्यक्षानुमाने २०। भोगमात्रसाम्यलिङ्गाच्च २१। अनावृत्तिः शब्दादनावृत्तिः शब्दात् २२।

इति भगवद्बादरायणप्रणीता
शारीरकमीमांसा समाप्ता



श्रीराघवेन्द्रो विजयतेतराम् ।
श्रीवेदव्यासाय नमः । श्रीबोधायनाय नमः ।
आनन्दभाष्यकार-श्रीरामानन्दाचार्याय नमः ।
उपनिषद्भाष्यकार-पण्डितसम्राट्-स्वामिश्रीवैष्णवाचार्य-
वेदान्तपीठाचार्यप्रणीतः

# श्रीरामानन्दसिद्धान्तसारः

कुर्वे श्रीराघवं नत्वा रामानन्दं तथा गुरुम् ।
श्रीरामानन्दसिद्धान्तसारं तत्त्वाववुद्धये ॥१॥

## परब्रह्म श्रीरामः

श्रीरामभजनात् सर्वे शोका नश्यन्ति देहिनाम् ।
मुक्तिदं परमं ब्रह्म रामं वेदा वदन्ति हि ॥२॥

## विशिष्टाद्वैतमतम्

रामानन्दमतं श्रौतं विशिष्टाद्वैतनामकम् ।
अद्वैतं न मतं श्रौतं श्रौतयौक्तिकबाधतः ॥३॥
विशिष्टब्रह्मणोरैक्यं कार्यकारणसंज्ञयोः ।
मतं च वैदिकं तद्धि विशिष्टाद्वैतसंज्ञकम् ॥४॥

---

एवञ्चाखिलश्रुतिस्मृतीतिहाससामञ्जस्यादुपपत्तिबलाच्च विशिष्टाद्वैतमेवास्य मीमांसाशास्त्रस्य विषयो न केवलाद्वैतम् । (आनन्दभाष्यम्)

ईशतज्ज्ञानभिन्नं हि द्रव्यं देहतया मतम् ।
अपृथक्सिद्धिसम्बन्धः सम्मतो देहिदेहयोः ॥५॥
कल्याणगुणधामाथ दिव्यदेहो हि राघवः ।
चिदचिद्देहवैशिष्ट्याद् विशिष्टं ब्रह्म कथ्यते ॥६॥
स एव प्रलये रामः कारणं ब्रह्म कथ्यते ।
स जगद्रूपतां प्राप्तः कार्यब्रह्मतयोच्यते ॥७॥
सच्चिदानन्दरूपोऽसौ रामो दोषविवर्जितः ।
अनन्तास्तस्य रामस्य रूपदेहगुणाः स्मृताः ॥८॥
अद्भुता च परा शक्तिर्गुणा ज्ञानबलादयः ।
श्रीरामस्य श्रुता वेदे स्वाभाविका मायिकाः ॥९॥
श्रीरामो भगवान् स्वामी समाभ्यधिकवर्जितः ।
सर्वज्ञो वेदवेद्योऽथ सर्वेषां हि नियामकः ॥१०॥
जगत्कर्त्ता विभू रामः सर्वेषामीश्वरस्तथा ।
संहारकश्च सर्वस्य विश्वस्य परिपालकः ॥११॥
सर्वाराध्यश्च रामो हि सर्वकर्मफलप्रदः ।
सर्वस्य जगतो मूलं विध्यादेश्च विधायकः ॥१२॥
श्रीमद्रामस्य चाधीनं विभूतिद्वयमीरितम् ।
स्वाधीनः परमो भक्त्या भक्ताधीनश्च राघवः ॥१३॥
रामः स्वजनदोषाणां न च स्मर्त्ता कदापि हि ।
सन्तोषं परमं याति भक्तसत्कर्मलेशतः ॥१४॥

स्वयं चाधारशून्योऽपि सर्वाधारः प्रकीर्त्तितः ।
सर्वं हि स्वेच्छया रामो विदधाति दधाति च ॥१५॥
प्रलये रामचन्द्रस्य देहरूपतया मते ।
सूक्ष्मे चिदचिती नामरूपहीने प्रकीर्त्तिते ॥१६॥
प्रलयान्ते यदा रामो जगत् स्रष्टुं समीहते ।
दधाते नाम रूपं च तदा चिदचिती खलु ॥१७॥
तदानीं च सिसृक्षुश्रीजानकीनाथवाञ्छया ।
जीवप्रकृतिवाच्यौ तद्देहौ विकारमाप्नुतः ॥१८॥
नित्यं जीवस्वरूपं हि निर्विकारं मतं बुधैः ।
ततो जीवस्वभावो हि विकारित्वेन सम्मतः ॥१९॥
सङ्कोचश्च विकासश्च विकारौ जीवसंविदि ।
सम्मतौ शास्त्रमर्मज्ञैः प्राकृतदेहधारणात् ॥२०॥

जीवः

ज्ञातारो ज्ञानरूपाश्च जीवाः सर्वेऽजडा मताः ।
सर्वे चाणुप्रमाणास्तेऽमर्यादा विभवो न हि ॥२१॥
उत्क्रान्तिश्च गतिश्चेति जीवस्यात्रागतिस्तथा ।
श्रुताः श्रुतौ ततो जीवस्त्वणुरेव विभुर्न हि ॥२२॥
नाहं देहादयः किन्तुते ममेति प्रतीतितः ।
जीवा देहादिरूपा नो प्रारब्धफलभोगिनः ॥२३॥
तच्चैतन्यापृथक्सिद्धं द्रव्यं मतं हि तद्वपुः ।
प्रमेयपरिशोधिन्यां देहभेदा निरूपिताः ॥२४॥

जीवानां देहमानत्वे स्वीकृते कर्मयोगतः ।
गजदेहग्रहेऽपूर्णो काकात्मा च भवेत् किल ॥२५॥
तेषां सावयवत्वं च तत्सङ्कोचविकासयोः ।
अनित्यत्वं भवेन्नूनं जीवानां तेन हेतुना ॥२६॥
अनित्यत्वे तु जीवानां दोषद्वयं दुरुद्धरम् ।
अकृतस्यागमश्चाथ कृतस्य विप्रणाशिता ॥२७॥
दीपज्योतिरिव ज्ञानं जीवस्य व्यापकं मतम् ।
हृत्स्थो जीवोऽखिलं वेत्ति ततो देहसुखादिकम् ॥२८॥
प्रारब्धं राघवेच्छैव व्यापिका सा यतस्ततः ।
तत्र तत्र च भोगार्थं पदार्था उद्भवन्ति हि ॥२९॥
नित्याः सुखस्वरूपाश्चेश्वरस्यांशाश्च चेतनाः ।
केचित् कर्मवशाद् रङ्का भूमिपालास्तथाऽपरे ॥३०॥
'सुखमहं हि चास्वाप्समि' त्येतादृक्प्रतीतितः ।
सम्मता मतिमद्भिर्हि जीवानां सुखरूपता ॥३१॥
जीवाः सर्वे नियाम्या हि नियन्ता जानकीश्वरः ।
रामभक्तिं विना जीवैर्विश्रामो न हि लभ्यते ॥३२॥

भक्तिः

भक्तिश्च ब्रह्मणः सर्वस्वामिनः शार्ङ्गधारिणः ।
रामस्य तैलधारेवानवच्छिन्ना स्मृतिः स्मृता ॥३३॥
भक्तिर्भवाम्बुधेः सेतुः कर्मज्ञानाङ्गिनी मता ।
तस्याश्च साधनं बोध्यं विवेकादिकसप्तकम् ॥३४॥

## जीवानां मिथो भेदः

भिन्ना एव न चाभिन्ना जीवाः सर्वशरिरगाः ।
ब्रह्मदेहो मतो जीवो न च ब्रह्म कदापि सः ॥३५॥
यदि हि सर्वजीवानामैक्यमेव भवेत् तदा ।
'सुखी चैकोऽपरो दुःखी चे' ति भेदः कथं भवेत् ॥३६॥
अन्तःकरणभेदाद्धि यदि भेदो भवेदसौ ।
सौभरेरात्मनो भेदो कथं नात्र बभूव नु ॥३७॥

## जीवब्रह्मभेदः

जीवो ब्रह्मैव चेत् तस्य दुःखभोगो कथं किल ।
कथं नु जीववृन्दस्य नाना भोगा भवन्ति हि ॥३८॥
नन्वविद्यावशाद् ब्रह्म जीवतामुपयाति हि ।
मैवं प्रकाशतो यस्मात् तमश्चात्र पलायते ॥३९॥
मतं प्रकाशरूपं हि ब्रह्म च ब्रह्मवादिभिः ।
मता तमःस्वरूपा चाविद्या ह्यद्वैतिभिस्तथा ॥४०॥
प्रतिविम्बमविद्यायां जीवो हि ब्रह्मणो ननु ।
मैवं रूपादियुक्तस्य शशाङ्कादेरिवोदके ॥४१॥
जायते प्रतिविम्बं चाविद्यायां ब्रह्मणः कथम् ।
यतोऽद्वैतमतेऽरूपं मतं ब्रह्म समीरवत् ॥४२॥

## तत्त्वमासि वाक्यार्थः

नन्वात्मपरमात्मैक्यं वक्ति 'तत्त्वमसि' श्रुतिः ।
मैवं भवेत् कथं चैक्यं सर्वेशानीशतत्त्वयोः ॥४३॥

वाच्ययोर्बाधितं चैक्य लक्ष्ययोः सम्मतं ननु ।
मैवं शक्त्यैव सम्पन्नेऽर्थे जघन्या हि लक्षणा ।।४४।।
तद्वाच्योऽत्र परं ब्रह्म श्रीयुतो राघवः श्रुतौ ।
त्वद्वाच्यस्त्वच्छरीरी हि श्रोरामोऽत्र मतो बुधैः ।।।४५।।
देहाभिधायिशब्दा हि पर्यवस्यन्ति देहिनि ।
ऐक्यमुक्तं ततश्चात्र परान्तर्यामिणोः श्रुतौ ।।४६।।
जीवेशैक्यं न तद् वक्ति वाक्यं 'तत्त्वमसी' ति हि ।
जीवेशभिन्नतैवोक्ता 'भोक्ताभोग्यमि' ति श्रुतौ ।।४७।।
'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।'
उक्तो भगवताऽप्येवं जीवभिन्नः परेश्वरः ।।४८।।

जीवभेदाः

बद्धमुक्तप्रभेदेन जीवाद्विधा मता बुधैः ।
खिन्ना प्रारब्धयोगेन बद्धाः संसारिणो मताः ।।४९।।
प्रपद्य भगवन्निष्ठं विरक्तं वैष्णवं गुरुम् ।
गृहीत्वा राममन्त्रं च रामं शरणमाप्नुयात् ।।५०।।
भजेत सद्गुरुं चाथ राघवं करुणानिधिम् ।
परोपकारको भूत्वा ब्रूयात् सत्यं प्रियं तथा ।।५१।।
विसृज्य क्रोधकामादीन् साधुसेवारतो भवेत् ।
शृणुयात् कीर्त्तयेन्नित्यं जानकीजानकीश्वरौ ।।५२।।
विहाय सकलामाशां श्रीरामं पूजयेद् यदि ।
राममन्त्रं जपेच्छश्वद् ध्यानाभ्यासपरो जनः ।।५३।।

तदा सुखमयं नित्यं रामधाम स्वभासुरम् ।
प्राप्नोति तत्प्रभावेण तनुं त्यक्त्वार्ऽचिरादिना ॥५४॥
स्वप्रकाशं परेशं च सर्वथा सुखदायकम् ।
सुखेन सेवते मुक्तः सीतया सह राघवम् ॥५५॥
मरणादिभयं श्रीमद्रामधाम्नि न विद्यते ।
तारतम्यं विना रामभोगसाम्यं च तत्र हि ॥५६॥
विहाय जगदीशत्वं जगत्सृष्ट्यादिकं तथा ।
सर्वत्र गतिमाप्नोति मुक्तो नित्यं सुखं परम् ॥५७॥
नित्यं रामानुकूलत्वाद् रामसेवारतास्तथा ।
नित्या रामप्रसादेन कर्मबद्धा भवन्ति न ॥५८॥

## अचित्तत्वम्

ज्ञानशून्यमचित्तत्त्वं तस्य भेदचतुष्टयम् ।
प्रकृतिश्चाथ कालश्च शुद्धसत्त्वं च शेमुषी ॥५९॥
जडाजडविभेदाच्च तस्य भेदद्वयं पुनः ।
आद्यद्वयं जडं तत्राजडमन्त्यद्वयं मतम् ॥६०॥
जडत्वं परभास्यत्वं तद्भिन्नाऽजडता मता ।
अजडं च द्विधा बोध्यं प्रत्यक्परागविभेदतः ॥६१॥
स्वस्मै स्वभासुरं चाद्यं परस्मै भासुरं परम् ।
आद्यं जीवेश्वरावन्त्यं शुद्धसत्त्वं च शेमुषी ॥६२॥

### प्रकृतिः

जडा हि प्रकृतिर्ज्ञानशून्या च त्रिगुणाश्रया ।
प्रलये प्रकृतौ ज्ञेयाः समाः सत्त्वादयो गुणाः ॥६३॥
जायते गुणवैषम्यं श्रीरामस्य सिसृक्षया ।
विकारः प्रकृतेराद्यो जायते हि महांस्त्रिधा ॥६४॥
महत्तत्त्वविकारश्चाहङ्कारस्त्रिविधो मतः ।
सात्त्विको राजसश्चाथ तामसश्चेति संज्ञकः ॥६५॥

### इन्द्रियम्

जायन्ते सात्त्विकाच्चाथ राजससहकारतः ।
एकादशेन्द्रियाण्यत्र तान्यणूनि मतानि हि ॥६७॥
आत्मव्यापारवद् द्रव्यं देहप्राणान्यदिन्द्रियम् ।
तद्धि रजस्तमःशून्यमप्राकृतं प्रकीर्त्तिम् ॥६७॥
रजोवच्च तमोवच्च तत् प्राकृतमुदीरितम् ।
ज्ञानकर्मेन्द्रियत्वाभ्यां तद् द्विधा सम्मतं बुधैः ॥६८॥
ज्ञानप्रसृतिहेतुस्तज्ज्ञानेन्द्रियतया मतम् ।
ज्ञानेन्द्रियेतरत् तद्धि कर्मेन्द्रियं प्रकीर्त्तितम् ॥६९॥
तत्र ज्ञानेन्द्रियस्याथ भेदाः प्राज्ञैर्मताश्चषट् ।
चक्षुषा गृह्यते रूपं रसनेन रसस्तथा ॥७०॥
गृह्यते च त्वचा स्पर्शः शब्दः श्रोत्रेण तत्र हि ।
घ्राणेन गृह्यते गन्धो मनोग्राह्याः सुखादयः ॥७१॥

भेदाः कर्मेन्द्रियस्याथ पञ्चैव सम्मता बुधैः ।
उच्यते तत्र वाचा हि पाणिना क्रियते तथा ॥७२॥
पादेन गम्यते चाथोपस्थेन सुखमाप्यते ।
कर्मेन्द्रियेण लोकेऽत्र पायुना त्यज्यते मलम् ॥७३॥

## तन्मात्राणां भूतानाञ्चोत्पत्तिक्रमः

तामसाहङ्कृतेश्चाथ राजससहकारतः ।
तन्मात्रद्वारकं चात्र जायते भूतपञ्चकम् ॥७४॥
सूक्ष्मं भूतं हि तन्मात्रं पञ्च शब्दादिसंज्ञकम् ।
भूतं हि द्रव्यं खं वायुस्तेजो जलं क्षितिस्तथा ॥७५॥
तत्रेत्थं हि विवेकोऽस्ति तामसाहङ्कृतेः खलु ।
जायते शब्दतन्मात्रमाकाशं च ततः किल ॥७६॥
आकाशात् स्पर्शतन्मात्रं तस्माद्वायुस्ततोऽथ च ।
जायते रूपतन्मात्रं तेजो भूतं ततश्च हि ॥७७॥
तेजसः रसतन्मात्रं तस्मादापस्ततः खलु ।
जायते गन्धतन्मात्रं तस्मात् पृथ्वी प्रजायते ॥७८॥

## भूतानां गुणाः

तत्राकाशे गुणः शब्दः शब्दस्पर्शौ समीरणे ।
शब्दः स्पर्शश्च रूपं च तेजसो हि गुणास्त्रयः ॥७९॥
शब्दः स्पर्शश्च रूपं च रसश्चेति गुणा अपाम् ।
क्षितौ रूपरसस्पर्शशब्दगन्धा गुणा मताः ॥८०॥

इन्द्रियविषयाश्चैते त्वन्धीकुर्वन्ति देहिनम् ।
जीवा मृत्युरुजाऽऽक्रान्ता लोके विषयभोगिनः ॥८१॥
वैराग्यपूर्विका भक्तिर्जानकीजानकीशयोः ।
शास्त्रज्ञैः पुरुषैर्मृत्योर्भेषजत्वेन सम्मता ॥८२॥

## कालः

भूतादिव्यवहाराणां हेतुः कालस्त्वचिज्जडः ।
गुणत्रयविहीनः स नित्यं द्रव्यं विभुस्तथा ॥८३॥
कार्यभूतः स चानित्यः शुद्धसत्त्वे प्रभुर्न च ।
अनुरुध्यात्र कालं हि रामो जगत् करोति हि ॥८४॥

## जगतः सत्यत्वम्

परिणामो जगच्चैशः सद्वारकस्ततश्च सत् ।
न च विवर्त्तभूतं तद् विवर्त्तो न श्रुतौ श्रुतः ॥८५॥
लोके जालं यथा दृष्टमूर्णनाभिशरीरजम् ।
जगदेतन्मतं रामचिदचिद्देहजं तथा ॥८६॥
पञ्चीकरणतः शुक्तौ रजतांशाश्च सन्ति हि ।
शुक्तिरौप्यं ततः सत्यं न च मिथ्या कदापि तत् ॥८७॥
'रौप्यं न' व्यवहारस्तु शुक्त्यंशानां बहुत्वतः ।
शुक्तौ 'रौप्यमि'ति ज्ञानं भ्रमरूपं ततः किल ॥८८॥

## पञ्चीकरणम्

ईशेनैकैकभूतस्य कृतं भागद्वयं समम् ।
एकं निधाय चान्यस्य कृतं भागचतुष्टयम् ॥८९॥
स्वार्धं हित्वा परार्धेषु चैकैकं मिश्रितं पुनः ।
पञ्जीकरणतश्चैवं पञ्चभूतानि पञ्चसु ॥९०॥
सर्वत्र सर्वसत्त्वेऽपि यस्यार्धं यत्र विद्यते ।
प्रधानत्वाद्धि तत् भूतं तस्य नाम्नाऽभिधीयते ॥९१॥

## शुद्धसत्त्वम्

सत्त्वरजस्तमःशून्यं शुद्धसत्त्वं प्रकीर्त्तितम् ।
श्रुतिस्तत्र प्रमाणं हि 'त्रिपादस्यामृतं दिवि' ॥९२॥
'स्वसत्ताभासकं द्रव्यं गुणमत्वाद् विलक्षणम् ।'
इति स्मृतिप्रमाणत्वादजडं तन्मतं बुधैः ॥९३॥
तच्चानन्दमयं नित्यं नित्यधामादिनामकम् ।
पार्श्वेषूर्ध्वं मतं तच्चापरिच्छिन्नं मनीषिभिः ॥९४॥
अप्राकृतं परं धाम पुनरावृत्तिवर्जितम् ।
ब्रह्मणो नित्यमुक्तानां वासस्थानं च तत् स्मृतम् ॥९५॥
तद् भवतीशसङ्कल्पान्मुक्तदेहादिकं खलु ।
ज्ञानाद् भिन्नं च तत् तत्त्वं प्रकाशाद् विपर्ययविना ॥९६
जीवादीशाच्च भिन्नं तज्ज्ञानशून्यत्वहेतुना ।
कालप्रकृतिभिन्न तदजडत्वादिहेतुतः ॥९७॥

## ६ संभूतज्ञानम्

ज्ञानमर्थप्रकाशस्तन्नित्यं द्रव्यं तथाऽजडम् ।
यथा प्रभा तथा ज्ञानं विभुद्रव्यगुणात्मकम् ॥९८॥
अचिच्चेतनधर्मस्तद् बद्धानां तु तिरोहितम् ।
तन्नष्टादिप्रतीतिस्तु तत्सङ्कोचादिहेतुतः ॥९९॥
क्षरत्यन्तःस्थितं लोके दृतेः पादाद् यथोदकम् ।
निःसृत्येन्द्रियतो ज्ञानमर्थेन युज्यते तथा ॥१००॥
अहिकुण्डलवज्ज्ञाने सङ्कोचश्च विकासिता ।
नित्यात्मनित्यधर्मत्वाज्ज्ञानस्य नित्यता मता ॥१०१॥
स्वापादयश्च सिध्यन्ति यत् तमः प्रतिबन्धकम् ।
स्वीकृता हि बुधैर्ज्ञाने स्वत एव प्रमाणता ॥१०२॥
ज्ञानं विभुपराक्त्वाभ्यां जीवाद्भिन्नं बुधैर्मतम् ।
विभुत्वेऽपीशतो भिन्नं ज्ञानं पराक्त्वहेतुना ॥१०३॥
भक्तिश्चाथ प्रपत्तिश्च ज्ञानावस्थे हि मुक्तिदे ।
भक्तिर्विवेचिता पूर्वं प्रपत्तिरथ कथ्यते ॥१०४॥

### प्रपत्तिः

प्रपत्तिर्न्यासविद्या सा रामायात्मसमर्पणम् ।
आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् ॥१०५॥
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ।
कार्पण्यमिति विद्वद्भिर्न्यासेऽङ्गपञ्चकं मतम् ॥१०॥

एतद्देहावसाने हि न्यासो मुक्तिप्रदायकः ।
शरणागतिवाच्योऽसौ कर्त्तव्यः सकृदेव हि ॥१०७॥
आर्त्तानां तु मतो न्यासः प्रारब्धस्यापि नाशकः ।
विद्वद्भिः सम्मतो न्यासेऽधिकारः सकलात्मनाम् ॥१०८॥

द्रव्यषट्कम् ।

कालप्रकृतिजीवेशाः शुद्धसत्वं च शेमुषी ।
इत्युपादानरूपाणि षड् द्रव्याणि मतानि हि ॥१०९॥

अद्रव्यदशकम्

सत्त्वं रजस्तमश्चाथ पञ्च शब्दादयो गुणाः ।
शक्तिस्तथैव संयोगोऽद्रव्याणि दशधा खलु ॥११०॥
ज्ञानस्योत्पादकं सत्त्वं प्रवृत्त्युत्पादकं रजः ।
प्रमादमोहयोश्चात्र कारणं हि मतं तमः ॥१११॥
रूपं चक्षुषः शब्दः श्रोत्रस्य विषयो मतः ।
रसनस्य रसः स्पर्शस्त्वचो घ्राणस्य गन्धकः ॥११२॥
हेतुतायास्तु हेतोर्हि शक्तिर्निर्वाहिका मता ।
संयुक्तव्यवहारस्य संयोगः कारणं किल ॥११३॥

प्रमाणभेदाः

प्रमाणं त्रिविधं बोध्यं प्रमेयाणां प्रसाधकम् ।
प्रत्यक्षमनुमानं च शब्दश्चेति विभेदतः ॥११४॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ (गी० १५।१७)
जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलम् (वा०रा०यु०)
प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ।
परमात्मा च सर्वेषामाधारः परमेश्वरः ।
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥ (वि०पु० ६।४।३८-३९)

"ईक्षतेर्नाशब्दम्" (ब्र०सू० १।१।५) "तदनन्यत्वमारम्भणशब्दादिभ्यः" (ब्र०सू०२।१।१५) "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" । (ब्र०सू०१।४।२३) इत्याद्याः । 'ईक्षतेर्नाशब्द' मित्यत्राशब्दप्रतिपाद्यस्य प्रधानस्य जगत्कारणत्वं निरस्य सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मण एव तत्त्वमीक्षणकर्तृत्वेन हेतुना सम्यगुपपादितम् । एवञ्च सूक्ष्मचिदचिद्विशिष्टेन ब्रह्मणा सह स्थूलचिदचिद्विशिष्टस्य प्रपञ्चस्याभेदस्तदनन्यत्वमारम्भणशब्दादिभ्य इत्यादावभिहितम् । "सदेव सोम्येदमग्रआसीदेकमेवाद्वितीयम्" । (छा० ६।२।१) इत्यत्रेदंशब्दस्यापि चिदचिद्विशिष्टपरत्वमेव । अतएव च सदिदं पदयोर्मुख्यमेव सामानाधिकरण्यम् । एवं "सर्वं खल्विदं ब्रह्म" (छा० ३।१४।१) "तत्वमसि" (छा०६।८।१६) इत्यादावपि सर्वादिपदानां तत्तच्छरीरकपरमात्मपरत्वात्सर्वादिपदब्रह्मादिपदयोः सामानाधिकरण्यं मुख्यमेव । शरीराभिधायिपदानां शरीरिणि शक्तिरितिसिद्धान्तात् । न च स्थाणुःपुरुष इतिवद्बाधार्थं सामानाधिकरण्यं तथा च जित विवर्तवादेनेति वाच्यम् । 'सदेवसोम्येदमग्रे' इत्यादिश्रुत्या 'अग्रे' इति निषेधविरोधात् । एवञ्च सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मणः स्थूलचिदचिद्विशिष्टम्प्रत्युपादानत्वमुपपन्नम् । भाव्यवस्थाविशेषतः प्रागवस्थाश्रयत्वमेवोपादानत्वम् । एवञ्चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञापि सम्यगुपपन्ना भवति । भवन्मते तु ब्रह्मणोऽतिरिक्तस्य कस्यचिदपि वस्तुनोऽभावात् "येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं स्या"

दित्यादौ कस्य श्रुतेन किमश्रुतं श्रुतं स्यात्। द्वितीयस्यासद्भावादितीयमपि प्रतिज्ञा निरालम्बना स्यात्। यदि चाधिष्ठानभूतायाश्चिच्छक्तेः पारमार्थिकत्वेन परिज्ञाते तदध्यस्तस्याखिलप्रपञ्चस्य मिथ्यात्वेनावगतिर्भवत्येवेत्युच्यते, हन्त! तर्हि परिज्ञानप्रयोजनमेव मन्दफलकम्। पारमार्थिकमिथ्यात्वपदयोः श्रुतिविरुद्धयोरध्याहारः। दृष्टान्तानुपपत्तिश्च स्पष्टैव। तथा सत्येकेन शुक्तिशकलेन सर्वं रजताभ्रकादिकं यथा वा सोम्यैकया रज्ज्वा सर्वं सर्पभूदलनाम्बुधारादिकं विज्ञातं स्यादित्येव ब्रूयात्। यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादित्यादि दृष्टान्तनये तु परिणामवाद एव संगच्छत इति सुधिय एव विभावयन्तु।

न चैवमभेदनिरासे श्रुतिव्याकोपः "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" (छा० ८।३।४) इतिच्छान्दोग्ये दहरविद्यायां–"स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयते नहास्योद्ग्रहणायैव स्याद्यतो यतस्त्वाददीत लवणमेवैवं वा अरे इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीति" (बृ० २।४।१२) "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" (मु० ३।१।३) "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपविमुक्तः परात्परं पुरुषमुपैति दिव्यम् (मु० ३।२।८) ब्रह्मविद्ब्रह्मैव भवति" (मु० ३।२।६) इत्यादावसकृत्तथैव प्रतिपादितत्वादितिवाच्यम्। अभेदवादस्योदाहृतश्रुत्यर्थास्पृष्टत्वात्। तत्रच मुक्त्यवस्थैव प्रतिपाद्यते। परं ज्योतिः परमात्मानमुपसम्पद्य याथार्थ्येनावगम्य स्वेनानन्दरूपेण सायुज्यं समवाप्य तिष्ठतीति प्रथमश्रुत्यर्थः। द्वितीयायास्तु विज्ञानघनो जीवः पाञ्चभौतिकं देहम्परित्यज्य सर्वाधारे परमात्मनि विनश्यति लीनो भवति देवादिनामरूपपरित्यागादित्यर्थः। अत्र दृष्टान्तः, "स यथा सैन्धवखिल्य" इत्यादिः। सैन्धवखिल्यो लवणपिण्ड एकरूपताम्भजत। नहि रूपतः

पार्थक्यं दृश्यते परमादितो मध्यतोन्तत आचमने तु रसतो वैधर्म्यं ज्ञायत एव । एतदुक्तम्भवति । यथा सैन्धवघन उदके प्रास्तस्तत्र लयमुपगच्छति समानाकारतया च पार्थक्येन ग्रहणं न भवति परं परिमाणविशेषेण रसविशेषेण च शक्यत एव विवेक्तुं तथा ब्रह्मलीनोपीति तात्पर्यम् । अत एव "निरञ्जनः परमं साम्यमुपैती" त्यादौ भेदघटितं साम्यमेवाभिहितम् । न केवलं साम्यमात्रमपितु परमं साम्यमित्युक्तम् । अतिशयभेदद्योतनार्थं च परमेण विशिष्यते । नदीसमुद्रदृष्टान्तेऽपि नामरूपभेदाभाव एव विवक्षितः । तत्रापामाधिक्यं परं केन निवार्यते । एवञ्च भवदभिमताभेदे दृष्टान्त एव नास्तीति सिद्धम् । तस्मात्सत्यकामत्वसत्यसंकल्पत्वादिदिव्यकल्याणगुणविशिष्टस्य सविशेषब्रह्मण एवात्र शारीरकमीमांसाशास्त्रे जिज्ञासाऽभिमता सूत्रकृतामिति सर्वं समञ्जसम् ।

## ❀ अथ जन्माद्यधिकरणम् ॥ २ ॥

ब्रह्मप्राप्तिकामस्य मुमुक्षोर्ब्रह्मजिज्ञासनमेव युक्तन्तत्र तद्विषयीभूतं ब्रह्म निर्गुणं सगुणं वोतोभयविधं श्रुतिप्रतिपाद्यमेकमेवेतिविशये (मीमांसकानां धर्मजिज्ञासायाः सम्मतत्त्वात्, सांख्यवैशेषिकाणाञ्च प्रकृतिपुरुषद्रव्यगुणादिपदार्थतत्त्वज्ञानस्यात्मतत्त्वज्ञानद्वारा मोक्षसाधनत्वाभिमतत्त्वात्तेषां ब्रह्मजिज्ञासायाः प्रयोजनत्वाभावेन तन्मतस्य पूर्वपक्षत्वानुपपत्तेः) अस्मिञ्छारीरकमीमांसाशास्त्रे जगत्कारणसगुणब्रह्मजिज्ञासायाः सिद्धान्तितत्वात्तद्दृढीकरणकामो मुनिस्तावदादौ ब्रह्मस्वरूपं लिलक्षयिषुर्विरचयाञ्चकार द्वितीयं सूत्रम् । तत्र मुमुक्षुजिज्ञास्यस्य ब्रह्मणो लक्षणमसम्भवि । चिदचितोऽतिरिक्तस्य वस्तुनोऽसिद्धत्वात्, वेदान्तवाक्यानाञ्च कर्मस्वरूपविवेचनायामेवोपक्षीणत्वादित्याशङ्कायामाह--

---

❀ 'यतो वे'त्यादिके वाक्ये जगज्जन्मादिकं खलु । ब्राह्मणो लक्षणं कच्चित् सम्भवत्यथवा न हि ? ॥१०६॥ अन्त्यः पक्षः समीचीनोऽनियतत्वेन हेतुना । ईश्वरे च यतो नास्ति प्रमाणान्तरवेद्यता ॥१०७॥ ब्रह्मभेद

## जन्माद्यस्य यतः १।१।२

तैत्तिरीये श्रूयते "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशंति तद्विजिज्ञासस्व तद्ब्रह्मेति" श्रुतिरियं ब्रह्मणो लक्षणविधयाऽभिधातुमीष्टे न वेति विषयस्तत्र च पूर्वः पक्षः, ब्रह्मणः स्वावधिकोत्कृष्टत्वाभाववत्तयाऽऽसाधारणधर्मवत्तया स्वसादृश्यवदभावेन "न तत्समश्चाभ्यधिकश्च दृश्यते" (श्वे० ६।८) इत्यादिश्रुतिशतैरुपवर्णनात्तादृग्धनिस्समाभ्यधिकस्य कस्यचिदपि वस्तुनोऽसिद्धतया तस्य लक्षणतः प्रतिपत्तुमशक्यतया च तादृशवस्तुप्रतिपादने वेदान्तानाम्प्रामाण्यासम्भवेन तज्जिज्ञासनमसङ्गतम् । यतो वेत्यादिश्रुतिसमधिगतजगज्जन्मादिकारणत्वरूपधर्म्मणाञ्च नानात्वाद्धर्मिभेदोऽपि दुष्परिहरः । इतरव्यावृत्तिविशिष्टवस्तुबोधकत्वमेव लक्षणत्वम् । तच्चोपलक्षणविधया वा विशेषणविधया वेत्यन्यदेतत् । प्रकृते तु त्वदुक्तरीत्या "यतो वा इमानी" त्यादिश्रुतिर्न कयापि रीत्या ब्रह्मणो लक्षणमभिधाय प्रमाणतामास्थातुमर्हतीत्यर्थवादित्वमेव तच्छ्रुतेः स्यात् । किञ्च वेदान्तेषु निर्विशेषमेव ब्रह्म प्रतिपाद्यते । तथाहि-"अथ परा यया तदक्षरमधिगम्यते" । (मु० १।१।५) "यत्तदेद्रश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं तद्भूतयोनिम्परिपश्यन्ति धीराः" (मु० १।१।६) "यथोर्णनाभिस्सृजते गृह्णते च" (मु० १।१।७) "यथा पृथिव्यामोषधयः सम्भवन्ति, यथा सतः पुरुषात्केशलोमानि तथाक्षरात्सम्भवतीह विश्वम्" (मु० १।१।८) "तस्मादेतद्ब्रह्मनामरूपमन्नञ्च जायते" "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।' खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" (मु० २।१।३) इत्यादि

---

प्रसवितस्तद् विशेषणबहुत्वतः । विशेषयति यत्तद्धि विशेषणतया मतम् ॥१०८॥ 'वासस्वी कुण्डली छत्री पार्थिवो'ऽत्रान्यमानतः । ऐक्यस्यावगमस्तस्मान्नास्ति भेदस्य सम्भवः ॥१०६॥ तस्मान्न कारणत्वादि ब्रह्मणो

श्रुतिशतप्रतिपाद्यं निर्गुणं ब्रह्म। यत्र चराचरञ्जगदध्यस्तमस्ति। यच्चराचरात्मकजगत्कल्पनाधिष्ठानं सर्पकल्पनाधिष्ठानरज्जुवत्तन्निर्गुणम्ब्रह्म जिज्ञास्यमित्यतो जगतो ब्रह्मण्यध्यस्तत्वज्ञानायाध्यासस्वरूपं प्राग्विवेचनीयम्। तत्राहुः। युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिरित्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासस्तद्विपर्ययेण विषयिणस्तद्धर्माणाञ्च विषयेऽध्यासो मिथ्येति भवितुं युक्तम्। तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराऽविवेकेनात्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्याहमिदमिति ममेदमिति च नैसर्गिकोऽयं लोकव्यवहारः। आह कोऽयमध्यासो नामेति ? उच्यते। स्मृतिरूपः परत्र पूर्वदृष्टावभास इति। अस्यार्थः। परत्र रज्जुशुक्तिकादिषु पूर्वदृष्टानां सर्परजतादीनां योऽवभासः सोऽध्यास इति संक्षिप्तार्थः। ख्यात्यन्तरवादिनां समेषां तान्त्रिकाणामप्यस्मिन्नेवार्थे पर्यवसानमिति मन्तव्यम्। एवञ्च युक्तमेवोक्तलक्षणस्याध्यासस्य सर्वतन्त्रसिद्धान्तत्वम्। नचैकान्तोस्याध्यासस्य सत्त्वमेवेष्टव्यम्। उत्तरकालिकबाधदर्शनात्। अन्यत्र स्थितस्य सत्यभूतस्य रजतादेरत्राभानत्वाद्बाधो युज्यत एवेति तत्त्वम्। नचासत्त्वमप्यपरोक्षानुभवविषयतया च प्रवृत्त्यनुपपत्तेः। नचैकस्य सदसत्त्वं परस्परविरोधात् अतस्तस्यानिर्वचनीयत्वमेवेति सिद्धम्। स चायमध्यासो द्विविधस्तन्मतावलम्बिभिर्वर्णितः। प्रथमः परत्र परावभास इत्येल्लक्षणोऽध्यासो ब्रह्मणि सर्वचराचरजगदध्यस्तत्वबोधनाय स्वीकृतः। द्वितीयस्तु अतस्मिंस्तद्बुद्धिरित्येतल्लक्षणः प्रत्यगात्मनि ब्राह्मणादिदेहेन्द्रियाद्यध्यास-

---

लक्षणं भवेत्। किन्तूपलक्षणत्वेन जगतज्जन्मादिकञ्च तत् ॥११०॥ सम्भवेत् किन्तु नैतच्च शाखाग्रेऽत्र विधुर्यथा। ज्ञाताकारस्तथेशे न, शाप्याकारोऽपि यन्नहि ॥१११॥ शास्त्रातिरिक्तमानागोचरता रामवे

बोधनाय स्वीकृत इति । सचायमध्यासः सर्वथाऽक्षम एवाद्वैतमुपपादयितुम् । तथाहि-सद्युक्त्या विमृश्यमानेन चानेनाध्यासेन न जीवानां न वा प्रकृतितत्कार्याणां देहेन्द्रियादीनां शुक्तिकाकल्पितरजतवद्रज्जुकल्पितसर्पवच्च ब्रह्मणि कल्पितत्वेन मिथ्यात्वमुपपद्यते एतच्चानात्मनि देहादावात्मबुद्धिर्याऽहं ब्राह्मणोऽहं क्षत्रिय इतीदृशी सैवाविद्येति तत्प्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इत्येवमादि तदीयवचनैरवगम्यते । किन्तु तान्यपि च जगन्मिथ्यात्वसाधकब्रह्मात्मैकत्वबुद्धेरेव मिथ्यात्वमवगमयन्ति । तथाहि-स्मृतिरूपः परत्र पूर्वदृष्टावभास इत्युपक्रमाभिहिताध्यासलक्षणस्यायमर्थः । परत्रेत्युक्ते परस्येत्यार्थिकम् । परत्र परस्यावभासोऽध्यासः । एतदुपपादकतया स्मृतिरूपत्वं तत्साधनार्थंच पूर्वदृष्टत्वमुपात्तम् । अवभासनमवभासः । परस्य रजतसर्पादेः परत्र शुक्तिरज्ज्वादिष्ववभासः परावभासः । स्मर्यत इति स्मृतिः स्मर्यमाणोर्थः । "भावे" (पा० ३।३।१८) "अकर्तरि च कारके संज्ञायाम्" (पा० ३।३।१९) इति सूत्रद्वयमधिकृत्य "स्त्रियां क्तिन्" (पा० ३।३।९४) इतिसूत्रेण भावे कर्तृव्यतिरिक्ते च कर्मादौ कारके संज्ञायामसंज्ञायां क्तिन्विधानात् । "अकर्तरि चेति" (पा० ३।३।१९ चकारस्य संज्ञाव्यभिचारार्थत्वाङ्गीकारात् । स्मर्यमाणस्य रजतसर्पादेः रूपमिव रूपमस्येति स्मृतिरूपः शुक्तिरज्ज्वादौ स्मर्यमाणो यो रजतसर्पादिरूपोऽर्थस्तस्य रूपमिव रूपमस्य ब्रह्मणि जगदध्यासस्येति स्मृतिरूपोऽन्यत्र पूर्वदृष्टस्य रजतसर्पादेर्पदार्थस्य यथा शुक्तिरज्ज्वादाववभासो भवति शुक्तिरज्ज्वावच्छिन्नाज्ञानवताम् न तत्र वस्तुतो रजतसर्पादिरस्ति तथा ब्रह्मण्यधिष्ठाने चराचरस्य जगतोऽवभासमात्रं भवति । तत्स्वरूपज्ञानविधुराणामित्यधिष्ठाने ब्रह्मण्यारोप्यस्य जगतोऽत्यन्ताभाव एव दर्शितो भवति । एवञ्च भ्रमदशायामप्रतीयमानत्वे सत्यारोप्यस्याश्रयत्वमधिष्ठानत्वं यथा

---

यतः । 'सत्यं ज्ञानमनन्तञ्चे'ति ज्ञाताकारता श्रुतौ ॥११२॥ इति चेन्न तथा धर्मिभेदो धर्मविभेदता । स्वीकृता यदि सत्यादेश्चोपलक्षणता तदा ॥११३॥ अनवस्था भवेन्नूनं प्राग्रूपस्योपपत्तये । अन्यस्य लक्षणस्या-

शुक्तिरज्जू रजतसर्पयोरधिष्ठानमित्यधिष्ठानलक्षणं दृष्टान्ते साङ्गत्य-मुपैति । प्रकृते त्वारोप्यस्य जगतः पूर्वमध्यासादसत्वाद्ब्रह्मणोऽधिष्ठा-नत्वानुपपत्तिरिति स्पष्टम् । एतदुक्तम्भवति । पूर्वदृष्टस्य रजत-सर्पादेरवभासः शुक्तिरज्ज्वादौ तत्र रजतसर्पादेः सत्यत्वं शुक्तिरज्ज्वो-स्तदवभासस्य मिथ्यात्वञ्च निर्बाधम् । अन्यथा तयोरसत्ययोरन्यत्राप्यव-भासानुपपत्तेरित्यध्यासवादासिद्धयाद्वैतासिद्धिः ।परत्र परावभास इत्येता-वन्मात्रमेवाध्यासलक्षणमिति चेत्तर्हि परशब्दवाच्ययोः शुक्तिरजतयोरिव ब्रह्मजगतोरुभयोः सत्यत्वमेवापन्नमन्यथा परस्य मिथ्यात्वाङ्गीकारे तदव-भासवचनानुपपत्तेरध्यासवादासिद्धयाऽद्वैतासिद्धिः । किम्बहुनोक्तेन, वेदशास्त्राणां सर्वेषां ब्रह्मण्यध्यस्तत्वेन मिथ्यात्वकथनमन्तरेण ब्रह्मणो-ऽद्वैतत्वासिद्धिः । तेषां मिथ्यात्वस्वीकारे मिथ्याभूतैर्वेदान्तवाक्यैस्तत्त्व-मस्यादिभिस्साधितस्य ब्रह्मण्यद्वैतस्य मिथ्यात्वोपपत्त्या ब्रह्मणोपि मिथ्या-त्वोपपादकोऽयमद्वैतसाधकोऽध्यासोऽनादरणीय इति ।

किञ्च जगन्मिथ्यात्वसाधनसमर्थस्याध्यासस्य परैरङ्गीकृतस्य कर्तृत्वं ब्रह्मणो जीवानां वा ? नाद्यः । ब्रह्मणस्तत्कर्तृत्वे तस्याधिष्ठानत्वा-नुपपत्तिरजत्वापत्त्या संसारित्वापत्तिश्चानिवार्या स्यात् । न द्वितीयः । जीवानां ब्रह्मण्यध्यस्तत्वेन तस्मिन्नेव ब्रह्मणि जगदध्यासस्य कर्तृत्वानुपपत्त्या संसारित्वानुपपत्तेः । नचोभयोस्तदितिवाच्यम् । दृष्टान्तासिद्धेः । तथाहि-यथा शुक्तिकायां रजतमध्यस्तं तत्र न रजतशुक्तिकयोरुभयोरन्यतरस्य वा तत्कर्तृत्वं, किन्तु तदन्येषां तत्र भ्रान्तिमतां मनुष्याणामेव । एवं रज्जौ सर्पाध्यासस्य कर्तृत्वं नाधिष्ठानभूतायाः रज्जोर्नचाध्यस्तस्य सर्पस्योप-पद्यते । उपपद्यते चान्येषां भ्रान्तिमतां प्राणिनाम् । तथाधिष्ठाने ब्रह्मणि सर्वं चराचरात्मकं जगदध्यस्तमित्यत्रापि नाधिष्ठानभूतस्य ब्रह्मणस्त-

---

पेक्षणादेतद्विचिन्त्यताम् ॥११४॥ 'यतो वे'त्याद्यपेक्षायां स्यादन्योन्या-श्रयो ध्रुवम् । सर्वथाऽनुपपन्नः स्याज् ज्ञाप्याकारस्तथापि यत् ॥११५॥ ब्रह्मणि निर्विशेषे तात्पर्यं श्रुतिशिरोगिराम् । उच्यते चात्र जन्मादेः

त्कल्पितस्य जगतो जीवानां वाध्यासकर्तृत्वमुपपद्यते न वा भ्रान्तिहेतुकः संसार उपपद्यते। एतदध्यासकर्तृत्वादिकं ब्रह्मणि जगज्जीवभ्रान्तिमतां ब्रह्मजगज्जीवभिन्नानामेव सम्भवति। न चैतादृशा ब्रह्मतदध्यस्तजगज्जीव-भिन्नाः केऽप्युपलभ्यन्ते येन दृष्टान्तदार्ष्टान्तिकयोरुभयोरपि सामञ्जस्यं निर्वहेदित्यत्र संक्षेपः।

स्यादेवम्। नास्माभिस्तल्लक्षणोऽध्यासः सिद्धान्ततयाऽभ्युपेयते परमतस्मिंस्तद्बुद्धिरित्युक्तलक्षण एव। अतस्मिन्ननात्मनि देहेन्द्रियादौ तद्बुद्धिरात्मबुद्धिरहं ब्राह्मणक्षत्रियादिकः स्थूलः कृशः गौरो मूढः काणोऽन्धो बधिरो गच्छामि श्रोता वक्ता द्रष्टा कर्त्ता भोक्ता इत्येवमादिरूपाऽनात्म-न्यात्मबुद्धि। सैवाऽध्यासपदवाच्या अयमेवाध्यासरे दथार्थो लोकशास्त्रप्र-सिद्धश्चास्माभिरङ्गीक्रियत इति तदपि तुच्छम्। स्वोदीरितग्रन्थविरुद्धत्वात् स्वाभिमतार्थविरुद्धार्थोपस्थापकत्वाच्च। तथाहि अध्यासेनाऽनेन जीवानाम्प्र-कृतेस्तत्कार्यभूतानां देहेन्द्रियादीनाञ्च नित्यत्वमेव साध्यते तदीयग्रन्थस्थतत्प्र-करणोपसंहारस्वारस्यात्। तत्र हि–एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्ष इत्यनेनाध्या-सस्यानाद्यनन्तत्वोक्त्याऽऽद्यन्तरहितत्वेनाध्यासस्य नित्यत्वज्ञापनात्। एवं "अजामेकाम्" "अजो ह्येकः" (श्वे० ४।५।) इतिप्रकृतिजीवयोरजत्व-श्रुत्याऽनादित्वेन नित्यत्वोपपत्तेः। "नित्यः सर्वगतस्थाणुरचलोऽयं सना-तनः" (गी० २।१४) "प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि" (गी० १३।१९) इति भगवताऽपि जीवानाम्प्रकृतेश्च नित्यत्व-सनातनत्वानादित्वबोधनाच्च नानेन स्वेष्टसिद्धिः। प्रत्युताऽनात्म-न्यात्मबुद्धिमात्रस्य मिथ्यात्वसाधकतयाऽयमध्यासो न ब्रह्मणोऽद्वैतत्व-साधकः। 'अपि त्वात्माऽनात्मनोर्जीवदेहयोरन्योन्याध्यासपर एवेति सिद्धम्

---

प्रपञ्चस्यतया खलु ॥११६॥ यद्यपि नास्ति सम्बन्धः सर्वेश्वरे तथापि च। लक्षणञ्च तटस्थं तद् भवेदेतद्विनिश्चयः ॥११७॥ लक्षणविषया या च जिज्ञासा सम्मता किल। तस्याः प्रयोजकज्ञानविषयाकार एव हि

नन्वत्र मदीयसिद्धान्तग्रन्थे प्रत्यगात्मपदेन ब्रह्मोच्यते तत्र च देहेन्द्रियादीनामध्यस्तत्वेन ब्रह्मणोऽद्वैतत्वं सिद्धयतीति चेन्न । जीवस्य चेतनात्मकस्याचेतनदेहेन्द्रियादिपदवाच्यत्वाऽनुपपत्त्या स केन शब्देनोच्यते ? अनात्मन्यात्मबुद्धिरेव जीव इति चेन्न । तस्याः प्रकृतिकार्यत्वेनाऽचेतनरूपायाश्चेतनजीववाचकत्वानुपपत्तेः । न च तत्र ग्रन्थे प्रत्यगात्मपदेन जीव एव गृह्यत इति वाच्यम् । एवं सत्यधिष्ठानत्वेन तस्याध्यास्तत्वाऽसिद्धेः । कल्पितत्वानुपपत्त्या च ब्रह्मव्यतिरिक्तस्य तस्यापि सत्त्वेनाद्वैतासिद्धिः । एवञ्च शुक्तौ रजताऽध्यासवद्ब्रह्मणि जगदध्यस्तमस्तीत्ययम्पक्षः कथमपि नोपपद्यते निरुक्तरीत्या ब्रह्मजीवयोरन्यतरस्याप्युक्ताध्यासकर्तृत्वानुपपत्त्या तत्कर्त्रभावेन तदसिद्धेः ।

एतेनाद्वैतसाधनाय कल्पितस्य ब्रह्मणि जीवभावकल्पितत्वार्थकस्याऽध्यासवादस्य निरासेन तन्नान्तरीयकतयाऽद्वैतसाधनाय कल्पिता विवर्तादिवादा अपि निरस्ता वेदनीयाः । तथा च तान्वादानाश्रित्य श्रुतिस्मृतिसूत्राणामानर्थक्यसम्पादनेनाऽद्वैतवादस्य निर्मूलत्वमेवेति ।

किञ्चैतन्मते जीवभावस्यारोपितत्वेन मिथ्यात्वे तद्भुक्तिमुक्त्युपायबोधकानां शास्त्राणां मिथ्यालापकत्वाऽपत्तिः इमानि सच्छास्त्राणि सृष्ट्यादीनि च परमात्मकर्माणि सर्वथोपयन्ति सार्थकतां जीवानां तत्कर्मणां प्रकृतेश्चानाद्यनन्तत्वपक्ष इति तथैव तत्सामञ्जस्यायावश्यमभ्युपेयम् अद्वैतवादिमते तु परमपुरुषकर्तृकसृष्ट्यादिकर्मणां वेदान्तादिसच्छास्त्राणां गुरूपदेशस्य चैकान्ततो नैरर्थक्यमेवेति स्पष्टम् ।

अपि चास्याऽध्यासस्यासम्भवोऽपि सुतराम् । तथाहि "सदेव सोम्येदमग्र" (छा० ६।२।१) इत्यादि श्रुतेरद्वितीयं स्वसजातीयविजातीय-

---

॥११८॥ ज्ञाताकारस्तमादाय कच्छङ्गः ? इति पृच्छयते । मुमुक्षूपास्यताज्ञाननिमित्तत्वेन हेतुना ॥११९॥ प्रश्नस्य भार्गवस्यात्र ज्ञाताकारश्च वर्त्तते । निरतिशयतत्त्वं यज्ज्ञानस्य विषये ततः ॥१२०॥ ज्ञाप्याकारोऽपि

स्वगतभेदशून्यम्ब्रह्म वाऽग्र आसीदित्यर्थः तदानीं प्रकृतेर्जीवानाञ्चात्यन्ताऽभावात् किं वस्तु स्वस्मिन्नध्यस्य ब्रह्म जीवत्वम्प्राप्तमिति विवेचनीयम्। सृष्टेः प्राक्काले जीवानामभावेन तत्कृतकर्मणामप्यसत्त्वादन्तरेण निमित्तं प्रयोजनञ्च जीवशरीरेन्द्रियादीनां रचनानुपपत्तिः। उपादानपदार्थान्तराभावोऽपि तदनुपपत्तावुपोद्बलकम्। तदानीम्प्रकृतेरतिरिक्तस्य वा पदार्थस्याऽभावात्। प्राक्काले जीवासत्त्वमेव जीवकृतकर्मासत्त्वमवगमयत्तत्फलभोगायापेक्षितशरीरेन्द्रियादिरचनायास्तैश्च सह जीवसम्बन्धस्य व्यतिरेकं ग्राहयति। न च "तदैक्षत बहु स्याम्प्रजायेय" (छा० ६।२।३) इतिश्रुतिप्रामाण्यात्स्वेच्छया लीलार्थमेव स्वस्मात्प्रकृतिमुत्पाद्य ताञ्च स्वस्मिन्नध्यस्य स्वयं जीवभावम्प्राप्य तयैव प्रकृत्या जीवार्थं शरीरेन्द्रियाणि ब्रह्मणा कारितानीति वाच्यम्। इच्छावत्त्वेन ब्रह्मणि सगुणत्वसिद्धेः स्वस्मादचेतनप्रकृत्युत्पादकत्वेन विकारितया निर्विकारत्वप्रतिपादकश्रुतेर्व्याकोपः। स्वस्यैव ब्रह्मणो जीवत्वेऽज्ञत्वसंसारित्वादिदोषाणाम्पुनरनुद्धारश्च। अपि च प्रकृतिरपि किं निमित्तीकृत्य कस्मै प्रयोजनाय जीवसाधनभूतानि शरीरेन्द्रियादीनि रचयेत्। न तावत्कर्मणो निमित्तत्वम्। क्रियत इति हि कर्म तस्य च स्वतोऽनादित्वाऽसिद्धेः। शरीरेन्द्रियसम्बन्धात्पूर्वन्तु तेषामभाव एव। "कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते" (गी० १३।२०) इति भगवद्वचनबलाच्च प्रकृतेरेव शरीरेन्द्रियरचनकर्तृत्वमकामेनाऽपि भवताऽभ्युपेयम्। तच्च त्वन्मते नैव सम्भवति। ननु ब्रह्मणा स्वयं कर्माण्युत्पाद्य जीवैः कारितानि कर्माणि वा निमित्तीकृत्य तत्फलभोगार्थं प्रकृत्या तच्छरीरेन्द्रियाणि कारितानीति चेन्न। शरीरेन्द्रियसम्बन्धात्पूर्वं शरीरेन्द्रियरहितानां जीवानां कर्मकर्तृत्वानुपपत्त्या ब्रह्मणा तैः कारयितृत्वाऽसम्भवात् कथञ्चित्सम्भवेऽपि विषमसृष्टिहेतुभूतविषमकर्मकारयितृत्वेन तस्मिन् वैषम्यनैर्घृण्यापत्तेः। एवञ्च जीवानां शरीरेन्द्रियसम्बन्धमन्तरेण कर्म-

---

तत्रास्ति कश्चिद्दोषो भवेन्न तत। ब्रह्मणो निर्विशेषत्वं पूर्वमेव हि खण्डितम्॥१२१॥

कर्तृत्वानुपपत्त्या कर्मणामसिद्धिः । तदतिरेकेण शरीरेन्द्रियरचनायास्तैश्च सह जीवसम्बन्धस्य वा चासम्भवादितीतरेतराश्रयदोषस्य दुरुद्धरत्वादयमद्वैतवादो ब्रह्मव्यतिरिक्तस्याऽखिलस्य मिथ्यात्वबोधकतया प्रकृतेर्जीवानाञ्च तद्भुक्तिमुक्त्युपायबोधकश्रुतिस्मृत्यादीनां सर्वेषां शास्त्राणां मिथ्यात्वापादानमन्तरेण स्वरूपसत्तामलभमानः श्रुतिसत्तर्कादिविरोधितया स्वयमेव मिथ्यात्वङ्गत इति सर्वतश्चतुरस्रम् ।

तस्माज्जगत्सृष्ट्यादिरचनानुगुणं जीवानां तत्कर्मणां प्रकृतेश्चाऽनादित्वमनन्तञ्चावश्यमङ्गीकार्यम् । तथा चात्र श्रुतिस्मृतयः "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य" (श्वे० ४।५) "गौरनाद्यन्तवती सा जनयित्री भूतभावनी" "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" (कठ० २।५।१३) "अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे" (गी० २।२०) "नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः" (गी० २।२४) "वेदाविनाशिनं नित्यं य एनमजमव्ययम्" (गी० २।२१) "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" (गी० १३।१९) इत्याद्याः । जीवप्रकृत्योरुभयोरपि नित्यत्वमनादित्वञ्चाहुः जीवकर्मणामपि "न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च" (ब्र० २।१।३५) इति सूत्रेणानादित्वमभिदधते सूत्रकृतः । एतदुक्तम्भवति-तत्तज्जीवानुगुणकर्माण्यपेक्ष्य सत्यसंकल्पो भगवान् भोग्यभोगस्थानभोगोपकरणशरीरेन्द्रियसङ्घातान् सृजति एवञ्चायमध्यासो जीवकर्तृक एव तथाहि जीवशब्दवाच्यः प्रत्यगात्माऽनादितोऽविद्यातिरोहितस्वस्वरूपः प्राकृतशरीरेन्द्रियादिकमनादितः स्वात्मन्यध्यस्य तत्कृतानि कर्माणि स्वात्मकृतान्येवेति मन्वानस्तैर्निबद्धो ब्राह्मणोऽहं क्षत्रियोऽहं ममैते स्त्रीपुत्रादय इत्येवं व्यवहरति । तथा चानात्मवस्तुषु देहादिष्वात्मबुद्धिरूपो व्यवहार एवाऽध्यासपदेन लोकशास्त्रयोः प्रसिद्धः । एतादृशाध्यासशालिनामेव जीवानां संसृतिभाक्त्वं श्रुतिस्मृत्यादौ मुहुर्मुहुर्निर्दिष्टम् । स्वस्वरूपाज्ञान-

वतामेव विपरीताध्यासेन प्राकृतगुणैः क्रियमाणानि शुभाशुभानि कर्माणि स्वानुष्ठितानीति मन्वानानां तैर्भूयो भूयो बन्धप्राप्तिः । यस्त्वात्मनिष्ठो गुणकर्मविभागं विवेकेनावगच्छति स पुनस्तैर्न बध्यत इति स्पष्टीकृतोऽयमर्थो भगवद्गीतायां "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहंकारविमूढात्मा कर्ताहमिति मन्यते" (गी० ३।२७) ततस्तैरेव कर्मभिर्निबध्यत इति शेषः । "तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः । गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते" (गी० ३।२८) "यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते । हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते" तेन कर्मणा न निबध्यत इति भावः तदुक्तं वृत्तिकृता "गुणकर्म विविक्तदृक् परमपुरुषोपास्ति परिगृहीतचेतास्तु न कर्मबन्धमुपैति परं प्रसादमेवासादयति" ( बो० वृ० ) अस्य च निरुक्तस्याध्यासमूलकस्वरूपाज्ञानस्य नाशः स्वरूपज्ञानावाप्तिश्च भगवदनन्यभक्तिहेतुक भगवत्प्रसादेनैव सिद्धतीत्युक्तम् । तत्रैव "तेषां सततयुक्तानाम् भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते' (गी० १०।१०) "तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" ( गी० १०।११ ) । भगवदनन्यभक्त्यैव स गुणातीतः सन् ब्रह्मभावाय कल्पत इत्यप्युक्तम् । "माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते" ( गी० १४।२६ ) अत्र ब्रह्मणो भावो ब्रह्मभूयं तस्मा इति भावः । अस्याश्चानन्यभक्तेः परमात्मसाक्षात्कार एव फलं तदेव प्राप्नोति । तथा च "अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् । विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते" ( गी० १४।२६ ) । "ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्" ( गी० १८।५४ ) "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्" ( गी० १८।५५ ) इत्यादिभिः प्रतिपादितम् । सा चैषाऽनन्यभक्तिर्भगवदेकचिन्तनततसततस्मरणतदेकमनस्तत्तदेकनिदिध्यासनादिशब्दवाच्येति च तदीयैरेव वचोभिरवगम्यते ।

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ गी० ६।२२॥
मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ गी० १२।८ ॥

अत ऊर्ध्वं प्रारब्धकर्मभोगानन्तरमित्यर्थः ।

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यन्ते प्रतिजाने प्रियोसि मे ॥ गी० १८।६५ ॥

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ ! नित्ययुक्तस्य योगिनः ॥ गी० ८।१४॥

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ गी० १२।६ ॥

तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ ! मय्यावेशितचेतसाम् ॥ गी० १२।७ ॥

न चिरादिति-अस्यैव प्रारब्धदेहस्यान्त इत्यर्थः । अत्रत्याभ्यां "अत ऊर्ध्वं निवसिष्यसि मय्येवे"ति "तेषामहं समुद्धर्त्ता न चिराद्भवामी"त्याभ्यां भगवदनन्यभक्तस्य वर्तमानदेहस्यैवान्ते भगवत्प्राप्तिर्भवतीत्यवसीयते ।

भक्तिश्चेह निदिध्यासनापरपर्याया ध्रुवानुस्मृतिरूपैवेति निर्णयः। तथा च श्रुतयः "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः। स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" ( छा० ७।२६।२ ) "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" ( श्वे० ६।२३ ) यत्र ध्रुवास्मृतिपरभक्तिपदाभ्यां सैवानन्यभक्तिरभिधीयते ।' 'अथ परा यया तदक्षरमधिगम्यते" (मु० १।१।५) इत्यादावपि परविद्ययाऽक्षरप्राप्तिरिति दर्शितम् । अखिलोपनिषत्सारभूते श्रीगीताशास्त्रे वेदवेद्यो भगवान् परमपुरुषोऽपि--

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तप ॥ गी० ११।५४
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ गी० १८।५५

इत्यादिभिर्भगवदनन्यभक्तेरेव मोक्षोपायत्वं द्रढयति । एवञ्चात्रेदं ग्रन्थहृदयम् । ध्रुवास्मृतिपदाभिलप्यापरभक्तिरेवाऽनन्येत्यादिविशेषणेन विशिष्यते । सर्वशाखाप्रत्ययन्यायेन विभिन्नशब्दैर्भगवत्प्राप्तिरूपपरमपुरुषार्थोपायतया सैव सर्वत्राभिधीयते । एतेन मुमुक्षुभिरुपायान्तराणि दूरतः सन्त्यज्य केवलमनन्यभक्तिरेव ग्राह्येति सिद्धम् । तथैव च श्रीगीताचार्याणां सिद्धान्तः । स च

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहन्त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ गी० १८।६६॥

इत्यत्र स्वोदीरितवाक्यान्तेऽष्टादशाध्याये तैरेव प्रकटीकृतः । ज्ञानस्यैव परा काष्ठा भक्तिरिति तु प्रागेवाभिहितं जिज्ञासाधिकरणे इति सर्वं निरवद्यम् । न च वाच्यं "निर्गुणं निष्क्रयं शान्तं निरवद्यं निरञ्जनम्" ( श्वे० ६।१९ ) इत्यादिभिर्वेदवचनैर्ब्रह्मणो निर्गुणत्वे तस्य मानसव्यापाररूपज्ञानसाध्यत्वादन्यविधया भक्तेरुपायत्वासम्भवादिति । निर्गता निकृष्टाः सत्त्वादयः प्राकृता गुणा यस्मात्तन्निर्गुणमितिव्युत्पत्तेर्निकृष्टगुणराहित्यमेव निर्गुणत्वम् । तथैव च ।

सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः ।
स शुद्धः सर्वशुद्धेभ्यः पुमानाद्यः प्रसीदतु ॥ वि० पु० ॥
योऽसौ निर्गुणः प्रोक्तः शास्त्रेषु जगदीश्वरः ।
प्राकृतैर्हेयसत्त्वाद्यैर्गुणैर्हीनत्वमुच्यते ॥ प० पु० ॥

इत्यादौ प्रतिपादितत्वात्प्राकृतसत्त्वादि गुणनिषिद्धे सति ब्रह्मणो दिव्यगुणाश्रयत्वसिद्धेः । तादृशदिव्यगुणानाञ्च "पराऽस्य शक्तिर्विविधैव

श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' ( श्वे० ६।८ ) इत्यादौ स्वाभाविकत्वाभिधानात्प्राकृतहेयगुणरहितत्वेन निर्गुणत्वं, दिव्यगुणवत्त्वेन च सगुणत्वमित्युभयथैकस्यैव ब्रह्मणो निर्देश इति न किञ्चिदनुपपन्नम्। किञ्च श्रीरामस्य जगत्कारणत्ववादिन्यः काश्चन श्रुतयः स्पष्टं कारणस्वरूपस्य तस्य साकारत्व सगुणत्वमक्षरब्रह्मणो जगत्कारणत्ववादिन्यश्च काश्चन श्रुतयस्तस्य निराकारत्वं निर्गुणत्वञ्चाहुरित्युभयत्राऽविरोधार्थं स एवार्थस्तान्त्रिकैरङ्गीकर्तव्यः। अन्यथा परस्परविरोधे व्याहतत्वादप्रामाण्यमेव निपद्येत। अतएव भगवता वृत्तिकारेण युक्तं तद्गुणकोपासनादिति कथयता सगुणस्यैवोपास्यत्वं स्थिरीकृतम्। ( बो० वृ० ) न च विनिगमनाविरहान्निराकारनिर्गुणवादिन्य एव श्रुतयः सगुणब्रह्मरचितानि सृष्ट्यादीन्यनूद्य तेषाञ्च निर्गुणे निराकारे ब्रह्मणि रज्जौ कल्पिताहिरिव कल्पितत्वेन मिथ्यात्वमवगमयन्तीति वाच्यम्। आरोपवादस्य च प्रागेव श्रुतिस्मृतियुक्त्यादिभिर्निराकृतत्वात्। पूर्वोदीरितार्थं एव सामञ्जस्य कल्पितत्वकल्पनाया अनुपपत्तेश्च। तस्मात्प्राकृतगुणाकारयोरसत्त्वेन निर्गुणत्वं निराकारत्वं दिव्यस्वासाधारणगुणाकारवत्त्वेन च सगुणत्वं साकारत्वं चैकस्यैव ब्रह्मण उपपन्नतरमिति न कश्चिद्विरोधः।

एवञ्च सर्वज्ञसर्वशक्तिमज्जगत्कारणनिर्गुणसगुणादिपदवाच्यं श्रीरामतत्त्वं तदेव जगत्कारणं ब्रह्मेत्युच्यतेऽनेन सूत्रेण। बाह्यकरणानपेक्षामलशाश्वतिकापरोक्षानुभवविषयाखिलपदार्थत्वमेव चात्र सर्वज्ञत्वम्। एतस्यैव सर्वज्ञत्वादिविशिष्टस्य जगत्कारणस्य "शास्त्रयोनित्वात्" (ब्र० सू० १।१।३) इत्यधिकरणेनापि निरस्तसमस्तदोषकलङ्कवेदकारणत्वेन सर्वज्ञत्वप्रतिपादनेन सगुणत्वज्ञापनात्। "तत्तु समन्वयात्" ( ब्र० सू० १।१।४ ) इति सूत्रेणाऽपि तस्मिन्नेव जगत्कारणे सर्वासां सगुणनिर्गुणार्थकेन प्रतीयमानानां श्रुतीनां समन्वयत्वप्रदर्शनेन तस्यैकस्यैवाक्षरब्रह्मात्मसदादिसामान्यपदबोध्यस्य श्रीरामादिविशेषपदवाच्यस्य दिव्यगुणवत्त्वेन प्राकृतहेयगुणरहितत्वेन च सगुणत्वनिर्गुणत्वज्ञापनादिति

न चापि ब्रह्मणो गुणशून्यत्वं निर्विशेषत्वञ्चेति मन्तव्यम् । उत्तत्राऽपि "तदनन्यत्वमारम्भणशब्दादिभ्यः" ( ब्र० सू० २।१।१५ ) इति सूत्रेण स्थूलचिदचिद्विशिष्टस्य कार्यावस्थस्य ब्रह्मणः सूक्ष्मचिदचिद्विशिष्टकारणावस्थब्रह्मानन्यत्वबोधनात् । चतुर्थाध्याये "आवृत्तिरसकृदुपदेशात्" ( ब्र० सू० ४।१।१ ) इतिसूत्रेण निदिध्यासनपदवाच्याया ब्रह्मणः सतत चिन्तनलक्षणायास्तद्भक्तेरेव मोक्षसाधनत्वज्ञापनात् । "ध्यानाच्च" ( ब्र० सू० ४।१।८ ) इतिसूत्रेण च तस्या एव दृढीकरणात् । अनुपदं सगुणब्रह्मण एव शास्त्रे प्रतिपादनम् । एतादृशानन्यभक्तेरेव चोपरिष्टान्मुक्तिरूपं फलं दर्शितं तत्कर्तुरिति "तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया" ( ब्र०सू० ४।२।१६ ) इत्यधिकरणे स्पष्टम् । तत्र हि सगुणब्रह्मणः श्रीरामस्यानवच्छिन्नध्यानाभ्यासवतोऽनन्यभक्तस्य शताधिकया सुषुम्नया नाड्या शरीराद्बहिर्निःसृत्यार्चिरादिमार्गेण ब्रह्मलोकं गतस्य मुक्तिः प्रतिपादिता । विद्यासामर्थ्यादित्यत्र विद्यापदेन यस्य पूर्वमावृत्तिर्विहिता तस्यैव ब्रह्मनिदिध्यासनरूपस्य तच्चिन्तनापरपर्यायस्य ग्रहणमिति सूत्रकारीयः पन्थाः ।

एतेन ज्ञानिनः सद्योमुक्तेरभावोऽपि व्यक्तो भवति । अत एवास्मिन्प्रकरणे "प्रतिषेधादितिचेन्न शारीरात्स्पष्टो ह्येकेषाम्" ( ब्र० सू० ४।२।१२ ) इत्यत्राऽयं विचारः प्रस्तुतः । तथाहि—

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥" क० २।६।१४ ॥

"अथाऽकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति" ( बृ० ४।४।६ ) इति द्वयोः श्रुत्योरर्थस्य "योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात्प्राणा उत्क्रामन्ती" तिमाध्यन्दिनशाखास्थवाक्यानुसारेण नेतव्यत्वात्स्वकामाच्छारीराज्जीवात्प्राणोत्क्रान्तेः प्रतिषेध एवाऽनेन सूत्रेण क्रियते ।

सर्वकामविमुक्तस्यात्मकामस्य शताधिकया सुषुम्नया नाड्या शरीरान्निस्सृत्यार्चिरादिमार्गेण ब्रह्मलोकगमनत्वज्ञापनात्सद्यो न मुक्तिर्ब्रह्मविदामपि तु देवयानादिक्रमेणैवेति सिद्धान्तः।

एवञ्च 'ब्रह्मसन्ब्रह्माप्येती'त्यस्य तात्पर्यसौकर्याय ब्रह्मसदृशः सन्नित्यर्थोऽवश्यमास्थेयः। अन्यथा ब्रह्म सन्निति सम्पन्ने ब्रह्मणि भूयो ब्रह्मण्यप्ययवचनस्य वैयर्थ्यात्। नहि स्वस्मिन् स्वस्यैवाप्यय इति युक्तम्। तथा सति" न तस्य प्राणा उत्क्रामन्ति किन्तु सार्वत्रिकं यद्ब्रह्म तद्रूपतामासादयन्तीत्येव ब्रूयात्। यथा "देवो भूत्वा देवं यजेत्" 'राजा भूत्वा राजानं मिले"दित्यादौ देवसदृशः सन् राजसदृशः सन्नित्यर्थस्तथैव प्रकृतेऽपीति ज्ञेयम्। सादृश्यञ्च भेदघटितमेवेत्यन्यत्र विस्तरः। काठके तु "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" (क० २।६।१४) "यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः। अथ मर्त्योऽमृतो भवत्येतावदनुशासनम्" (क० २।६।१५) "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति॥" (क० २।६।१६) इत्येवं क्रमस्तत्राऽपि 'यदा सर्वे प्रमुच्यन्ते' इत्यस्यानन्तरं "शतञ्चैके"तिवाक्यमुक्तम्। तदयमभिप्रायः। सर्वकामविमुक्तस्य पुंसः शताधिकया सुषुम्नया शरीरान्निर्गत्यार्चिरादिमार्गेणैव ब्रह्मलोकावाप्तिः। "अत्र ब्रह्म समश्नुते" (क० २।६।१४) इत्यस्मिन् भागे विद्यमानस्यात्रपदस्यैतस्यां सर्वकामविमुक्तदशायां ब्रह्म समश्नुते प्राप्नोतीत्यर्थस्यैव सम्यक्त्वादिति न केनापि प्रमाणेन सद्योमुक्तिः सिद्ध्यतीति मनीषिभिर्विभावनीयमिति दिक्।

स्यादेवं, जीवब्रह्मणोर्भेदस्यौपाधिकत्वाभेदस्यैव च पारमार्थिकत्वान्मुक्त्यवस्थायां तयोः पार्थक्येनावस्थानमयुक्तम्। विगलितबन्धस्य जीवस्य ब्रह्मरूपापत्तिरेव हि मुक्तिस्तथा चार्चिरादिना तस्य देशान्तरे गमनासम्भवात्। नैतदेवं, सशरीरनिःशरीरभेदेन मुक्तात्मनां द्वैविध्यमुदीरितं भगवता बादरायणेन फलाध्याये। तत्र सशरीराणां भोगस्य जाग्रद्भोगसमानत्वा-

चिन्मात्रस्वरूपेणावस्थितानां निश्शरीराणां तु स्वाप्निकभोगवद्भोगार्जकत्वान्मुक्तयवस्थायामपि जीवब्रह्मणोर्भेदस्यैव पारमार्थिकत्वम् । शरीररहितस्य मुक्तात्मनो ब्रह्मैक्ये सति प्रथगस्थानाभावेन तमुद्दिश्य स्वप्नभोगवद्भोगवचनस्य वैयर्थ्यमेव स्यात् । मुक्तिदशायामत्यन्तविलक्षणत्व एव तत्सार्थक्यं सम्भवति नेतरथा । अत एव "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" (ब्र० सू० ४।४।१७) इत्यधिकरणेऽशरीराणां जगद्व्यापारकर्तृत्वप्रतिषेधेन ब्रह्मणो न्यूनत्वबोधनं स्पष्टमेव संगच्छते । मुक्तब्रह्मणोरुभयोः सत्यसंकल्पत्वेऽपि जगद्व्यापारांशे मुक्तस्य सत्यसंकल्पताया अकार्यकारित्वेन चिन्मात्रस्वरूपेण स्थितानामपि निश्शरीराणां मुक्तानां स्वरूपस्थितिप्रवृत्तीनां तत्सत्यसंकल्पत्वस्य च परमात्माधीनत्वसिद्धया तेषां परमात्मशेषत्वं स्पष्टमेव । तस्माच्छाश्वतिकं सार्वत्रिकञ्च परमात्मनः सकाशाज्जीवस्य भिन्नत्वमेवेति वेदवित्समयः ।

एवाञ्चास्याः शारीरकब्रह्ममीमांसाया उपक्रमोपसंहारयोर्ब्रह्मणः शेषित्वसगुणत्वादिप्रतिपादकतया तन्मध्यभूतानामपि सूत्राणां संदंशपतितन्यायेन तत्प्रतिपादकत्वमेवेति मन्तव्यम् । यथा चाखिलश्रुतिस्मृतिसूत्राणां सगुणब्रह्मण्येव तात्पर्यन्तथा स्फुटीकरिष्यामस्तत्तत्सूत्रव्याख्यायायामित्यत्र संक्षेपः । अथाऽखिलहेयप्रत्यनीकानन्तकल्याणगुणविशिष्टस्यैव परमात्मनो वेदान्ततात्पर्यविसितत्वात्कुत्रचिदापाततो निर्गुणे तात्पर्यमर्पयन्तीनां वस्तुतो भगवतो दिव्यकल्याणगुणानभिधायिनीनां श्रुतीनां तादृशपदानामेवार्थोऽवसरतो विविच्यते तत्र यत्तदद्रेश्यमग्राह्यमित्यादिपूर्वोदाहृतश्रुतेरयमर्थः । अद्रेश्य-अदृश्यमिति यावत् । तच्च न तावद्दर्शनकरणतां निषेधति । "आत्मा वारे द्रष्टव्यः" (बृ० ६।५) "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" (मु० २।२।८) "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्रया बुद्धया सूक्ष्मया सूक्ष्मदर्शिभिः" (क० १।३।१२) इत्यादौ स्वकण्ठरवेणैव तस्य दर्शनीयत्वप्रतिपादनात् । अतोऽद्रेश्यमित्यस्य स्थूलबुद्धया द्रष्टुमशक्यं लौकिकप्रत्यक्षाविषयमिति-

यावत् । सूक्ष्मबुद्धिविषयत्वन्तूदाहृतश्रुत्यनुरोधेन वर्तत एवेति भावः। अग्राह्यम् अपरिच्छिन्नत्वेनानिसःमतया चाकाशादिवदग्राह्यमित्यर्थः। अगोत्रमिति स्वसमानद्वितीयब्रह्माजनकत्वात्पुत्रपौत्रादिरूपलौकिकपरम्पराया अप्रवर्तकत्वाद्वा गोत्रमवंशमित्यर्थः। अवर्णमिति-ब्राह्मणादिवर्णरहितं प्राकृतनीलपीतादिवर्णरूपरहितं वेत्यर्थः। न तु रूपात्यन्ताभाववत्वं सूक्ष्मबुद्धिदृश्यत्वानुपपत्तेर्दिव्यरूपवत्वमितिभावः । अचक्षुश्श्रोत्रम् चक्षुःश्रोत्राधीनदर्शनश्रवणमित्यर्थः। तदपाणिपादम्-पाणिपादापरतन्त्रग्रहणगमनमित्यर्थः। अव्ययमिति-विविधविकाररहितम्। भूतयोनिमिति आकाशादिभूतकारणम्। धीराः परिपश्यन्तीति श्रुतेरर्थः। "यः सर्वज्ञः सर्ववित्", "यस्य ज्ञानमयं तपः" "एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" ( बृ० ३।८।९ ) इत्याद्यनेकश्रुतिभिः परमात्मनः सर्वोत्कृष्टदिव्यज्ञानादिमत्त्वेनोक्तत्वान्न यथापि निर्विशेषप्रतिपादकत्वम्। एतच्च तत्तदुपनिषद्विवेचनायां स्पष्टीकृतमस्माभिरिति तत एवऽवगन्तव्यं विशेषार्थिभिरतोऽत्र विरम्यते ॥

एतदुक्तम्भवति- 'यतो वा इमानि" (तै० ३।१।१।) इति श्रुतिरपि सूक्ष्मचिदचिच्छरीरकस्य ब्रह्मण एव लक्षणं दर्शयति। तदेव हि जगत्कारणम्। "सदेव सोम्येदमग्र आसीदि"त्यादौ यथा यत्सत्पदवाच्यं सूक्ष्मचिदचिद्विशिष्ट ब्रह्माग्रे आसीत्तदेव च स्थूलचिदचिद्विशिष्टस्य कारणमुक्तं तथात्रापि ज्ञेयम्। पर, पराभिमतस्य केवलस्य निर्विशेषस्य ब्रह्मणस्तु न जगतः कारणत्वं केनापि प्रमाणेन शक्यमवगन्तुं नतरामारोपितस्य तस्य तत्र सुखादिभोक्तृत्वविकारित्ववैषम्यनैघृण्याजत्वाद्यनेकदोषापत्तेः। किञ्च विवर्तादिवादानां मायिमतप्रवर्तकानां विपरीतार्थोपस्थापकत्वमपीत्यपरं दूषणम् । एतत्सर्वं प्रागेवास्मिन्नधिकरणे सप्रमाणमभिहितम्। इदानीं प्रसङ्गात्तेषामसाङ्गत्यं युक्त्यपेशलत्वञ्च पुनः प्रदर्श्यते। तथाहि दृष्टान्ते रज्जुरधिष्ठानं तत्रारोपितः सर्पस्तयोः रज्जौ नहि भवति भ्रान्तिर्नवा तत्कृतं दुःखमपितु, रज्जुसर्पभिन्नानां तद्द्रष्ट्रूणां

मनुष्याणामेव तत्र भ्रान्तिस्तद्धेतुकञ्च दुःखम्भवति । दार्ष्टान्ते त्वधिष्ठानं ब्रह्म तस्मिन्नेव चराचरात्मकं जगत्कल्पितम् । न हि तस्य कल्पितस्य जगतो ब्रह्मणश्च जगद्भ्रान्तिस्तद्धेतुकं संसरणञ्चोपपद्यते, किन्तु तद्भिन्नानामेव तद्द्रष्ट्रॄणां स्यात् न चैतादृशा ब्रह्मचराचरात्मकजगद्भिन्नाः केचिदन्य उपलभ्यन्ते येषामियं भ्रांतिस्तत्कृतञ्च दुःखं स्यात् । ब्रह्मजगद्भिन्नस्य कस्यचिदनुपलम्भाद्दृष्टान्तासङ्गतिः स्पष्टैव । तस्माच्छ्रुतिस्मृतिप्रमाणसमधिगतस्य सुखदुःखादिभोक्तृचराचरात्मकस्य जगतः कल्पितत्वानुपपत्त्या केवलस्य ब्रह्मणो जगत्कारणत्वानिवृत्तेरद्वैतासिद्धिः । एवं बिम्बात्मकाधिष्ठाने कल्पितस्य प्रतिबिम्बस्य बिम्बस्य च न बिम्बे भ्रान्तिरपि तु तदुभयभिन्नानां तद्द्रष्ट्रॄणामेव तथा दार्ष्टान्तेऽपि ब्रह्मतदाभासभूतानां जीवानां न तदाभासभ्रान्तिरुपपद्यते किन्तु तदन्येषाम् । तादृशाश्च ब्रह्मतत्प्रतिबिम्बरूपजीवभिन्नाः सत्प्रत्ययवन्तो न केऽप्युपलभ्यन्ते यत्र दृष्टान्तसमर्थनं स्यात् । किञ्च तदीयसिद्धान्ते निरवयवस्य विभुनो ब्रह्मणः प्रतिबिम्बोऽप्यसम्भवी । सावयवस्य परिच्छिन्नस्यैव च लोके प्रतिबिम्बदर्शनात् । न च दृष्टमेव लोके निर्मलाम्भसि निरवयवस्यापि नभसः प्रतिबिम्ब इति वाच्यम् । तत्र वियति विद्यमानस्य मेघस्य समीरणसमीरितरजःकणधूमादीनामेव वा दृश्यमानत्वात् । वस्तुतो न नभसो निरवयवत्वं निरूपत्वञ्चेत्यन्यत्र निरूपितम् । अतोऽस्यापि दृष्टान्तस्यासामञ्जस्यम् । द्विचन्द्रभ्रान्तिरप्यधिष्ठानरूपैकस्मिश्चन्द्रमसि नारोपितद्विचन्द्रस्य न वाधिष्ठानभूतस्यैकस्य तस्य किन्तु अङ्गुल्याद्यवष्टम्भेन दोषवशात्तमोऽपहतचक्षुष्कस्य कस्यचित्तैमिरिकस्यैवेति नानेनापि दृष्टान्तेन भवदभिमतसिद्धिर्दृष्टान्तवैपरीत्यञ्च ।

नन्ववच्छेदवादमाश्रित्यैवैतत्सर्वं सङ्गतम् । तथा हि—यथा घटावच्छिन्नाकाशो भिन्ने च घटे महाकाशेनैक्यमुपगच्छति तथा विद्यावच्छिन्नो जीवशब्दाभिधेयश्चेतनो ज्ञानेनोच्छिन्नायामविद्यायां ब्रह्मैक्यमापद्यत इति चेत्तदपि न युक्तिसहम् । यथा घटावच्छिन्नाकाशप्रदेशात्तदव-

च्छेदके घटे प्रदेशान्तरे गते सति तेनावच्छिन्नः प्रदेशान्तराकाशः पूर्वावच्छिन्नाकाशादन्य एव पूर्वप्रदेशाकाशस्य तदवच्छेदकघटादिगमनवत्प्रदेशान्तरे घटादिना सह गमनानुपपत्तेः। तथैवाविद्यावच्छिन्नात्प्रदेशान्तरस्थब्रह्मांशाज्जीवादविद्यात्मकजीवोपाधिलिङ्गशरीरे प्रदेशान्तरे गते सति तदवच्छिन्नस्याचलस्य ब्रह्मांशस्य पूर्वांशादंशान्तरत्वोपपत्तेः। ततश्चाविद्यावच्छिन्नपूर्वावस्थावच्छिन्नब्रह्मांशानुष्ठितपुण्यपापयोरुत्तरप्रदेशावच्छिन्नब्रह्मांशस्य भोग्यत्वापत्त्याऽकृताभ्यागमकृतविप्रणाशौ स्यातामिति महद्दूषणम्। अपि च देशकालवस्तुपरिच्छेदरहितस्य भवदभिमतस्य ब्रह्मणोऽविद्यावच्छिन्नत्वस्वीकारे तत्र वस्तुपरिच्छेदत्वापत्त्या देशकालवस्त्वपरिछिन्नत्वरूपतल्लक्षणस्य बाधादित्ययमवच्छेदवादोऽपि वक्तुमशक्य एवेति सिद्धम्।

एवमन्येषामप्यापातरमणीयानां पराभ्युपगतनिर्विशेषब्रह्माद्वैतसाधकानां युक्तिदृष्टान्तानां तत्त्वधिया विमृश्यमाने वालुकालयमिव सर्वथा शिथिलमूलत्वमेवेति नाविदितं सत्पक्षपातशेमुषीकाणामतो विरम्यते। तथा च यदा ब्रह्मणि धर्मिभेदो न प्रसज्ज्यते तदा निस्समाभ्यधिकाद्वितीयवस्तुसम्भवेन लक्षणतः प्रतिपत्तुं शक्यत्वात्तत्र वेदान्तानां प्रामाण्यसम्भवात् समारम्भणीया ब्रह्मजिज्ञासा सम्भवत्येवेति निश्चयः।

अत्रायमधिकरणार्थसङ्ग्रहः। "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" (तै० ३।१) "यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" (श्वे० ३।६) "रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि। इति रामपदेनासौ परम्ब्रह्माभिधीयते" (रा० पू० ता० १।६) एवमादयोऽस्य विषयः। अत्र जगज्जन्मादिकं ब्रह्मणो लक्षणं सम्भवति न वेति संशयः। न सम्भवतीत्येव युक्तमनियतत्वात्। तथा हि—समानधर्मिकव्यावर्तकधर्माणां स्वाश्रयभेदकत्वनियमाज्जन्मादिकारणत्वरूपधर्मैर्धर्मिभेदः प्राप्नोत्येव।

यत्र तु मानान्तरेणैक्यावगमश्छत्री वासस्वी कुण्डली देवदत्त इत्यादौ तत्र न भेद । प्रकृते ब्रह्मणो मानान्तरागोचरतया धर्मिभेदः स्यादेव । तस्मान्नेदं कारणत्वादिकं तस्य लक्षणम्, अपि तु जगन्निष्ठ-जन्मादिकमेवोपलक्षणविधया लक्षणं वक्तव्यम् । तदपि न क्षोदक्षमम् । ब्रह्मणि ज्ञाताकारज्ञाप्याकारयोरभावात् । यथा पूर्वं गगने ज्योतिर्मण्डल-मालोकयनः पुंसोऽस्ति कश्चिच्चन्द्रप्रातिपदिकस्यार्थः योऽसावस्मिञ्ज्योति-तिर्मण्डले वर्तत इति जिज्ञासोऽत्र ज्योतिर्मण्डले कश्चन्द्र इति प्रष्टारम्प्र-त्युपदेशस्तद्विदः शाखाग्रे चन्द्र इति । तत्र ज्योतिर्मण्डलसम्बन्धितेजः पिण्डत्वन्त्ववगतत्वाज्ज्ञाताकारश्चन्द्रशब्दवाच्यत्वमेव ज्ञाप्यमिति तस्य ज्ञाप्याकारत्वम् । तदुभयमपि ब्रह्मणि न सम्भवति मानान्तराविषयत्वा-त्तस्य । न च "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै० २।२ ) इतिस्वरूपलक्षण-प्रतिपन्नस्य सत्यत्वादेर्ज्ञाताकारत्वमस्त्येवेति वाच्यम् । तथा सत्युक्तस्वरूप-परिचायकवाक्येऽनेकधर्माणां कीर्तनाद्धर्मिभेदस्तदवस्थ एव । तत्राप्युप-लक्षणत्वस्वीकारे तु प्राक्स्वरूपसिद्ध्यर्थं किञ्चिल्लक्षणान्तरमपेक्षणीयं तत्सिद्धये पुनर्लक्षणान्तरमित्यनवस्था । एतत्परिजिहीर्षया "यतोवै" इत्यादिवाक्यापेक्षायां पुनरन्योन्याश्रयः । ज्ञाप्याकारस्तु तथाप्यनुपपन्नो वेदान्तानामद्वैते निर्विशेषे तात्पर्यग्राहकत्वात् । तस्माद्ब्रह्मणो लक्षणस्या-सम्भवान्न ब्रह्मविचार आरम्भणीय इति पूर्वपक्षिते ब्रूमो जन्मादेः प्रपञ्चगतत्वेन यद्यपि ब्रह्मण्यसम्बन्ध एव तथापि तटस्थतया लक्षणं सम्भवत्येव । यत्तूदीरितमुभयाकारासम्भवादिति । तन्न । लक्षणजिज्ञासा-प्रयोजकज्ञानविषयाकार एव ज्ञाताकारस्तज्ज्ञानमादायैवात्र ज्योतिश्चक्रे कश्चन्द्र ? इति प्रश्नः सङ्गच्छते । तस्य च "शाखाग्रे चन्द्र" इति युक्तमेवोत्तरम् । प्रकृतेऽपि मुमुक्षुजनैरुपासनीयताज्ञाननिमित्तकत्वाद्भगव-प्रश्नस्येति ज्ञाताकारः सम्भवत्येव । एवं ज्ञानविषयरूपवस्तुनि निरतिश-यतत्त्व ज्ञाप्याकारोऽपि युक्त एव । किञ्च चन्द्रपदाभिधेयं किमस्तीत्या-पाततः प्रतिपत्तिमतः प्रश्नस्य "शाखाग्रे चन्द्र" इति ताटस्थ्येन

लक्षणमभिधायोत्तरदर्शनादुपलक्षणभावस्य सर्वथासामञ्जस्यादिमावेवाकारौ कथमत्र न ग्राह्यौ ? तौ च प्रकृतेस्त एवेति न किञ्चिदनुपपन्नम् । सविशेषस्यैव च ब्रह्मणः प्रतिपाद्यत्वात्तदेवात्राभिहितम् । एतेन "परिज्ञाते लक्ष्ये तत्परिच्छेदकलक्षणानर्थक्यमज्ञाते तु तस्मिल्लक्षणजिज्ञासानुदयात्कथमिह ब्रह्मणो लक्षणनिर्वचनमि"त्यपि परास्तम् । एतत्पूर्ववृत्तवेदाध्ययनादिनाऽऽपाततोऽवगते ब्रह्मण्येव तत्प्रसर इति शक्यमेव लक्षणतः प्रतिपत्तुं ब्रह्म तस्मिंश्च वेदान्तानाम्प्रामाण्यसम्भवादारम्भणीयैव ब्रह्ममीमांसेति सिद्धान्तः ।

## * अथ शास्त्रयोनित्वाधिकरणम् ॥३॥

पूर्वाधिकरणसिद्धं जगत्कारणं ब्रह्म किंप्रमाणकमित्यत आह

## शास्त्रयोनित्वात् । १ । १ । ३ ।

शास्त्रं योनिः प्रमाणं यस्य तच्छास्त्रयोनि, तस्यभावस्तत्त्वं तस्माद्ब्रह्मणि शास्त्रमेव प्रमाणमिति यावत् । एवञ्च पूर्वोत्तरसूत्रयोः साध्यहेतुपरतयैकार्थ्येऽपि निराकरणीयसंशयपूर्वपक्षादिभेदादधिकरणभेदः । तथा हि अत्र "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" ( तै० ३।१ ) इत्यादिवाक्यद्वारा शास्त्रं विषयः । "अत्र जगत्कारणतया सिद्धं ब्रह्म शास्त्रमात्रगम्यमाहोस्वित् प्रमाणान्तरेणापि गम्यमिति

---

* जगद्धेतुतया चोक्तो राघवः करुणार्णवः । किं प्रमाणान्तरेणापि शास्त्रेणैवोत गम्यते ? ॥१२२॥ इत्येवं विषये प्राप्ते पूर्वः पक्षो मनोरमः । यतः सावयवत्वेन हेतुना विश्वजन्यता ॥१२३॥ क्षित्यङ्कुरादिकं सर्वं कार्यत्वात् कलशो यथा । तथा सकर्तृकं ज्ञेयमित्येतदनुमानतः ॥१२४॥ सिद्धः सर्वेश्वरोऽस्मत्सु तादृक्कर्तुरभावतः । मानान्तरेण लभ्यत्वान्नैवेने शास्त्रयोनिता ॥१२५॥ अप्राप्ते चार्थवच्छास्त्रमित्येतत् सर्वसम्मतम् ।

संशयः। तत्राप्राप्ते शास्त्रमर्थवदिति सिद्धान्ताच्छास्त्रस्य प्रमाणान्तराप्राप्तविषयत्वान्न परमात्मनि शास्त्रं प्रमाणं किन्त्वनुमानमेव। तथा हि इदम्परिदृश्यमानं नानासंस्थानविशिष्टं जगत्सावयवत्वाज्जन्यमेव। न चैतदस्मदादिपरिमितशक्तिमत्साध्यमिति तज्जनकतया कश्चिदखिलभुवननिर्माणनिपुणोऽपरोक्षज्ञानचिकीर्षाकृतिमान् सार्वज्ञ्यविशिष्टो लाघवादेकः कर्ता सिद्ध्यति। स एव परमपुरुषपदवेदनीयम्ब्रह्मेत्यनुमानगम्यत्वान्न शास्त्रमात्रगम्यमिति प्राप्ते ब्रूमः। पूर्वाधिकरणे जगत्कारणतयावगतम्ब्रह्म शास्त्रैकगम्यम्। तथा हि "तं त्वौपनिषदं पुरुषं पृच्छामि" (बृ० ३।९।२६) इत्यत्रौपनिषद इति शैषिकोऽण् तथा चोपनिषदा वेदान्तशास्त्रेण दृष्टत्वोक्त्या ब्रह्मणस्तन्मात्रप्रमाणकत्वम्। "नावेदविन्मनुते तम्बृहन्तम्" "नैषा तर्केण मतिरापनेया" (क० १।२।९) इत्यादिवचनैरुपनिषदेकवेद्यत्वस्य ब्रह्मणोऽन्तरेण वेदान्तशास्त्रं बोधासम्भवात्। यच्च कार्यलिङ्गकानुमानेन तत्सिद्धिरित्युक्तम्। तत्तुच्छम्। अनुमानस्य प्रत्यक्षसापेक्षत्वात्। यथा प्रत्यक्षेण महानसादौ धूमधूमध्वजयोर्व्याप्तिमाकलय्य पर्वते धूमेन हेतुना वह्निमनुमानुमानिकः कश्चित्प्रवर्तते। तथा ब्रह्म न क्वापि सपक्षेऽध्यक्षं यतः केनापि सम्बन्धग्रहणमुपपद्येत। अतो नानुमानगम्यम्। ननु यथा नगरसेतुप्रासादादीनां विलक्षणानामपि पुरुषकर्तृकत्वमध्यक्षं तथेदं महीमहीधरादिकं परमेश्वरो निर्मिमीतेत्यस्त्येव सम्बन्धग्रह इति चेन्न। तथा सत्यनेककर्तृकत्वसिद्धावप्येककर्तृकत्वासिद्धेः। व्याप्तिबलेनैव साध्यमानस्य परमात्मनः कर्मपारतन्त्र्यप्रसङ्गापातश्च। तस्मान्ना-

---

मैवमुत्तरपक्षस्य श्रेष्ठताऽस्ति यतः श्रुतौ ॥१२६॥ 'तन्त्वौपनिषदं' चैवं मता शास्त्रैकवेद्यता। सपक्षेऽध्यक्षताऽभावाद् ब्रह्मणो निखिलात्मनः ॥१२७॥ साध्यसाधकयोश्चात्र व्याप्तिग्रहः कथं भवेत्। तदभावे कथं सिध्येद् रामेऽनुमानगम्यता ॥१२८॥ व्याप्तिग्रहेऽथ जातेऽपि केवलं तद्बलेन च। ईश्वरे साधिते तत्र ध्रुवं स्यात् कर्मवश्यता ॥१२९॥ अनेककर्तृकत्वञ्च विश्वे प्रासादवद्भवेत्। अनुमानान्न तत् सिध्येत् सर्वज्ञः सर्वशक्तिकः

नुमानात्सर्वशक्तिसमन्वितस्य जगतोऽभिन्ननिमित्तोपादानभूतस्य परमात्मनः सिद्धिरिति युक्तमेव शास्त्रैकवेद्यत्वम्ब्रह्मणः ।

अल्पाक्षरैरपि बह्वर्थस्य वशीकरणादेव सूत्राणां सूत्रत्वमित्यर्थान्तराभिधानेऽपि वाक्यभेदादिदोषाभावाद्वर्णकान्तरमस्य सूत्रस्य प्रदर्श्यते । ब्रह्मणो जगत्कारणत्वसमर्थनेन तस्य सर्वज्ञत्वं सर्वशक्त्यादिमत्त्वञ्चार्थात्सूचितम् । तदिदानीमनेन द्रढयति । शास्त्रयोनित्वात् । शास्त्रस्य वेदस्य योनिः कर्तृत्वेन कारणं तत्त्वात् परस्य ब्रह्मणः सर्वज्ञत्वं भवतीति सूत्रार्थः । सर्वज्ञकल्पस्य वेदस्योत्पादकत्वाद्ब्रह्मणः सर्वज्ञत्वमेव सिद्ध्यतीति भावः । अत्र "अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेद सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणम्" (बृ० ४।५।११) इत्यादिवाक्यमस्य सूत्रस्य विषयः । तत्रेदं वाक्यं वेदकारणत्वेन ब्रह्मणः किं सर्वज्ञत्वं साधयत्याहोस्विन्नेति संशयः । तत्र वेदकर्तृतया नेश्वरस्य सार्वज्ञ्यं साधयितुमिष्यते यतः–"वाचा विरूपनित्यया" इत्यादिश्रुतयो वेदवचसामनादित्वं नित्यत्वञ्चाहुः । स्मृतयोऽपि–"अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवे" इत्यादिनाऽऽम्नायस्य नित्यत्वमेवाभिदधते । तस्मान्नित्यनिर्दोषवेदस्यापौरुषेयतया तत्कर्तृकत्वेन सार्वज्ञ्यं ब्रह्मणो दुर्घटम् । न च सर्वत्र वेदोपादानतयापि तत्सिद्धिः । उपादानोपादेययोरैकधर्मिकत्वस्य तन्तुपटादिषु जगदुपादानब्रह्मतत्कार्यजगत्सु च प्रायेण व्यभिचारितयाऽप्रयोजकत्वेनाऽऽगमस्य व्यवहितविप्रकृष्टाद्यखिलार्थप्रकाशनशक्तिशालित्वेऽपि ब्रह्मणि तदसम्भवात् । कथञ्चित्तत्सम्भवेऽपि श्रुत्यविषयीभूतानां प्रावृट्पयोधरपतन्तीनां वर्ष-

॥१३०॥ अस्य महत' इत्यस्मिन् वाक्ये वेदचतुष्टयम् । ब्रह्मनिःश्वसितत्वेन प्रोक्त तत्रास्ति संशयः ॥१३१॥ इदं वेदस्य वाक्यञ्च सार्वज्ञ्यमीश्वरस्य किम् । वेदानां कारणत्वेन साधयत्यथवा न हि ? ॥१३२॥ समीचीनोऽन्तिमः पक्षो 'वाचा विरूप नित्यया' इत्यादिश्रुतिभिश्चोक्ता वेदानां नित्यता तथा ॥१३३॥ 'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा' । इत्यञ्चाद्यन्तशून्यत्वं वेदानां मनुना मतम् ॥१३४॥ नित्य सकर्तृकञ्चेदं

धाराणां धरणितलजुषां रजःकणानाञ्च संख्यादीनान्तथाप्यनधिगतत्वाच्च न ब्रह्मणो वेदकर्तृतया सार्वज्ञ्यसिद्धिरिति प्राप्ते ब्रूमः।

ब्रह्मणोऽखिलवेदकर्तृतया युक्तमेव सार्वज्ञ्यम्। तथा च श्रुतयः "अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि" (बृ० ४।५।११) "छन्दांसि जज्ञिरे तस्मात्" (यजु० मा० सा०) अत्र निःश्वसितवदन्तरेण प्रयत्नं वेदानां तत एव प्रादुर्भावनिश्चयात्तद्रचितत्वमेव। न ह्यत्र वेदकर्तृत्वमर्थमासाद्य तदनुगुणप्रणयनकर्तृत्वम्। येन विषयसापेक्षत्वेन पौरुषेयत्वं स्यात्। न वा केवलमुच्चारयितृत्वरूपम्, आधुनिकाध्यापकसादृश्याद्वेदस्य विशिष्टब्रह्मकर्तृकत्वासिद्धेः। तदा ह्यखिलवेदोच्चारयितृतया ब्रह्मणो विशिष्टाध्यापकत्वस्य लाभेऽपि तावन्मात्रस्यापुरुषार्थतया वैलक्षण्यं न स्यात्। तस्मात्स्रष्टेः प्राग्यादृशक्रमस्वरवर्णानुपूर्वीमानासीत्तथैवास्मिन्कल्पे विरचय्य प्रवर्तयति कारुणिकः परेशः। तथा च "धाता यथापूर्वमकल्पयत्" इतिवेदोदितदिशा प्राचीनानुपूर्व्यनुरूपरचनया सार्वज्ञ्यं वेदकर्तृत्वञ्च स्वतः सिद्ध्यति। इदमेव च परमात्मनोऽन्यविलक्षणं वेदकर्तृत्वं यत् परसङ्कलितक्रमवर्णाद्यनधीनतया स्वातन्त्र्येण पूर्वकल्पीयस्वकृतक्रमादिवदिदानीमपि तत्कर्तृत्वम्। एवञ्च वेदानाम्परमात्मकर्तृकत्वेऽपि क्रमवर्णपदवाक्यतदर्थानामनादिसिद्धानामेव

---

व्याहृतं कथनं यतः। मैवं यतश्च वेदानां कर्तृत्वेन परात्मनः ॥१३५॥ सर्वज्ञता समीचीना निश्वासवदयत्नतः। ब्रह्मणोऽखिलवेदानां प्रादुर्भावस्य निश्चयात् ॥१३६॥ 'छन्दांसि जज्ञिरे तस्मा' दित्यादि वैदिकं वचः। प्रमाणञ्चात्र विज्ञेयं तस्माद्दोषो न विद्यते ॥१३७॥ यादृग्वर्णानुपूर्वीमानासीत् पूर्वं तथैव हि। अस्मिन् कल्पेऽपि सम्पाद्य प्रवर्तयति चेश्वरः ॥१३८॥ मानञ्चात्र श्रुति 'र्धाता यथापूर्वमकल्पयत्'। भिन्नमाम्नायकर्तृत्वमन्येभ्यो राघवे यतः ॥१३९॥ स्वातन्त्र्येण कृताः सर्वेऽन्यायत्तक्रमादयः। पूर्वकल्पीयवत्, तस्मान्नो वेदे पौरुषेयता ॥१४०॥ स्वतः

तावदवस्थ्यात्तेषां स्वतः प्रामाण्यमपौरुषेयत्वञ्च सुतरां सम्पन्नम् । न चात्राऽप्रामाण्यशङ्कासम्भवः । अखिलहेयप्रत्यनीकस्यावाप्तसमस्तकामस्य नित्यनिरतिशयज्ञानानुभूयमानपरावरवस्तुतत्वस्य निरवधिकमहिम्नः श्रीरामस्य ब्रह्मणो वचनत्वात् । रागद्वेषदोषदूषितान्तःकरणानां विप्रलिप्सूनां वचनेष्वेव तत्सम्भवः न चैवं शब्दराशिरूपस्य वेदस्योत्पत्तिमत्त्वेन त्रिक्षणावस्थायित्वमेव स्यादिति वाच्यम् । 'योऽयं वेदो विष्णुशर्मणाधीतः स एव रामशर्म्मणाप्यधीयते, इतिप्रत्यभिज्ञाबाधात् । एवं न वर्णानामपि त्रिक्षणावस्थायित्वम् । यः ककारश्चैत्रेणोक्तः स एव मैत्रेणापीति प्रत्ययात् । नापि वर्णानामाकाशमात्र गुणत्वमणुत्वं च । मानाभावात् । 'यष्टकारोऽयोध्यायां श्रुतः स एवानेन काश्यां श्राव्यत' इत्यादि व्यापकत्वप्रतीतिविरोधाच्च ।

एतेन कर्णशष्कुल्यवच्छिन्ननभोभागस्येव श्रोत्रत्वात्तदसाधारणगुणस्तत्समवेत एव वर्णात्मा शब्द इत्यपि कणभुङ् मतमपास्तम् । इन्द्रियाणां सात्विकाहङ्कारिकत्वेन श्रोत्रस्याकाशत्वाभावात् न च केवलमाकाशगुण एव शब्दः सिद्धान्ते वाय्वादिस्वपि तस्य स्वीकारात् । गुणगुणिनोः समवाय इतिनियमस्य चाग्रे समवायनिराकरणावसरे निरसिष्यमाणत्वात् । श्रोत्रेण च शब्दव्यञ्जकध्वनेरेव ग्रहणात् ।

---

प्रमाणता चापि वेदस्याक्षुण्णतामियात् । आवाप्ताखिलकामेन सर्वज्ञेनाप्रमादिना ॥१४१॥ वीतरागेण रामेण प्रोक्तत्वान्नाप्रमाणता । वेदेषु सम्भवेद् यस्माद् विप्रलिप्सुवचःसु सा ॥१४२॥ न चाप्युत्पत्तिमत्त्वात् त्रिक्षणावस्थायिता भवेत् । शब्दराशिस्वरूपाणां वेदानामिति शङ्क्यताम् ॥१४३॥ 'वेदोऽयं विष्णुनाऽधीतो देवेन्द्रेणाप्यधीयते' इत्येवं प्रत्यभिज्ञाबाधाद्धेतोरिति बुध्यताम् ॥१४४॥ अत एव न वर्णानां दोषश्चैच मताऽपि सा । 'मनुनोक्तो गकारोऽयं हरिणाप्यभिधीयते' ॥१४५॥ इत्येवं प्रत्यभिज्ञानाद् वर्णानां नित्यता मता । ननु 'तानेव शालींश्च वयमप्युप-

एवञ्चाम्नायस्य वर्णपदवाक्यव्यूहरूपस्य परमात्मन एव सृष्टयादावुत्पादकत्वम् । स्थूलव्योमादिवत् । एवं प्रलयकालिकध्वंसप्रतियोगित्वेनैव वर्णानां सामञ्जस्ये नान्तराल उदयापायौ श्रुतियुक्तिसम्मतौ । ककारादिवर्णानामनन्तप्रागभावध्वंसादिकल्पनायां गौरवात् । तथा च, नवकृत्वो गोशब्द उच्चरितः स एवायं ककारइति प्रामाणिकप्रतीतिप्रत्यभिज्ञाभ्यामुत्पन्नः को विनष्टः क इत्यादिप्रत्ययस्याप्रामाण्यमेवास्थेयम् । वर्णाभिव्यञ्जकध्वनिगतोत्पत्तिनिरूपितसम्बन्धविषयकत्वं वा ।

तस्मान्नित्यत्वाद्वर्णानां तत्समुदायस्यार्थप्रत्यायकत्वेनैव सर्वेष्टसिद्धौ नातिरिक्तः कश्चित्स्फोटात्मा कश्चिद्धर्मी युक्तिसहः शक्योऽङ्गीकर्त्तुम् । विकल्पासहत्वात् । स च यत्किञ्चिद्वर्णव्यङ्ग्यो यावद्वर्णव्यङ्ग्यो वा ? न तावदाद्यः । घशब्देनैव व्यञ्जिते स्फोटे सम्पन्नायां घटपदार्थावगतौ टवर्णस्य वैयर्थ्यात्। न द्वितीयः तन्मते वर्णानामाशुविनाशितया सम्मेलनाऽसम्भवात् । नित्यत्वे तु वर्णानामस्मन्मतपातात्तत्समुदायेनैवार्थप्रतीतौ किमन्तर्गडुना स्फोटेनेति राद्धान्तः । अतो न वेदानाम्पौरुषेयत्वं त्रिक्षणावस्थायित्वञ्चेत्यलमनेनाप्रसंगोचितकथालापेन ।

एवञ्च ब्रह्मकर्तृकवेदस्य सर्ववस्त्ववभासकत्वं ब्रह्मणः सार्वज्ञ्यमन्तरेणानुपपन्नं सत्तस्य तद्द्रढयति । एतच्च परमात्मनः सर्वज्ञत्वमाजानसिद्धमहर्षिभ्यो योगिजनेभ्यः सर्वार्थावभासकवेदेभ्यश्च विशिष्टम् ।

---

भुञ्ज्महे' ॥१४६॥ इत्यादिवद् गकारोऽयं 'स एवे'त्यस्य गौणता । इति चेदुच्यते चात्र 'ते शालय इमे न हि' ॥१४७॥ इतिवत् 'स गकारोऽयं गकारो न' तिरूपतः । विद्यते नहि भेदस्य प्रतीतिस्तन्न गौणता ॥१४८॥ 'स एवायं गकारोऽस्ति' चेत्यादेः प्रत्ययस्य हि । विषयो ननु गत्वादिर्जातिरेवास्ति नान्यथा ॥१४९॥ मैवं वाच्यं हि साङ्कर्याद् गत्वादिजात्यभावतः । साङ्कर्यं खलु चात्रास्ति तारत्वादिकहेतुना ॥१५०॥ सोऽयं कलशं इत्यादेस्तथात्वापाततस्तथा । व्यक्तिभेदो न सिध्येच्चेत्येतदप्यवगम्यताम् ॥१५१॥ घटान्तराद् गृहीतो भेदो यस्मिन् तद्घटेऽपि च ।

विशिष्टज्ञानबलक्रियादिशक्तिशालित्वादनवरताखिलार्थसमर्थप्रत्यक्षकारित्वाच्चेति ।

न च "हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्" (य० २५।१०) "प्रजापतिस्तपोऽतप्यत" इत्यारभ्य "तेभ्यस्तपस्तेपानेभ्यस्त्रयो वेदा अजायन्त" इत्यादिप्रमाणबलेन न परमात्मनो वेदकर्तृत्वं किन्तु हिरण्यगर्भादिरेवेति वाच्यम् । "हिरण्यगर्भं जनयामास पूर्वं स नो बुद्धया शुभया संयुनक्तु" (श्वे० ३।४) "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" (श्वे० ६।१८) इत्याद्यनेकश्रुतिभिर्हिरण्यगर्भादीनामपि कार्यभूतानां ब्रह्मैव कारणम् । "यो वै वेदांश्च प्रहिणोति तस्मा" इतिवेदप्रदानकर्तृतया श्रुतत्वात्परमात्मन एवादौ वेदोत्पादकत्वम् । देवान्तरेभ्यो या वेदोत्पत्तिः श्रुता सा तु परम्परया वेदप्रवर्तकतयेवेति योजनीयम् । एवञ्च सर्वज्ञवेदकर्तृतया परमात्मनः सर्वज्ञत्वं सिद्धम् ।

अत्र तृतीयवर्णकमपि-यथा "जन्माद्यस्ययतः" ( ब्र० सू० १।१।२ ) इत्यनेन ब्रह्मणः सर्वशक्तिमत्त्वञ्चार्थान्निष्पन्नं भवति तथापि ब्रह्म सर्वज्ञं सर्वज्ञकल्पस्य वेदस्य कारणत्वादिति सर्वज्ञत्वमानुमानिकमेव न श्रौतम् । इतीमं पक्षमपाकरोति । ब्रह्म सर्वज्ञं सर्वशक्तिमच्च । कुतः ? शास्त्रयोनित्वात् । वेदप्रमाणत्वात् । "यः सर्वज्ञः सर्ववित्" (मु० १।१।९)

---

प्रसक्ता प्रत्यभिज्ञा स्यात् 'स एवायं घटः'खलु ॥१५२॥ विर्णा नत्या यतस्तस्मात् स्फोटो धर्मी न सिध्यति । तथाहि व्यज्यते स्फोटो वर्णेन येन केनचित् ॥१५३॥ आहोस्वित् सर्ववर्णैर्हि ? नाद्यः पक्षश्च सम्भवेत् । येनैव व्यञ्जिते स्फोटे टवर्णव्यर्थता यतः ॥१५४॥ स्फोटवादे च वर्णानां स्वीकृताऽऽशुविनाशिता । तस्माद् द्वितीयपक्षोऽपि वक्तुं न शक्यते किल ॥१५५॥ नित्यतास्वीकृतावस्मन्मते पातो भवेद् ध्रुवम् । स्फोटाभिधो न धर्मी तत् कथञ्चिदपि सिध्यति ॥१५६॥

"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" ( श्वे० ६।८ ) इत्येवमादिश्रुतिप्रमाणत्वादित्याहुस्तदिदं द्वितीयेनैव वर्णकेन गतार्थप्रायम् ।

## ॐअथ समन्वयाधिकरणम् ॥४॥

एवं शास्त्राऽनारम्भ्यत्वप्रयोजकीभूतामाशङ्कां प्रथमाधिकरणेनापाकृत्य ब्रह्मणो जिज्ञास्यत्वञ्च प्रतिपाद्य किल्लक्षणकं किम्प्रमाणकञ्च तदित्याशंकायाः परिजिहीर्षया लक्षणप्रमाणाभ्यां वस्तुसिद्धेः सर्वतन्त्राभ्युपगततया द्वितीयाद्यधिकरणद्वयेन ब्रह्मणो लक्षणं प्रमाणञ्च यथाऽविध्युपदर्शितम् । अथापि वेदान्तादिशास्त्रप्रमाणकत्वं परिनिष्पन्नस्य ब्रह्मणो न सम्भवति तत्र तेषां समन्वयासम्भवादितीमां शङ्कां निराचिकीर्षुर्दचतुर्थाधिकरणमारचयाञ्चकार ।

## तत्तु समन्वयात् । १।१।४

तच्छब्दः प्रकृतब्रह्मपरामर्शकत्वाद्द्वितीयान्तः । तुशब्दश्च पूर्वपक्षव्यावर्तकः । तथा च तज्जगत्कारणं ब्रह्म स्वकीयतात्पर्यश्रोव्याद्वेदान्तवाक्यानि प्रतिपादयन्त्येवेतिसूत्रार्थः । अत्र सर्वाण्यप्यौपनिषदानि वाक्यानि विषयः । वेदान्तानां ब्रह्माभिधायकत्वमस्ति न वेति विशयः । येषां तत्शास्त्रप्रमाणकत्वं ब्रह्मणः सम्भवत्येव, कुतः ? समन्वयादितिसूत्रार्थस्तेषामपीमावेव विषयसंशयावभिप्रेतौ ।

तत्र पूर्वपक्षः केनचिच्छब्देन कस्यचिदेवार्थस्यावगतिर्न सर्वस्य । अतस्तत्र

---

ॐ ब्रह्माभिधायकत्वं किं वेदान्तानां न वाऽस्त्युत ? 'इत्येवं विचिकित्सायां पूर्वः पक्षः शुभो यतः ॥१५७॥ तस्य तस्य पदार्थस्योपस्थितौ पदबुद्धिवत् । तस्य तस्य पदस्येह शक्तिज्ञानञ्च कारणम् ॥१५८॥ कार्यपरेण वृद्धानां व्यवहारेण तद्भवेत । सर्वोऽपि तदधीनः स्याच्छक्तिग्रहश्च तादृशः ॥१५९॥ सिद्धे ब्रह्मणि यस्माद्धि व्युत्पत्तिर्नैव जायते । वेदान्तावेद्यता तस्माद् रामस्य ब्रह्मणो ध्रुवम् ॥१६०॥ नैवं पड्विधतात्पर्य-

शब्दार्थयोः सम्बन्धरूपशक्तिग्रहोऽपेक्षितः। तत्पदार्थोपस्थितौ यथा तत्पदज्ञानस्यावश्यकत्वं तथा तत्तत्पदपादार्थव्युत्पत्तिज्ञानस्यापीति। अन्यथा घटपदस्य कम्बुग्रीवादिमदर्थवाचकत्वमेवेति नियमो न स्यात्। स्याच्च समेषां पदानां नानार्थकत्वम्। तस्माच्छब्दार्थप्रतिपत्तिर्नैयत्यप्रयोजकीभूतमादौ तद्व्युत्पत्तिज्ञानमावश्यकम्। तच्च वृद्धव्यवहारादेव। व्याकरणोपमानकोषादिरूपाणां शक्तिग्राहकोपायान्तराणां वृद्धव्यवहारतः शक्तिग्राहणसमनन्तरमेव प्रवृत्तिरिति मन्तव्यम्। वृद्धव्यवहारश्च कार्यमात्रविषयः। तथा च प्रथमव्युत्पत्तिग्रहस्य कार्यविषयत्वात्तदधीनः सर्वोऽपि व्युत्पत्तिग्रहस्तद्विषयस्सिद्धयति।

तथाहि–कार्यमात्रवाचकानि पदानि लिङ्‌लेट्‌लोट्‌तव्यदादीनि यस्मिन् पदे वाक्ये वा समवेतानि तस्यैव प्राक् प्रत्यायकत्वं तदन्वितत्वादन्येषामपि पदानाम्पश्चाद्‌बोधः। "घटमानय" इति प्रयोजकवृद्धवाक्यश्रवणसमनन्तरभाविनीं प्रयोज्यपुरुषप्रवृत्तिमुपलक्ष्य पार्श्वस्थो व्युत्पित्सुर्बालस्तस्यां सामान्येन स्वप्रवृत्ताविव कार्यताज्ञानजन्यत्वमनुमाय तद्वाक्ये कार्यसामान्यज्ञानजननीं शक्तिं निश्चिनोति। ततश्च "घटं नय" "दण्डञ्चानय" इत्याद्यभियुक्तव्यवहारतो घटादिपदानामवापोद्वापाभ्यां तत्तत्कार्यविशेषे शक्तिमवगच्छति। तथा च कार्यवाचकपदशक्तिरेव स्वसमभिव्याहृतपदशक्यतामवगमयति। कार्यतावाचकपदसमभिव्याहृतवाक्यत्वं प्रवृत्यौपयिककार्यताज्ञानजनकतावच्छेदकमितिनियमः। अतएव

---

लिङ्गानाञ्च समन्वयात्। सिद्धपरेषु वाक्येषु व्युत्पत्तिर्जायतेऽपि च ॥१६१॥ 'पुत्रस्ते जात' इत्यादौ पितृहर्षादिदर्शनाद्। न कार्यपरतश्चैव वृद्धानां व्यवहारतः ॥१६२॥ शक्तिग्रहो भवेदेतन्नियमो मन्यतेऽपि च। भूयोऽङ्गुल्यादिभिश्चार्थानभिलक्ष्य प्रयोगतः ॥१६३॥ इहाव्युत्पन्नबालानां शक्तिग्रहस्य दर्शनात्। उपासनविधेश्चापि प्रतिपादनतस्तथा ॥१६४॥ दिव्यविग्रहसंयुक्ते कल्याणगुणसागरे। ब्रह्मणि जानकीनाथे वेदान्तानां समन्वयः ॥१६५॥

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥

इत्यभियुक्तोक्तिः संगच्छते । एवञ्च कार्यवाचकपदानधिकरणानामपि वेदान्तवाक्यानां कार्यपरत्वेनैव प्रामाण्यस्य सम्पादनीयतया कार्यपदाध्याहार आवश्यक एव । शक्तिग्रहस्य कार्यमात्रविषयत्वात् । अथवा तेषामप्रामाण्यमेव ।

तथा च प्रकृते "सदेव सोम्येदमग्र आसीत्" (छा० ६।२।२) "सत्यं ज्ञानमनन्तं ब्रह्म" (तै० २।१।१) इत्यादिवेदान्तवाक्यानां न सिद्धेऽर्थे ब्रह्मणि व्युत्पत्तिः सम्भवतीति शास्त्राप्रतिपाद्यतया निष्प्रमाणकम्ब्रह्मेति प्राप्ते ब्रूमः ।

परिनिष्पन्नं ब्रह्मस्वरूपं बोधयतामपि वेदान्तवाक्यानां सम्भवत्येव ब्रह्मप्रतिपादकत्वम् । उपक्रमोपसंहारादितात्पर्यहेतुसमन्वयात् । अयमभिप्रायः । पूर्वं कार्यार्थव्युत्पत्तेर्हेतुताऽङ्गीकृतापि पश्चात्सम्पन्ने बोधे त्यज्यते । अनन्यलभ्यस्यैव शब्दार्थत्वात् । अतएव सिद्धपरवाक्यादपि सुतरां सम्पद्यते बोधः । चैत्र ! पुत्रस्तेऽजात इत्यादौ वार्ताहरादिवाक्यमाकर्ण्य चैत्रस्य मुखविकासम्पश्यति कश्चिद् दृष्टचैत्रपुत्रजन्मा बालस्ततस्तेन चैत्रहर्षमनुमिमानस्तत्कारणतया चैत्रस्य स्वकीय पुत्रजन्मज्ञानमेव कल्पयंस्तज्जननक्षमतां तस्यैव वाक्यस्य कल्पयतीत्येवं क्रमेण सिद्धपरवाक्येष्वपि सम्भवति सुतरामाद्यव्युत्पत्तिज्ञानम् । किञ्चोपायान्तरेणापि शब्दार्थयोस्सम्बन्ध-

---

'जन्माद्यस्येति' सूत्रे च ब्रह्मणो जानकीपतेः । 'यत' इत्येवमुक्ता हि पञ्चम्या विश्वहेतुता ॥१६६॥ अयुक्ता साऽथवा युक्ता पक्षः कश्चात्र युक्तिभाक् ? । हेतुत्वसाधकाभावादाद्यः पक्षः सुसङ्गतः ॥१६७॥ मैवं यद् व्यापकत्वेन विदधे ब्रह्मसमन्वयः । साधको व्यतिरेकोऽपि समन्वयोपलक्षितः ॥१६८॥ श्रुतावभिहितावेतौ व्यतिरेकसमन्वयौ । परस्य ब्रह्मणः श्रीमद्रामस्याद्भुतकर्मणः ॥१६९॥

ग्रहस्सम्भवतीति न कार्यार्थ एव प्रथमव्युत्पत्तिग्रहः। तथा हि-पूर्वमज्ञातशब्दार्थसम्बन्धान् बालांस्तत्सम्बन्धमेव जिग्राहयिषवो मातापितृप्रभृतयोऽङ्गुल्यादिभिरर्थानभिलक्ष्यीकृत्य तद्वाचकशब्दानसकृत्प्रयुञ्जते। ततश्चेममर्थमवबोधयितुमयं शब्दः प्रयुक्त इति मनस्याकूतयन्तस्ते (बालाः) सत्वरमेव शब्दार्थसम्बन्धमवगच्छन्त्ययमन्यथाः सिद्धार्थेष्वपि प्राथमिकव्युत्पत्तिग्रहस्य सर्वेषां नो दृष्टचरः। एवं क्रमेणैव चाभिज्ञमाताद्यादिभिः शैशव एव स्वकीय बालका व्युत्पाद्यन्त इति सर्वजनीनमेतत्। एष एव नयोऽनुत्तरमीमांसकधुरीणानामपि। तस्मात्सिद्धार्थेष्वपि सुग्रह एव व्युत्पत्तिग्रह इति सम्भवत्येव वेदान्तानामनवद्यब्रह्माभिधायकत्वम्।

स च समन्वयो वेदान्तवाक्यानामित्थम्। "सदेव सोम्येदमग्र आसीत्" (छा० ६।२।२) "तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासते" (के० १। १४) "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। एकस्तयोः पिप्पलमत्ति स्वाद्वनश्नन्नन्योऽभिचाकशीति" (मु० ३।१।१) "तमेव विदित्वाऽतिमृत्युमेति" (श्वे० ३।८) "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" (तै० ३।१।१) "ब्रह्म वा इदमग्र आसीत" (बृ० ४।१।१०) "ॐ यो ह वै श्रीरामचन्द्रः स भगवानद्वैतपरमानन्द आत्मा" (रामोत्तरतापन्याम्) "आनन्दोब्रह्म" (तै० ३।६।१) "सत्यं ज्ञानमनन्तं ब्रह्म" (तै० २।१।१) इत्येवमादयः श्रुतयो ब्रह्मणः स्वरूपलक्षणगुणादिप्रकाशनेन चरितार्थाः। एवमुपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्त्याख्यैस्तात्पर्यनिर्णायकैर्लिङ्गैर्वेदान्तानां परमपुरुषे श्रीरामाख्ये ब्रह्मण्येव समन्वयस्तत्र तत्र सद्विद्यादिवेदभागेषूपलभ्यते। तथाहि उपक्रमे "सदेव सोम्येदमग्र" (छा० ६।२।२) इति वाक्यमभिन्ननिमित्तोपादानत्वतत्सहकारिसर्वज्ञत्वसर्वशक्तिमत्त्वसगुणत्वादिगुणविशिष्टसूक्ष्मचिदचिद्विशिष्टसविशेषब्रह्मण एव प्रतिपादकम्। उपसंहारेऽपि, "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मातत्त्वमसि श्वेतकेतो" (छा० ६।८।७) इति वाक्यं सामानाधिकरण्यमुखेनोक्तगुणविशिष्टस्योपक्रान्त-

स्यैव ब्रह्मणोऽभिधायकम् । अस्मिश्च प्रकरणे स्वोदीरितार्थदृढीकरणाय तत्त्वमसीतिवाक्यस्य नवकृत्व आवृतत्वादभ्यासः फलितः । तत्रैव प्रमाणान्तरागोचराणां जगत्कारणत्त्वादिगुणानां विशिष्टे ब्रह्मण्येव निर्देशादपूर्वतापि सम्पद्यते । फलमपि "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" ( छा० ६।१४।२ ) इत्यनेनोपासितुर्मोक्षाख्यं निरूपितम् । प्रकरणस्यास्य "श्वेतकेतुर्हारुणेय आस" (छा० ६।१।१ ) इत्यादिना पितापुत्राख्यायिकारूपेण प्रवृत्तत्वादर्थवादश्च सिद्धयति । एवं प्रकृतं सविशेषब्रह्मस्वरूपं हस्तामलकवज्जिग्राहयिषया पित्रा मृत्पिण्डादिदृष्टान्तत्रयस्याभिहितत्वादुपपत्तिरपि राजते । इत्येतद्विस्तरेण तत्प्रकरण एवोपपादितम् ।

एवमुपासनाविधिप्रतिपादनेनापि वेदान्तानां ब्रह्मणि समन्वयः स्पष्ट एव । तथा हि-"आत्मेत्येवोपासीत्" ( बृ० १।४।७ ) "आत्मानमेव लोकमुपासीत" ( बृ०१।४।१५ ) "ब्रह्मविदाप्नोति परम्" ( तै० १।१।१) ओमित्येवाक्षरमुदगीथमुपासीत" ( छा० १।१।१ ) 'ओमित्येवं ध्यायथ आत्मानम् (मु० २।२।६) "सोन्वेष्टव्यः स विजिज्ञासितव्यः" (छा० ८।७।१) इत्येवमादिषु विधीयमानोपासनाया विषयतयान्वितम्ब्रह्मस्वरूपं विशेषतः प्रतिपादयति कृत्स्नमुपनिषच्छास्त्रम् । नोचेदुपासनानुष्ठानस्य ब्रह्मस्वरूपतत्प्राप्तिरूपफलाद्यनभिसंहितत्वे वैयर्थ्यमेव स्यात् । न च तथापि विधिवादस्वीकारे फलानुपलब्ध्यानुष्ठातुः प्रवृत्त्यभावादनुष्ठानस्य वैयर्थ्यमेवेति वाच्यम् । सम्पन्ने विधौ "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" ( श्वे० ३।८ ) "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुष ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति दिव्यम्" ( मु० ३।१।३ ) "ब्रह्म वेद ब्रह्मैव भवति" (मु० ३।२।९ ) "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" ( मु० २।२।८ ) "तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति" ( छा० ८।१।६ ) "अथ यद्यन्नपानलोककामो भवति संकल्पादेवा-

स्यान्नपाने समुत्तिष्ठतः" ( छा० ८।२।७ ) इत्याद्यार्थवादिकस्य फलस्य रात्रिसत्रन्यायेन विद्यमानत्वात् इत्थञ्च ध्यानोपासनाविधिना सममेकवाक्यत्वं सर्वासां ब्रह्मस्वरूपबोधिकानामुपनिषदाम्। यथा "वायव्यं श्वेतमालभेत भूतिकामः" इति विधिवाक्ये नैकवाक्यता भवति "वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागेनोपधावति स एवैनं भूतिं गमयती" त्याकारकार्थवादस्य। एवञ्च "विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः" ( पू० मी० १।२।७। ) इति सिद्धान्तसूत्रेणैतत्सर्वं समाहितं पूर्वतन्त्रे तथा प्रकृतेऽपि सोऽर्थं उपयुज्यत एव। "ततस्तु तम्पश्यते निष्कलं ध्यायमानः" इत्यादि श्रुतिषु ध्यानमाहात्म्यमुपवर्णितम्। तत्र प्रतिपाद्यस्य ध्यातुर्ध्यानं हि ध्येयस्वरूपमन्तरेणानुपपन्नं सत्स्मरणीयब्रह्मस्वरूपं ध्येयतया समाक्षिपति। तत्स्वरूपगुणमहिमप्रकाशनद्वारा परिनिष्पन्नस्वरूपबोधकस्य वेदान्तस्योपयोगः। तथा हि "सदेव सोम्येदमग्र आसीत् ( छा० ६।२।२ ) "सत्यं ज्ञानमनन्तम्ब्रह्म" ( तै० २।१।१ ) "यतो वा" इमानि भूतानि जायन्ते येन जातानि जीवन्ति" ( तै० ३।१।१ ) "अत्रायं पुरुषः स्वयंज्योतिर्भवति" ( बृ० ४।३।६ ) "विज्ञातारमरे केन विजानीयात्" ( बृ० २।४।१४ ) "रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि" ( रामतापिनी ) "यः सर्वज्ञः सर्ववित्" ( मु० १।१।६ ) "न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्। अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे" "( क० १।२।१८ ) "तमीश्वराणां परमं महेश्वरं तं दैवतानां परमञ्च दैवतम्" ( श्वे० ६।७ ) "न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते" ( श्वे० ६।८ "एष आत्माऽपहतपाप्मा" ( छा० ८।१।६ ) इत्येवमादयः श्रुतयः साक्षात्परम्परया च तस्यैव स्वरूपादिकं प्रतिपादयन्ति। एतच्चोक्तं भगवता वृत्तिकृता-"स्यात्तूपासनविधिना परमपुरुषार्थस्य दिव्यानन्दोदन्वतोऽभिधेयतया समन्वयः शास्त्राणाम्" ( बो० वृ० ) इति।

अयमेवार्थो वेदोपबृंहणरूपेतिहासपुराणयोरपि बहुधोपलभ्यते तथा हि--

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥"

इति वचनबलादुपबृंहणेन संक्षिप्तस्य वेदार्थस्य विशदीकरणमावश्यकम् । तथा चात्र--

प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः ।
प्राप्त्युपायं फलम्प्राप्तेस्तथा प्राप्तिविरोधिनः ॥
वदन्ति सकला वेदाः सेतिहासपुराणकाः ।
मुनयश्च महात्मानो वेदवेदान्तदर्शिनः ।"

इतिवचनाद्ब्रह्मस्वरूपतत्प्राप्त्युपायादिबोधकमेव वेदान्तशास्त्रम् । तत्र निर्दिष्टस्य ध्यानस्मरणादेरेव--

यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते ।
सा हानिस्तन्महच्छिद्रं सा भ्रान्तिस्सैव विक्रिया ॥ वि०पु०

इत्यादिभिः प्रतिपादनात् । एवं ब्रह्मणः स्वरूपमपि--

अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ॥ गी० ७।६।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ गी० १०।४२।
एवं प्रकारममलं नित्यं व्यापकमक्षयम् ।
समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् ॥ वि० पु० १।२२।
समस्ताः शक्तयश्चैव नृप ! यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥ वि० पु० ६।६।६।
जगत्सर्वं शरीरन्ते, स्थैर्यं ते वसुधातलम् ॥ वा०रा०यु० ।
वेदान्तवेद्यं कविमीशितारमनादिमध्यान्तमचिन्त्यमाद्यम् ।
अगोचरं निर्मलमेकरूपं नमामि रामं तमसः परस्तात् ॥
सन० सं० रामस्त० ६१।

ब्रह्मा विष्णुश्च रुद्रश्च देवेन्द्रो देवतास्तथा ।
आदित्यादिग्रहाश्चैव त्वमेव रघुनन्दन ! ॥ सन०सं०रामस्त०६६
रामः सत्यम्परं ब्रह्म रामात्किञ्चिन्न विद्यते ।
तस्माद्रामस्वरूपत्वात्सत्यं सत्यमिदं जगत् ॥ सन०सं०रामस्त०६३

इत्यादिभिः प्रदर्शितम् । तथा फलमपि

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ गी० ८।१५

इत्यादिभिर्निर्दिष्टम् । तथा चाखिलजगदुदयादिलीलस्य महामहिमशालिनः परमकारुणिकस्य परमात्मनः स्वरूपरूपगुणविभूतिवर्णनमसकृदुद्घोषितम् ।

अथात्र द्वितीयवर्णकमास्थीयते । "जन्माद्यस्य यतः" ( ब्र० सू० १।१।२ ) इति सूत्रेण यत इति हेत्वर्थिकया पञ्चम्या ब्रह्मणो जगत्कारणत्वमुक्तम् । न च हेतौ पञ्चमी न सम्भवति शाब्दिकसमयविरुद्धत्वादिति वाच्यम् । "अइउण्" ( म० स० १ ) इतिसूत्रभाष्ये 'विवारभेदा'दितिनिर्देशेन "विभाषा गुणेऽस्त्रियाम्" ( पा० २।३।२५ ) इतिसूत्रे विभाषेतिपार्थवचनेन योगाश्रयणात् क्वचिदगुणेऽपि हेतौ पञ्चमी सिद्ध्यति । तेन च "धूमादग्निमान्" "पुत्रात्प्रमोदो जायते" इत्यादिप्रामाणिकप्रयोगाणामपि साधुत्वं सङ्गतम् । यत इति च "पञ्चम्यास्तसिल्" (पा० ५।३।७) इति पञ्चम्यन्तात्तसिल् । तत्र हेत्वपेक्षायामाह "तत्तु समन्वयात्" । समन्वयपदमत्र व्यतिरेकस्याप्युपलक्षणम् । तद्व्यतिरेकाच्चोपपद्यते "जन्माद्यस्य यतोन्वयादितरतश्चार्थे" (श्रीमद्भाग० १।१।१) इतिभगवतो वेदव्यासस्यैव वचनान्तरात् । तथा चायमर्थः । तज्जगत्कारणत्वं ब्रह्मणः सर्वेषु कार्येषु पदार्थेषु व्यापकत्वेन समन्वयाद्विद्यत इति शेषः । "पादोऽस्य विश्वा भूतानि" (शु० य० ३१।३ इत्यादिभिर्ब्रह्मणः सर्वत्र समन्वयो ज्ञाप्यते । "त्रिपादस्यामृतं दिवि" (शु० य० ३१।३) इतिवाक्येन च तस्य व्यतिरेको बोध्यते । एवं "स

भूमिं सर्वतः स्पृत्वा" (शु०य० ३१।१) इति ब्रह्मणो जगत्यन्वयो दर्शितः। "अत्यतिष्ठद्दशाङ्गुलम्" (शु० य० ३१।१) इति च तस्य व्यतिरेकः। आभ्यां जगदन्वयव्यतिरेकाभ्यां तस्य जगत्कारणत्वमुपपद्यते। त्रिवृत्कृतानां मृदादीनां तत्कार्येषु घटादिषु व्यापकत्वेन समन्वयस्य तद्व्यतिरेकस्य च दर्शनेन तेषां तत्कारणत्वनिश्चयात्। एवं ब्रह्मणोऽपि व्यापकतया सर्वजगत्समन्वयेन तद्व्यतिरेकेणैकत्र प्रधानतया समवस्थितत्वेन च हेतुना सर्वजगत्कारणत्वमुपपद्यते। यद्यपि ब्रह्मणः सर्वजगति व्यापकत्वात्सर्वत्र समन्वय एव तथापि श्रुतिभिस्तदीयाखिलप्रपञ्चविलक्षणस्वरूपस्यापि प्रतिपादनं क्रियते तत्स्वरूपस्यैवात्र व्यतिरेकपदबोध्यत्वमिति विवेकः।

चतुःसूत्र्यां विशेषार्थाः सर्वे चाम्नायसम्मताः।
कथितास्तेन सर्वात्मा श्रीरामः प्रीयतामिति॥

( इति चतुःसूत्री समाप्ता। )

## * अथेक्षत्यधिकरणम् ॥५॥

एवमत्र मुमुक्षुभिश्चिन्तनीयशास्त्रे वेदविहितकर्मानुष्ठानेन प्रक्षीणाशेषकल्मषस्य परतत्त्वबुभुत्सोरादौ ब्रह्मजिज्ञासामभिधाय द्वितीयतृतीयसूत्राभ्यां ब्रह्मणि लक्षणं प्रमाणं चोपवर्ण्य तुरीयेण सर्वेषां वेदान्तानां समन्वयस्तत्रैवेतिप्रतिपादनादनया चतुस्सूत्र्या संक्षेपेण सर्वोऽपि शास्त्रार्थः प्रदर्शितः। स चायमेवार्थोऽत्र प्रमाणसद्युक्तीरवलम्ब्य विस्तरेण चतुर्लक्षण्याऽभिधास्यते। अथ कस्यचिदप्यभिमतवस्तुनो विवेचनीयत्वे कथमत्र निदर्शकप्रमाणानां कार्त्स्न्येन समन्वयः? कथमन्यैरुद्भावितानां विरोधानाम्परिहारः? कथं वा तत्साधनम्? किञ्च तत्फलम्? इत्येवं शंकासङ्घातः समुत्पतति प्रागेव तद्विवेचनारम्भ इति तन्निराकरणमत्र समन्वयविरोधपरिहारसाधनफलाख्यैरध्यायैः स्पष्टमुदटङ्कि। तत्रास्मिन् समन्वयाध्याये चतुर्भिः पादैर्वे-

---

* 'सदेवे'त्यत्र सद्वाच्यं प्रधानं ब्रह्म वा मतम्?। प्रधानं परिणामित्वान्न ब्रह्म तदभावतः ॥१७०॥ ईक्षतेर्ब्रह्म सद्वाच्यं नाशब्दं तदभावतः।

दान्तानां चिदचिच्छरीरकब्रह्मस्वरूपप्रतिपादन एव तात्पर्यम् । तत्राप्यनेन प्रथमचरणेनेत आरम्य केषाञ्चित् स्पष्टब्रह्मलिङ्गकानां वाक्यानां विचारः प्रस्तूयते ।

पूर्वं जगत्कारणत्वेन सर्वज्ञत्वेन सर्वशक्तिमत्त्वेन च सगुणमेव ब्रह्म वेदान्तवेद्यमिति प्रतिपादितम् । तस्यैव च लक्षणादिविवेचनेन तत्र वेदान्तसमन्वयेन च वेदान्ततात्पर्यविषयत्वमिति निश्चितम् । इदानीं जगत्कारणत्वरूपं यद्ब्रह्मणो लक्षणमुक्तं तन्न सम्भवति जगत्कारणतया प्रधानादीनामेव नियतत्वादितीमां शंकां निराकर्तुकामो निरुक्तस्य ब्रह्मलक्षणस्यान्यपरत्वं न सम्भवतीत्यावेदयितुमाह--

## ईक्षतेर्नाशब्दम् । १।१।५।

छान्दोग्ये सद्विद्यायां समाम्नायते "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "तदैक्षत बहु स्यां प्रजायेय" (छा० ६।२।३) इत्यादिसद्विद्याप्रकरणमेवास्य विषयः । तत्राखिलजगत्कारणतया प्रकृतवाक्ये श्रूयमाणं यत्सत्पदवाच्यं तत्सांख्यतन्त्राभिमतं स्वतन्त्रमानुमानिकं प्रधानमाहोस्विदचित्पदवाच्यप्रधानशरीरकम्ब्रह्मेति संशयः ।

तत्रायम्पूर्वः पक्षः । स्वातन्त्र्येण सांख्योक्तस्य त्रिगुणस्य प्रधानस्यैव जगत्कारणत्वं युक्तम् । न ब्रह्मणः । तस्य जन्यधर्मानाश्रयत्वेनापरिणामित्वात् । प्रधानन्त्वचेतनं परिणामि नित्यमेकञ्च । तथा च प्रकृतश्रौतवाक्य इदमितिप्रसिद्धमचेतनं त्रिगुणात्मकं कार्यं निर्दिश्य तस्य स्थूलावस्थाराहित्यं सद्रूपत्वमेवोच्यते सदासीदिति । तस्यैकस्य विज्ञानेन तत्कार्यरूपस्याखिलप्रपञ्चस्य विज्ञानमप्युत्तरत्रोदीर्यमाणं सामञ्जस्यमुपैति । अत एवान्यत्र "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजां जनयन्तीं सरूपाः (श्वे०४।५) इति स्पष्टमेवाभिहितम् । प्रधानस्यैव जगदुत्पादकत्वम् । सत्त्वगुणांशेन शुक्लां रजोंऽशेन लोहितां तमो गुणांशेन च कृष्णां प्रजां जनयन्तीरित्यर्थात् । तच्च प्रधानं प्रकृतिशब्दवाच्यं सर्गादौ महदादिक्रमेण

परिणमते । तदेवं चतुर्विंशतितत्त्वात्मकं व्यपदिश्यते । तदुक्तम् । "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" ( सां० का० ३ ) प्रधानस्य जगत्कारणत्वे रजःसत्त्वयोगादस्य क्रियाज्ञानशक्तिरपि सम्भवत्येव । ज्ञानस्य सत्त्वधर्मत्वात् । "सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च" ( गी० १४।१७ ) इतिवाक्यात् । एतस्य सत्त्वस्य च प्रधानावस्थायामपि वर्तमानत्वादचेतनस्यापि प्रधानस्य सर्वज्ञत्वं सर्वशक्तिमत्त्वञ्चोपचर्यते । सत्त्वस्य स्वयमक्रियत्वेन प्रकाशाख्यज्ञानवृत्तेरनुत्पादकत्वेऽपि चलेन रजसा तदुपष्टम्भात्तज्जनने प्रवृत्तिः । तमस्त्वावरकत्वेन गुरुत्वेन चोभयोः सत्त्वरजसोः क्वचित्प्रवर्तयत्क्वचिन्निवर्तयन्नियमयति । एते च प्रवृत्तिनिवृत्ती तदुत्तरकार्यानुमेये । गुणानामयं स्वभावोऽभिहितः सांख्यकारिकायाम्--

सत्त्वं लघुप्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः ।
गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः (सां० का ।।१३।।)

एवञ्च ब्रह्मणः सत्त्वरजस्तमोगुणवत्त्वाभावेन न ज्ञानादिशक्तिमत्त्वं, न वा जगत्सृष्टिस्थितिसंहारकर्तृत्वमुपपद्यते । प्रधानस्य तु त्रिगुणत्वादुक्तक्रमेण ज्ञानशक्त्यादिमत्त्वं, जगत्सृष्ट्यादिकर्तृत्वं च न विरुध्यते । अत एव "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः" ( गी० ३।२७ ) इति स्पष्टमुक्तम् । तस्मादत्र सर्वज्ञं सर्वशक्तिमत्प्रधानमेव जगत्कारणम् । तदेव च सदेवेत्याद्यखिलकारणवाक्यानि प्रतिपादयन्तीतिप्राप्ते; ब्रूमः-ईक्षतेर्नाशब्दमिति । अशब्दमानुमानिकं सांख्याभिमतं प्रधानं न सदेवेत्यत्र सत्तदवाच्यमत एव न तज्जगत्कारणम् । "तदैक्षत बहु स्यां प्रजायेये" तीक्षतिधातोः श्रवणात् । अपि तु ब्रह्मैव जगत्कारणम् । तस्य चेतनत्वेनेक्षणसम्भवात् । प्रधानस्य त्वचेतनत्वेन तदसम्भवात् ।

एवमाम्नायते-"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत" ( छा० ६।२।३ ) इतिसृष्टिवाक्ये जगत्कर्तृकृतस्येक्षणस्य

श्रवणाच्चेतनात्मककर्तृकत्वमेवेक्षणंस्यानुभविकत्वात् । चेतनरूपस्य ब्रह्मण एव जगतः कारणत्वं न त्वचेतनस्य प्रधानस्य स्वातन्त्र्येण । ब्रह्मशरीरत्वेन तत्पारतन्त्र्येण जगत्कारणत्वमस्त्येव । अत एव "तदधीनत्वादर्थवत्" ( ब्र० सू० १।४।३ ) इति सूत्रेण "अस्मान्मायी सृजते विश्वमेतत्" ( श्वे० ४।९ ) इतिश्रुत्या च प्रधानस्य ब्रह्माधीनत्वेन चेतनव्यतिरिक्तस्य जगतः कारणत्वमभिहितम् । एवञ्चाचेतनस्य प्रधानस्याचेतनांशस्य जगतः कारणत्वोपपत्तावपि न सर्वस्य कारणत्वम् । ब्रह्मणस्तु स्वरूपेणैव तेजोबन्नादिसर्वलोकस्य कारणत्वम् । सूक्ष्मचिदचिद्विशिष्टत्वात् । तथा च "अस्मान्मायी सृजते विश्वमेतत्" ( श्वे० ४।९ ) इति श्रुत्यनुरोधेन सद्ब्रह्मात्मादिशब्दवाच्यं ब्रह्मैव प्रधानद्वारा तेजोबन्नादिरूपसर्वलोकमुत्पादयति । तत्राप्यादिसृष्टावान्तरसृष्टौ च स्वस्मिन् सूक्ष्मरूपेणाऽव्याकृतनामरूपाभ्यां स्थितानां सर्वेषां व्याकृतनामरूपात्मिकां सृष्टिं करोति । "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियते" ( बृ० १।४।७ ) इति श्रुतेः । तदेवमनेनमात्रस्य प्रधानांशत्वेन विकारित्वादिदोषाणां प्रधान एव पर्यवसानाद् ब्रह्मणो निर्विकारित्वमेव स्वतः सिद्धम् । एवञ्च निर्विकारिणस्तस्य मृदादिस्वरूपस्य घटादिरूपत्वप्राप्तिवत् । स्वरूपेणाऽचेतनविकारिजगद्रूपता न सम्भवतीति स्वरूपतो जगदुपादानत्वासिद्धया प्रधानजीवद्वारैव तस्य जगदुपादानत्वम् । तथा च जगतो ब्रह्मोपादानकारणकत्वस्वीकारेऽपि नाद्वैतवादः सिध्यति । तथा सति ब्रह्मकारणवादिमायाकारणवादिवाक्यानामेकवाक्यतासम्पादनेऽपि न कश्चिद्विरोधः ।

एवमग्रेऽपि प्रधानकारणत्वनिषेधपराणां सूत्राणां प्रधानस्य स्वातन्त्र्येण कारणत्व न सम्भवतीत्यर्थ एव तात्पर्यम् । एतच्च "तदधीनत्वादर्थव" ( ब्र० सू० १।४।३ ) दिति वैयासिकवाक्यान्निश्चीयते ।

यदुक्तम्, ब्रह्मणः सार्वज्ञ्यं सर्वशक्तिमत्वञ्च न सम्भवतीति, तदपि न ब्रह्मणो नित्यनिर्दोषज्ञानाढ्यत्वात्सर्वसम्भवः । तथैव प्रतिपादितत्वात् ।

"न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" ( श्वे० ६। ८। ) इति तस्य ज्ञानबलक्रियाशक्तीनां नैसर्गिकत्वश्रुतेः सार्वज्ञ्यादिकं मञ्जूपपद्यते । किञ्च यदनुग्रहादिदानीन्तनसिद्धयोगिनामप्यतीतानागतव्यवहितविप्रकृष्टादिविषयकं ज्ञानं प्रत्यक्षमेव युगपदुत्पद्यते । किन्तर्हि तस्यानाद्यनन्तस्य महाश्चर्यराशेः महायोगेश्वरस्य परमपुरुषस्य भगवतो वक्तव्यम् । तथा च-' अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्" । ( श्वे० ३।१।९ ) इत्यादयो मन्त्रवर्णास्तस्यानन्तमहिमानमामनन्ति । तस्मात्परमात्मनः सर्वज्ञत्वादिकं सुतरामुपपन्नम् । प्रत्युत त्वदीयमतसिद्धस्य प्रधानस्यैव तन्नोपपद्यते ।

तथाहि-सत्वरजस्तमसां साम्यावस्थाया एव प्रधानपदवाच्यत्वात्तत्समये गुणैस्तारतम्यमपहाय वर्तमानतया फलोन्मुखप्रवृत्यभावात् । तदभावे सत्त्वधर्मेण सार्वज्ञ्यादेरनुदयात् । तत्क्षणेऽपि प्रवृत्तिरङ्गीक्रियत एवेति चेन्न । तदा गुणाधिकारस्य न्यूनाधिकभावेन सत्त्वेन प्रधानमेव प्राधान्याद्धीयेत । अतः कथमपि सत्त्वादिभिः सार्वज्ञ्यं प्रधानस्य न सिद्धयतीत्यादीनि परःशतानि दूषणानि विशेषतो रचनानुपपत्त्यधिकरणे दर्शयिष्याम इति न प्रधानस्य जगत्कारणत्वं 'युक्तमितिदिक् ।

एवञ्च अशब्दमित्यस्य शब्दशब्दान्मत्वर्थीयाच्प्रत्ययेन सर्वं 'वाक्यं सावधारणमितिनियमादब्भक्षो वायुभक्ष इतिवच्छब्द एव यत्र न प्रमाणमिति विग्रहलभ्योऽर्थः । शब्देतरानुमानप्रमाणवत्त्वमिति वार्थः । पर्युदासार्थकनञा समासेऽशब्दशब्दान्मत्वर्थीयाच्प्रत्ययेन निष्पन्नत्वाङ्गीकारात् । तादृशञ्चानुमानिकं स्वतन्त्रमचेतनं प्रधानमेवेति तस्य जगत्कारणत्वं निषिद्धयत ईक्षतेरितिहेतुघटितपारमर्षेण सूत्रेण । च-तथा प्रधानं जगत्कारणत्वेन वेदान्तप्रतिपाद्यं वेदान्ततात्पर्याविषयत्वात् । वेदान्तघटकसद्विद्याप्रकरणं न प्रधानतात्पर्यविषयकं तस्य चेतनधर्मबोधकेक्षतिपदघटितत्त्वात्, "देवदत्त ऐक्षत" इतिवाक्यवदित्यादि दिशानुमानस्वरूपमवसेयम् ।

अशब्दमित्यस्य वेदशब्दाऽप्रतिपादितं प्रधानं न जगत्कारणमिति तु नार्थः। "अस्मान्मायी सृजते विश्वमेतत्" (श्वे० ।४।९) "मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्" (श्वे० ४।१०) "प्रधानक्षेत्रज्ञपतिर्गुणेशः" (श्वे०६।१६) इति मायाप्रकृतिप्रधानशब्दवाच्यस्य वेदप्रतिपाद्यत्वदर्शनात्। "तदधीनत्वादर्थवदि" (ब्र० सू० १।४।३) तिसूत्रेण ब्रह्मणः स्वाधीनाऽव्यक्तपदवाच्यप्रकृतिसकाशाज्जगत्सृष्टिकर्तृत्वस्य ज्ञापनाच्च।

एवं नाशब्दं शब्दाप्रतिपाद्यं शब्दाऽगम्यं न ब्रह्म किन्तु शाब्दमेव शब्दगम्यमेव। कुतः ? ईक्षतेः। "परात्परमीक्षते" (प्र० ५।५) इति परात्परपुरुषस्य ब्रह्मण ईक्षणविषयत्वश्रवणादित्यपि नार्थः। उदाहृतश्रुतावीक्षत इत्यस्य ब्रह्मणो दृश्यत्वसाधकस्य शाब्दत्वसाधकत्वानुपपत्तेः। दृश्यत्वेन ब्रह्मणः शाब्दत्वमप्युपपद्यते इति चेन्न, वाक्यभेदापत्तेः। किञ्चास्यास्त्वदीयकल्पनाया एव सामञ्जस्ये "औपनिषदत्वान्नाशब्द" इति साक्षाद्ब्रह्मशाब्दत्वसाधकस्यैव हेतोरुपादानं कुर्यात्। तादृशसूत्राऽप्रणयनमेवाभिव्यनक्ति त्वदीयार्थस्य निस्सारताम्। तस्मात्प्रागुदीरित एव राद्धान्तितोऽर्थ इति सर्वं समञ्जसम्।

नन्वीक्षणमात्रेण न चेतनस्य जगत्कारणत्वं सिद्धयति। "तत्तेज ऐक्षत" ( छा० ६।२।३ ) "ता आप ऐक्षन्त" ( छा० ६।२।३ ) इत्यप्तेजसोरचेतनयोरपीक्षणत्वश्रवणात्। तत्समानप्रकरणपाठात्साहचर्याच्च सदीक्षणस्याप्यौपचारिकत्वेन सत्पदवाच्याचेतनप्रधानपरत्वेनापीक्षितृत्वोपपत्त्या प्रधानस्यैव जगत्कारणत्वं युक्तमित्याशङ्कय समाधत्ते--

## गौणश्चेन्नात्मशब्दात् ।१।१।६।

अप्तेजसोरचेतनयोरपि "तत्तेज ऐक्षत" "ता आप ऐक्षन्त" इत्यादिष्वीक्षणं यथा गौणं श्रूयते तथा सत्पदवाच्ये प्रधानेऽपीक्षणं गौणं स्यात्तेन च प्रधानमेव स्वतन्त्रं कारणं स्यादिति चेन्न। कुतः ? आत्मशब्दात्। उत्तरवाक्येष्वात्मशब्दस्य श्रूयमाणत्वात्। तथाहि-"सदेव

सोम्येदमग्र आसीदि" त्युपक्रम्य "तदैक्षत" "तत्तेजोऽसृजत" ( छा० ६। २।३ ) इत्येव तेजोवन्नानां सृष्टिमभिधाय तानि चोत्तरत्र तदेव सत्पद-वाच्यमीक्षितृदेवतापदेन परामृश्याह "सेयं देवतैक्षत" "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति" ( छा० ६। ३।२ ) अत्र श्रुतौ जीवेनात्मनेत्यादेर्जीवशरीरेण मयाऽनुप्रविश्य नामरूपे व्याकरवाणीत्ययमर्थः। न चात्र व्याकरणकर्तुस्तिङाभिहितत्वेनानभिहि-ताधिकारीयतृतीया न स्यादितिवाच्यम्। आत्मशब्दस्य स्वरूपरूपार्थ-कत्वमाश्रित्य कल्पितभेदमादाय 'सूर्यः स्वरूपेण प्रकाशते' इतिवदुपपत्तेः। अथवा करण एवैषा तृतीया। आत्मशब्दः शरीरपरः। तथा च युवशरीरेण गृहमनुप्रविश्य गार्हस्थ्यमनुभवानीतिवच्छरीररूपेणानेन जीवेनानुप्रविश्य नामरूपे व्याकरवाणीत्यादिरर्थः। जीवपदमेतत्कल्पे जीवाख्यशरीरमात्रपर इति दिक्। तथा च तस्यैव तेज आदिषु प्रवेशनतन्नामरूपव्याकरणादिवि-चारस्य तत्कथनस्य च चेतनधर्मत्वेन सत्पदवाच्यब्रह्मधर्मत्वोपपत्तेर्मुख्य-त्वमेवेक्षणस्य। "स आत्मा तत्त्वमसि श्वेतकेतो" ( छा० ६।८।७ ) इत्यात्मशब्देन स्पष्टमभिधानाच्च। न ह्यात्मनो जडत्वं येन गौणत्व-मीक्षणस्य स्यात्। एवञ्च "तत्तेज ऐक्षत" "ता आप ऐक्षन्त" इति श्रूयमाणमीक्षणं तच्छरीरान्तर्यामिपरमात्मन एवेति सिद्धम्।

तेजस्यन्तर्यामितया परमात्मनो नियमनकर्तृत्वन्त्वन्तर्यामिब्राह्म-णात्सिद्धम्। तथाहि–"यस्तेजसि तिष्ठन् तेजसोऽन्तरो य तेजो न वेद यस्य तेजः शरीरम् यस्तेजोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः" ( बृ० ४। ७।१४ ) "योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपो-ऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः" ( बृ० ४।७।४ ) "यः सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योऽन्तरः यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरम्" ( बृ० ४।७।१५ ) इत्यत्र तेजोऽन्नादिपरवाक्येष्वात्म-शब्दश्रवणादात्मनस्तेजोवाद्यन्तर्यामित्वेन तच्छरीरितया तेजोबादीनाञ्च शरीरतया श्रवणादीक्षणादेः शरीरधर्मत्वानुपपत्त्या तदन्तर्यामितया

समवस्थितपरमात्मधर्मत्वेन मुख्यत्वम् । तद्वदत्रापि सत्पदवाच्यब्रह्मेक्षणस्य मुख्यत्वमेव ।

किञ्च "आत्मा वा इदमग्र आसीत् । नान्यत्किञ्चन मिषत् । स ईक्षत लोकान्नु सृजा इति । स इमांल्लोकानसृजत" ( ऐ० १।१ ) सदेव सोम्येदमग्र आसीदित्युभयोर्वाक्ययोस्समानार्थकत्वेनैकवाक्यत्वसिद्धौ सच्छब्दस्यात्मवाचकत्वेन तदीक्षणस्य प्राधान्यमेव । एवं "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" ( तै० २।१ ) इत्यस्य सदेवेत्यादिवाक्यस्य च समानार्थकत्वेन सत्पदाभिधेयस्यात्मपदवाच्येन सहाभेदात्तदीक्षणस्य मुख्यत्वान्न सत्पदवाच्यमचेतनं केवलं प्रधानं जगतः कारणमिति ।

इतश्च न प्रधानं सत्पदवाच्यम् ।

## तन्निष्ठस्य मोक्षोपदेशात् ।१ १ । ७।

अत्र प्रकृतसत्पदाभिधेयतत्त्वनिष्ठस्योपासकस्य मोक्षोपदेशान्न प्रधानं सत्पदग्राह्यमिति तथाहि-सदेवेत्यारभ्य "अन्नेन सोम्य शुङ्गेनापोमूलमन्विच्छद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ । सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" ( छा० ६।८।४ ) इति सत्पदवाच्यस्यैव सर्वप्रजाया मूलत्वेन तत्स्रष्टृत्वं तदायतनत्वेन तत्स्थितिहेतुत्वं तत्प्रतिष्ठत्वेन तत्प्रलयहेतुत्वञ्चाभिधायानन्तरम् "अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्" (छा० ६।८।६ ) "स य एषोऽणिमा" ( छा० ६।६।४ ) इतिप्रकृतमेव सत्पद वाच्यं परदेवतापदेनाणिमशब्देन च परामृश्य "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" ( छा० ६।८।७ ) इत्यत्र स आत्मेति तस्यैव प्रकृतस्य सत्पदवाच्यस्य संग्रहः । एतदात्मकमिदं सर्वमिति सदात्मकत्वं सर्वस्य जगतो ज्ञापयित्वा "तत्त्वमसि श्वेतकेतो" रिति चेतनस्यापि सदात्मकत्वोपदेशेन तन्निष्ठोपदिष्टा । ततश्च सद्ब्रह्मात्मकत्वेन ब्रह्मव्याप्यत्वेन प्रत्यगात्मानुसंधान-

निष्ठस्य तस्य "आचार्यवान् पुरुषो वेद" ( छा० ६।१४।२ ) इतिरीत्या "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति" ( छा० ६। १४।२ ) इति मोक्षोपदेशश्रवणात्। एवञ्च पूर्वोदितसद्विषयकज्ञानवतस्तत्त्वमसीत्युपदेशेन स्वस्य सत्तादाम्यज्ञानं मोक्षहेतुनं हि स्वस्याचिदभेदज्ञानम्। तस्मात्सच्छब्दवाच्यं जगत्कारणमात्मैव न प्रधानम्। अत्र श्रुतौ "विमोक्ष्येऽथसम्पत्स्य" इत्युभयत्रोत्तमपुरुषः छान्दसत्वात्प्रथमपुरुषे ज्ञेयः ॥७॥

## हेयत्वावचनाच्च १ १ ८।

"ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" ( छा० ६।६।४ ) इत्यत्र हेयत्ववचनाभावान्न सच्छब्दवाच्यं प्रधानम्। यदि तदेव स्यात्तदा तदनात्मतत्त्वं त्वं नासि, अतस्तदात्मकत्वेनात्मानं नानुसंधत्स्व तदनुसंधानस्य मोक्षविरोधित्वादित्येवं मातापितृसहस्रवत्सलतरेण परमहितानुशासनपरेण वेदेनोपदिष्टं स्यात्। यथाऽरुन्धतीं दिदर्शयिषुस्तत्समीपस्थतारााणां हेयत्वं स्पष्टं निर्दिशति तद्वदिहापि स्यान्न च तथा दृश्यते ॥८॥

इतोऽपि न प्रधानं सच्छब्दवाच्यमित्याह--

## प्रतिज्ञाविरोधात् ।१ १।६।

"येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातंस्यात्" (छा० ६।१।३) इत्यत्र कारणविज्ञानेन तत्कार्यभूतस्य सर्वस्य विज्ञानमितीयं सर्वविज्ञान विषया प्रतिज्ञा विरुद्धयते प्रधानस्य स्वातन्त्र्येण कारणत्वे। कुतः? प्रधानस्याचेतनत्वेन तद्विज्ञानेन चेतनाचेतनसम्मिन्नस्य सर्वस्य प्रपञ्चजातस्य विज्ञानं न स्यात्। चेतनवर्गस्य तत्कार्यत्वाभावेन सर्ववस्तुविषयिण्याः प्रतिज्ञाया विरोधः स्पष्ट एव।

सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मणस्तु पुनः "यतो वे" त्यादिश्रुतिशतसमधिगते जगत्कारणत्वे तस्यैव सत्पदवाच्यत्वेन तद्विज्ञानेन सर्वमिदं

स्थूलरूपेण परिदृश्यमानं चिदचिदात्मकं कार्यरूपं जगद्विज्ञातमेव भवतीति सम्यगुपपद्यते प्रतिज्ञा । तथाहि-"स्तब्धोऽस्युत तमादेशमप्राक्ष्यः" (छा०-६।१।२) अत्रादेशः प्रशासनं कर्ता आङ्पूर्वाद् दिश् धातोः कर्तरि घञ् बाहुलकात् । विवक्षातः कारकाणि भवन्तीति सिद्धान्ताच्च । अथवाऽर्शाद्यजन्त आदेशशब्दो ज्ञेयः । एवं चाखिलजगदुपादानभूतं प्रशासितारं जगदात्मानं पृष्टवानसीत्यर्थः । ततः स्वयमेवोद्दालको येनाश्रुतं श्रुतं भवतीति प्रतिज्ञामाह-"कथं नु भगवः स आदेशो भवति" (छा०६।१।३) इतिजिज्ञासिते प्रतिज्ञातस्यार्थस्य स्पष्टं प्रबुबोधयिषया "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्" (छा० ६।१।७) इत्यादि दृष्टान्तानां "सदेव सोम्य" इत्यादिवाक्यानाञ्चोपादानम् । एतत्सर्वमुपक्रमोपसंहाराभ्यां ब्रह्मण एव जगत्कारणत्वेन सत्पदवाच्यत्वमित्यर्थं सिद्धयति ॥६॥

इतश्च न प्रधानं सत्पदवाच्यम्--

## स्वाप्ययात् ।१।१।१०।

अत्रापि तदेव सत्पदवाच्यं कारणं प्रकृत्याह--"स्वप्नान्तं मे सोम्य विजानीहीति" "यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वमपितीत्याचक्षते स्वं ह्यपीतो भवति" (छा० ६।८।१) इति सुषुप्तस्य जीवात्मनः सता सम्पत्तिर्भवतीति श्रुतिर्दर्शयति । स्वमपीतो भवतीत्यनेन प्रलयो बोध्यते । स च सर्वेषां स्वकारण एव भवतीति सकलतान्त्रिक समयः । एवञ्चात्र सत्पदेन प्रधानाख्ये केवलेऽचेतने गृहीते तत्रैव लयो वक्तव्यः । स चायुक्त एव । नहि चेतनस्य जीवस्याचेतने लयः सम्भवद्युक्तिकः । तस्मात्सूक्ष्मचिदचिद्विशिष्टे ब्रह्मणि सत्पदवाच्य एव स्वाप्ययो युक्त इति ॥१०॥

प्रधानं न जगतः कारणमित्यर्थेऽन्येषां वेदान्तवाक्यानां सम्मतिमाह-

## गतिसामान्यात् ।१।१।११

सर्वेष्वपि वेदान्तेषु चेतनस्य ब्रह्मण एव कारणत्वमुच्यते न प्रधाना-

दीनाम् । यद्यत्र सद्विद्यायां सत्पदवाच्यं प्रधानमेव जगत्कारणतयोच्येत तर्हि तद्भिन्नानामात्मपदबोध्यब्रह्मणो जगत्कारणत्वाभिधायिनीनामनेकश्रुतीनां वैमत्यं प्रसज्येत । एकार्थप्रतिपादकत्वरूपमेकवाक्यत्वञ्च भज्येत । ताश्च श्रुतयः "आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किञ्चन मिषत् स ईक्षते लोकान्नु सृजा इति स इमान् लोकानसृजत" (ऐ० १।१) "आत्मन एवेदं सर्वम्" (छा० ७।२६।१) तस्माद्वा एतस्मादात्मन आकाशः सम्भूत." (तै० २।१) "आत्मन एष प्राणो जायते" (प्रश्न०३।३) "यतो वा इमानि भूतानि जायन्ते" "तद्विजिज्ञासस्व तद्ब्रह्म" (तै० ३।१) इत्याद्याः । एतेषां वाक्यानां या गतिर्यत्रार्थेऽध्यवसिता प्रवृत्तिस्तत्समानार्थकत्वादस्यापि वाक्यस्य सा स्यात् । प्रदर्शितवाक्येष्वात्मादिपदोपादानाच्चेतन एव जगत्कारणत्वसमर्थनम् । नह्यात्मशब्दोऽत्र समुपस्थापयति स्ववाच्यतयाऽचेतनम् । ननु दृष्ट एवात्मशब्दोप्यर्थान्तरे प्रयुक्तः ममात्मायम्पुत्रः, आत्मानं सततं रक्षेत्, भूतात्मा प्राणात्मा इत्येवं प्रामाणिकप्रयोगाणां बाहुल्यादितिचेन्न । उदाहृतेषु प्रयोगेष्वात्मशब्दस्य भाक्तत्वात् । अन्यथाऽनेकार्थकत्वप्रसङ्गात् । सत्येकार्थतात्पर्यनिश्चयेऽनेकार्थकत्वकल्पनाया जघन्यत्वात् । स आत्मा तत्त्वमसीत्यादौ नहि श्वेतकेतोश्चिच्छरीरकस्यात्मपदवाच्यः कश्चिदचेतन आत्मा स्यात् । तस्मादनेकयुक्तिप्रमाणैरात्मपदवाच्यश्चेतन एवेति सिद्धम् ॥११॥

इतश्च न सत्पदवाच्यं प्रधानम् ।

## श्रुतत्वाच्च ।१ १ १२।

श्रुतमेवास्मिन्सद्विद्याप्रकरणे सच्छब्दवाच्यस्योत्तरत्र वाक्येष्वात्मत्वेनानुस्मृतिः । तथा हि--सदेव सोम्येदमग्र आसीदित्युपक्रम्य "तत्तेजोऽसृजत" "सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इति मध्ये प्रदर्श्य "स एषोणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" (छा० ६।८।३) इत्येवमादिभिस्तस्य सच्छब्दवाच्यस्यात्मत्वमुपदर्श्य सत आत्मन एव जगत्स्रष्टृत्वनामरूपव्याकर्तृत्व-सर्वज्ञत्व-

सर्वशक्तित्व-सर्वाधारत्वादयो गुणाः स्पष्टम्प्रतिपादिताः। एवं तस्यामेवोपनिषदि सप्तमाष्टमयोः प्रपाठकयोः 'आत्मैवेदं सर्वम्" (छा० ७।२५।२ "आत्मत आकाश आत्मतस्तेज आत्मत आप" इत्यारभ्य "आत्मत एवेदं सर्वम्" (छा०७।२६।१।) "य आत्माऽपहतपाप्मा" इत्यारभ्य "सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" (छा०८।४।१।) इतिश्रुतम्। एभिः स्पष्टमेव सत्पदवाच्यात्मन एवापहतपाप्मत्व-सत्यकामत्वसत्यसंकल्पत्वादयोऽसाधारणधर्माः प्रतिपादिताः। तस्मादत्र सत्पदवाच्यस्य परमात्मन एव जगत्कारणत्वमितिसिद्धम् ॥१२॥

## * अथानन्दमयाधिकरणम् ॥६॥

तदेवमथात इत्यारभ्य श्रुतत्वाच्चेत्येतदन्तैः सूत्रैः सर्वज्ञसर्वशक्तिमत् सर्वकारणं सर्वात्मकं चित्स्वरूपं ब्रह्म सर्ववेदान्तप्रतिपाद्यमित्युपपाद्याचेतनप्रधानस्य स्वातन्त्र्येण जगत्कारणत्वनिरासेन न ब्रह्म लक्षणस्य तत्रातिव्याप्तिरितिस्पष्टमुपपादितम्।

अथापि चेतनसामान्यात्प्रकृतिसंयोगहेतुकविविधवृजिनसन्तप्तस्य प्रत्यगात्मनोऽपि कैश्चिच्छास्त्रोपदर्शितोपायैस्तदंशविशुद्धतायां सम्पादितायां तत्र तल्लक्षणस्योपसङ्क्रमः स्यादिति तामिमां शङ्कामपाचिकीर्षन्नुत्तराधिकरणमारचयति--

## आनन्दमयोऽभ्यासात्। १।१।१३।

तैत्तिरीयके-अन्नमयप्राणमयमनोमयविज्ञानमयादिप्रतिपादनादनन्तरं "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमयस्तेनैष पूर्णः स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य प्रियमेवशिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा।

---

* आनन्दमयवाक्ये किं जीवो ब्रह्माथवोच्यते ? ॥ १७१ ॥ जीवः 'शारीर' इत्युक्त्या ह्यभ्यासाद् ब्रह्मवाच्यता।

ब्रह्मपुच्छं प्रतिष्ठा ।" (तै० २।५।) इति श्रूयते तत्र संशयः । किमत्रानन्दमयपदेन" "सत्यंज्ञा नमनंतं ब्रह्मे ति प्रकृतं परम्ब्रह्मै वाभिधीयत आहोस्वित् प्रत्यगात्मपदवेदनीयो जीव इति । कस्मिन्नर्थे प्राकरणिकानामर्थानां सामञ्जस्यम् । किञ्च युक्तम् ? प्रत्यगात्मन्येवाखिलप्राकरणिकानामर्थानां साङ्गत्येन जीव एवात्राभिहितः ।। कुतः ? "अन्नमयादिविकारसाहचर्यात् । तस्यैष शारीर आत्मेति तस्य पूर्वस्य पुच्छवत्तदाधारत्वनिर्देशेन ततः पृथक्त्वज्ञापनात् । तस्य च चेतनत्वेनेक्षणपूर्वकसृष्टयादिकर्तृत्वोपपत्तेः । सत्यं ज्ञानमनन्तं ब्रह्मेत्यारभ्यानन्दादेव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्ति" (तै० ३।६।) इत्यन्तेयं श्रुतिर्जीवस्यैव ब्रह्मत्वमात्मत्वमानन्दत्वं जगत्कर्तृत्वं च ज्ञापयतीति प्राप्त उच्यते । आनन्दमयोऽभ्यासादिति आनन्दमयः परमात्मा भवितुमर्हति । कुतः ? अभ्यासात् । आनन्दमयपदस्य ब्रह्मण्येवाभ्यासदर्शनात् । तथाहि-अन्योऽन्तर आत्मानन्दमयस्तमप्रकृत्य, "रसो वै सः" (तै० २।२७।) इति तस्यैव रसत्वं सारत्वमानन्दत्वमुक्त्वोच्यते "रसं ह्येवायं लब्ध्वानन्दी भवति । कोह्येवान्यात्कः प्राण्यात् यदेष आनन्दो न स्यात् । एष एवानन्दयति । यदाह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्ते निलयनेऽभयं प्रतिष्ठां विन्दतेऽथ सोऽभयंगतो भवति । सैषाऽऽनन्दस्य मीमांसा भवति युवास्यात्साधुयुवाध्यापकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वावित्तस्य पूर्णा स्यात् । स एको मानुष आनदः । ते ये शतं मानुषा आनन्दाः । स एको मानुषगन्धर्वाणामानन्दः" (तै० २।८।१।) एवं पूर्वेषां पूर्वेषां शतेन शतेन चानन्देन तुल्य उत्तरेषामुत्तरेषाञ्चैक आनन्दः । एवं गंधर्वदेवगन्धर्वपि आजानजदेवकर्मदेवदेवेन्द्रबृहस्पतिप्रजापतीनामानन्दानुक्त्वाह "तेये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" (तै० २।८।१।) इत्यानन्दवल्ल्यामसकृदभ्यस्यमानमानन्दपदं स्वकर्मोपार्जितानन्तक्लेशाश्रयप्रत्यगात्मनि प्रसरतामलभमानं निखिलकल्याणगुणाभाजनं

निस्समाभ्यधिकं परमपुरुषं श्रीरामपदवाच्यं भगवन्तमेव स्ववाच्यतयोपस्थापयतीति निरवद्यम् ।

अग्रेऽप्यस्य प्रकरणस्योक्तेऽर्थ एव पर्यवसानात् स एवार्थोऽवसेयः । तथाच "भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधि हि भगवो ब्रह्मेति । तस्मा एतत्प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनोवाचमिति तं होवाच यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति । स तपोऽतप्यत स तपस्तप्त्वाऽन्नम्ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते" (तै० ३।२) इत्यारभ्यानन्दो ब्रह्मेति व्यजानात् आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दम्प्रयन्त्यभिसंविशन्तीति सैषा भार्गवी वारुणी विद्या । परमेव्योमन् प्रतिष्ठिता" (तै० ३।६) इत्यन्तयावल्या स्पष्टमेवानन्दस्य ब्रह्मत्वाभिधानात् ।

अत्र हि सृष्टिस्थितिप्रलयकारणस्य बुबोधयिषया वरुणेन क्रमशोऽन्नप्राणमनोविज्ञानानन्दानां भृगुम्प्रत्युपदिष्टत्वात् पर्यवसाने चानन्दाद्ध्येव खल्विमानीति श्रुत्याऽनन्दस्यैव ब्रह्मस्वरूपत्वावगमः कृतः । तदनन्तरं प्रश्नप्रतिवचनयोरश्रवणात् भृगोर्जगत्कारणविषयिण्या जिज्ञासाया आनन्द पदार्थ एव परिसमाप्तत्वाद्वारुणिविद्ययानन्दस्यैव ब्रह्मत्वं जगत्कारणत्वमितिनिश्चयादानन्दमयपदव्यपदेश्यः परमात्मैव न जीव इति ।

किञ्च "स एको मानुष आनन्द" इत्यारभ्य 'स एको ब्रह्मण आनन्द' इत्यन्तेन मनुष्यादिप्रजापत्यन्तानां जीवानामानन्देभ्यो ब्रह्मण आनन्दस्य बहुप्रचुरत्वश्रवणादानन्दप्रचुर आनन्दमयः परमात्मैव भवितुमर्हति नजीवस्तदल्पतरानन्द इति सिद्धम् । एवं जगद्व्यापारवर्जमितिसूत्रकारेणैव जीवस्य जगत्सृष्ट्यादिकर्तृत्वप्रतिषेधात् प्रकृते चानन्दस्य जगत्कर्तृत्वश्रवणादानन्दमयस्य परमात्मपरत्व एव तत्सामञ्जस्यादानन्दमयः परमात्मैवेति सिद्धम् ।

यदुक्तं "ब्रह्मपुच्छं प्रतिष्ठा" इति ब्रह्मण आनन्दमयपुच्छत्वोक्त्या

पुच्छवत्तदाधारत्वेन ततोऽभिन्नत्वज्ञापनादानन्दमयो जीव इति। तन्न। कुतः उक्तेनाभ्यासेन जगत्कारणत्वेन चानन्दमयस्य परमात्मत्वनिष्पत्तेः ब्रह्मपुच्छं प्रतिष्ठेत्यस्य चानन्दमय आत्मा स एव ब्रह्मपुच्छवदन्नमयाद्याधारः प्रतिष्ठेत्यर्थकत्वात् तदुपपत्तेः।

किञ्च यथाऽन्नमयो देहः स्वस्मादभिन्नैः स्वावयवैरेव शिरश्चक्षुः श्रोत्रहस्तपादादिभिर्व्यपदिश्यते। तथानन्दमयब्रह्मापि "सवा एष पुरुषविध एव। तस्य पुरुषविधतामन्वयं पुरुषविध"इत्युक्तस्य पुरुषविधत्वस्योपपादकैः स्वस्मादभिन्नैः प्रियमोदप्रमोदपुच्छैः "तस्य प्रियमेवशिरः" इत्याद्युक्तैर्व्यपदिष्टं भवति। तत्रावयवत्वेन निरूपितानां प्रियमोदप्रमोदानां पुच्छत्वेन प्रतिष्ठत्वेनाश्रयत्वेनानन्दमयं ब्रह्माखण्डानन्दं भवतीति ज्ञापनाय 'पुच्छम्प्रतिष्ठे' त्युक्तम्। यदित्वानन्दमयादन्यद्ब्रह्म स्यात्तदा "तस्माद्वा एतस्मादानन्दमयादन्योन्तर आत्मा ब्रह्मे"त्यादिकमप्युक्तं स्यान्नत्वेवं वचनान्तरं श्रूयते। तस्मादानन्दमय एव ब्रह्म न ततोऽन्यदिति। यत्तूक्तं "तस्यैष एव शारीर आत्मा" तस्य पूर्वोदितस्य विज्ञानमयस्य एष आनन्दमयः शारीर आत्मेत्यानन्दमयस्य शारीरत्वश्रवणात् शरीरशारीरत्वोपपत्तेः शारीरो जीव एवानन्दमयो भवितुमर्हतीति तन्न। "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवीशरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः" ( बृ० ३।७।३ ) इत्युपक्रम्य, "योप्सु तिष्ठन् योऽग्नौ तिष्ठन्, योन्तरिक्षे तिष्ठन् यो वायौ तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद" (बृ० ३।७।२२) इत्यादिकं बृहदारण्यके पठितम्। माध्यन्दिनीयास्तु विज्ञानस्थान एवमधीयते "य आत्मनितिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरम् य आत्मानमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतोऽन्यदार्त्तम्" । ( बृ० ३।७।२२ ) इत्यादौ सर्वेषां पृथिव्यादीनां तथा मनसः प्राणस्य, विज्ञानात्मनश्च परमात्मशरीरत्वश्रवणात् परमात्मनश्च तदन्तर्याम्यात्मत्वश्रवणाच्च तस्यैव सर्वशारीरत्वनिष्पत्तेरतः परमात्मैवानन्दमयो भवितुमर्हति न ततोऽन्यो जीव इति

"अतोऽन्यदार्त्तमिति" परमात्मव्यतिरिक्तस्यार्त्तत्वश्रवणात् जीवस्यानन्दमयत्वासम्भवात् ॥१३॥

नन्वस्तु ब्रह्मण आनन्दपदवाच्यत्वम् परमानन्दमयपदबोध्यत्वन्तु न सम्भवति मयटोविकारार्थकत्वात् । यथा दारुमयो हस्ती, मृण्मयानि पात्राणि-पर्णमयी जुहूः दर्भमयी वेदी, इत्यादौ विकारार्थकस्य दृष्टत्वात् विचार्यमाणप्रकरणेऽपि "अन्नमयः प्राणमयो मनोमय" इत्यादिषु च यथा विकारार्थकस्य मयटो दृष्टत्वात्तथा प्रकृत आनन्दमयपदेऽपि प्रायपाठसामर्थ्याद्विकारार्थकस्यैव मयटो ग्राह्यत्वात्तादृश आनन्दविकारत्वं प्रत्यगात्मनिजीवे सम्भवत्येव संसारित्वदशायामिति जीवस्यैवात्रानन्दमयपदभाक्त्वं नतु परमात्मनस्तस्याविकृतत्वादित्याशंक्य समाधत्ते ॥ १३ ॥

## विकारशब्दान्नेतिचेन्न प्राचुर्यात् । १।१ १४।

अन्नमय इति विकारार्थकमयट्साहचर्यादानन्दमय इत्ययमपिमयट्विकारार्थक एवातो नानन्दमयपदवाच्यं ब्रह्म भवितुमर्हतीति चेन्न । प्राचुर्यात् आनन्दमय इत्यत्र मयट्प्रत्ययस्य प्राचुर्याभिधायित्वात् । "स एको मानुष आनन्द "इत्यारभ्य" स एको ब्रह्मण आनन्द" इत्यन्तेन मानुषाद्यानन्देभ्यः प्रजापतिपर्यन्तानन्दानां शतगुणाधिक्यश्रवणात् । ततोऽपि ब्रह्मण आनन्दस्य शतगुणाधिक्यस्य श्रवणात् तदानन्दस्य प्रचुरत्वोपपत्तेरयमानन्दप्रचुरः परमात्मैव नत्वल्पतरानन्दो जीव इति । यतो ब्रह्मण आनन्दस्य ज्ञानाज्जीवोऽभयं गच्छतीत्युक्तन्तत्रैव " यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" ( तै० २।९। ) इति । ब्रह्मणः प्रचुरानन्दज्ञानाज्जीवोऽप्यभयतामुपयाति कुतस्तर्हि तदानन्दप्राचुर्यं प्रत्यगात्मनीति ब्रह्मैवानन्दमयपदवाच्यम् ।

यदुक्तं अन्नमयेत्यादौ प्रायपाठबलात्समानार्थकत्वस्य न्याय्यत्वेन विकारार्थकत्वमेवानन्दमयपदेऽपि मयट इति । तदयुक्तम् । प्राणमय एव तावत्तस्य विकारार्थकस्य मयटोसम्भवाद्-तत्रैवान्यार्थस्य स्वीकर्तव्यत्वात् ।

अत्रेदं विचारणीयम् । विज्ञानमयानन्दमयपदयोर्मयट् विकारार्थं कथं निष्पद्यते ? मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोरिति पाणिनीयन्तु भाषायामेव प्रवर्तते नच्छन्दसि प्रकृतपदयोश्चच्छान्दसत्वात् । न च नित्यं वृद्धशरादिभ्यः ( ४।१४४ ) इति वृद्धत्वादेव मयडितिवाच्यम्, तत्रापि पूर्वसूत्रेण मयडादीनामिव भाषायामित्यस्याप्यनुवृत्तेरानुभविकत्वात् । "शरमयं बर्हिर्भवति" 'दर्भमयं वासो भवति' यस्य पर्णमयी जुहूरित्यादि वैदिकेषुप्रयोगेषु" "द्वयचश्छन्दसि (पा० सू० ४।३।१५०) इत्यनेनैव सिद्धिः विज्ञानानन्दयोर्द्व्यच्कत्वाभावान्न तेन निर्वाहः । मृण्मयगृहमिति वैदिकोऽपि चत्प्रयोगस्तर्हि तत्र प्राचुर्यं एवं मयट् । एवमागताचर्येष्वपि मयटोऽसामञ्जस्यं स्पष्टमेव । तस्मादत्रानन्दप्रकृतिको मयट् प्राचुर्य एव "तत्प्रकृतवचने मयट्' (पा०सू० ५।४।२१) इति सूत्रेण विहितोऽपूपमयं पर्व इतिवत्। तथाच-विज्ञानमयो विज्ञानप्रचुरो यथा जीवस्तथाऽनन्द प्रचुरः परमात्मेति सिद्धम् ।

एतदुक्तं भवति अत्र "यद्येष आकाश आनन्दो न स्यात्" एष "एवानन्दयाति" " आनन्दं ब्रह्मणो विद्वान् " " विज्ञानमानन्द ब्रह्म व्यजानात्" "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त " इत्येवमादिकमानन्दस्यैवाभ्यासं दृष्ट्वाऽनन्दमयपदाभ्यासमदृष्ट्वाऽपि सूत्रकार आनन्दोऽभ्यासादित्येवं न सूत्रयामास किन्त्वानन्दमयोऽभ्यासादित्येवम् । पुनः विकारशब्दान्नेतिचेन्न प्राचुर्यादित्यत्र मयटः स्वार्थिकत्वं विहाय प्राचुर्यार्थकत्वं यदुक्तं तत् गौणश्चेन्नात्मशब्दादित्यत्रत्तेनात्मशब्देनेक्षणकर्तृकत्वाच्चेतनवाचकेन ब्रह्मस्वरूपस्य चिज्ज्योतिरात्मकत्वं यज्ज्ञापितं तच्चिज्ज्योतिः स्वरूपं ब्रह्म, आनन्दप्रचुरं प्रभूतानन्दगुणकमस्तीति ज्ञापनार्थमेव । यद्यानन्दस्य ब्रह्मस्वरूपत्वज्ञापनपरः सूत्रकारो भवेत्तदाऽनन्दोऽभ्यासादित्येवं सूत्रयेत् । द्वितीयसूत्रेऽपि स्वार्थिकत्वादित्येव लिखेन्नतु प्राचुर्यादिति । प्रभूतानन्दगुणकं चिज्योतिः स्वरूपं ब्रह्म जगत्कारणं जिज्ञास्यमिति ज्ञापनार्थमेव तथोक्तम् । अत एव " आनन्दादयः प्रधानस्य" ( ब्र० सू० ३।३।११ ) इति सूत्रेणा-

प्यानन्दादीनां ब्रह्मगुणतया स्फुटीकरिष्यमाणत्वात्। तदेतच्छ्रुतिसिद्धमेव ज्ञापितं सूत्रकारेणेति। तथाच श्रुतिः–"सत्यं ज्ञानमनन्तं ब्रह्म" (तै०२।१।) इत्यनेन वाक्येन ब्रह्मणः स्वेतरव्यावृत्तं स्वरूपमभिधीयते। तत्र चत्वारि पदानि सन्ति। एकस्मिन् वाक्ये एकस्यैव पदस्य विशेष्यताप्रयोजकत्वमितिनियमादत्र सत्यज्ञानानन्तपदानितु स्ववाच्यवृत्तिविशेष्यतानिरूपितप्रकारताप्रयोजकानीति मन्तव्यम्। तत्र विनिवृत्तोपाधिकसत्त्वाश्रयत्वम्प्रवृत्तिनिमित्तीकृत्य तदाश्रयीभूतं ब्रह्माभिधत्ते सत्यपदम्। तेन च चिदचितोर्व्यावृत्तिः फलिता। तत्राचित् द्रव्यस्य स्वरूपतः परिणामित्वेनावस्थान्तराश्रयणाद्विकारितया सोपाधिकसत्ताश्रयत्वम्। तदन्वयानुविधायित्वेन तत्संसृष्टचेतनस्यापि नामान्तरादिधारकतयोपाधिकसत्त्ववत्त्वम्। अतस्तद्व्यावृत्तिरत्र सत्यपदेन सम्पद्यत एव। नित्यत्वविशिष्टसंकोचविकासपरिहीणसमानाकारकज्ञानाश्रयीभूतं ब्रह्माचष्टे ज्ञानपदम्। अतः संसारदशायां संकुचितज्ञानवतां मुक्तात्मनां व्यावृत्तिः। देशादिपरिच्छिन्नताराहित्याश्रयीभूतञ्च ब्रह्मोपस्थापयत्यनन्तपदम्। ततश्च ब्रह्मणः सगुणत्वात्तत्स्वरूपस्य तद्गुणानाञ्चानन्त्यात्सातिशयस्वरूपगुणवतां नित्यानाञ्च व्यावृत्तिः फलति। त्रिभिर्विशेषणैरेतत्त्रयं व्यावृत्यते। एतेन जीवानां बद्धमुक्तनित्यभेदेन त्रैविध्यमपि दर्शितम्भवतीत्यन्यत्र विस्तरः। प्रकृतलक्षणे ज्ञानमिति पदस्यार्शआद्यजन्तत्वेन ज्ञानगुणाश्रयत्वमेवार्थः। एवं ज्ञानस्वरूपत्वमप्यर्थः सतु ' प्रज्ञानघनएवानन्दमयः" इत्यादिश्रुतिभिरवगन्तव्य इति। तदुक्तं वाक्यकारेण प्रकृतश्रुतिविमर्शे तैत्तिरीयश्रुत्युपगृहीतसत्यादिपदैर्निरस्ताऽखिलकसंबन्धं परिणामाश्रयचिदचित्स्वरूपविलक्षणं सर्वशितुः परमपुरुषस्य दिव्यस्वरूपमुपदिशत् इति।

एवञ्चात्र वाक्ये सत्यमनौपाधिकमबाधितं ज्ञानं स्वप्रकाशकम् अनन्तमपरिच्छिन्नं ब्रह्मेत्यर्थः पर्यवसन्नो भवति। तथैव "विज्ञानमानन्द ब्रह्म" ( बृ० ३।६।२८ ) इति विज्ञानपदेन स्वप्रकाशचिज्ज्योतीरूपमवक्तव्यम्भवति तस्यतेजोभूतत्वाद्दद्रव्यम्, आनन्दस्य सुखपर्यायत्वेन गुणत्वं

गुणस्यच द्रव्याश्रितत्वेन चिज्ज्योतिषो गुण एवानन्दः । तत्राप्यानन्दस्य क्लीबत्वनिर्देशात् ब्रह्मपदसामानाधिकरण्याच्च ब्रह्मरूपसमानाकारत्वमवगम्यते । अन्यथाऽऽनन्दपदस्य घञन्तत्वेन घञजपः पुंसीतिलिङ्गानुशासनबलात् पुंस्त्वं स्यात् । तथा चायमर्थः सम्पन्नो भवति, स्वरूपसमानाकारानन्दगुणकं स्वप्रकाशज्योतिःस्वरूपं ब्रह्मेति । एवमेव "आनन्दो ब्रह्म" ( तै० ३।६ ) इत्येवमाद्याः श्रुतयः ब्रह्मपदसामानधिकरण्यात्तमेवार्थमुपस्थापयन्ति । तस्मात्स्वरूपसमानाकारानन्दगुणकं स्वप्रकाशचिज्ज्योतिःस्वरूपखिलजगत्सृष्टिस्थितिप्रलयकारणं ब्रह्मैव सर्ववेदान्तप्रतिपाद्यं यत्तदेवात्राभिहितम् । अतएव तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवदिति 'सूत्रकारेणात्मनो विज्ञानानन्दगुणसारत्वाच्च विज्ञानानन्द- पदाभ्यां व्यपदेश इति स्पष्टमुक्तम् । प्राज्ञवदिति दृष्टान्तः । यथा यः सर्वज्ञः सर्वविदिति सर्वज्ञातृत्वेन श्रुतः प्राज्ञो ज्ञानगुणसारत्वात् सत्यं ज्ञानमनन्तं ब्रह्मेति ज्ञानशब्देन व्यपदिश्यते । यथा च आनन्दं ब्रह्मणो विद्वानिति । स एको ब्रह्मण आनन्द इत्यानन्दगुणकत्वेन श्रुतस्य प्राज्ञस्वानन्द गुणसारत्वात् "यदेष आकाश आनन्दो न स्यात्" "आनन्दो ब्रह्म व्यजानात्" ( तै० ३।६। ) इत्यादावानन्दशब्देन व्यपदेश इति ज्ञानानन्दयोर्ब्रह्मगुणसारत्वेन तत्सामानाधिकरण्यनिर्देशेन च ब्रह्म स्वरूपसमानाकारतैव प्रथितः भवतीति दिक् ॥१४॥

## तद्धेतुव्यपदेशाच्च । १।१।१५

आनन्दप्रचुरः परमात्मेत्यत्र हेतुमाह तद्धेतुव्यपदेशाच्चेति "एष एवानन्दयति" ( तै० २।७ ) एष परमात्माजीवमानन्दयतीति जीवानन्ददाने परमात्मनोऽत्र हेतुव्यपदेशात् । योऽन्यानानन्दयति स स्वयमानन्दप्रचुरो भवति यथा लोके स्वय धनी सन्नेव परान्धनिनः करोति तथाऽऽनन्दयातीति निर्देशः । दीर्घश्छान्दसः । अथवा इतश्चानन्दमयः परमात्मेत्याह "तद्धेतुव्यपदेशाच्च" तस्यानन्दमयस्य परमात्मत्वे यो जगत्सृष्टया-

दिकर्तृत्वरूपोऽव्यभिचारी हेतुस्तस्य "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" ( तै० ३।६। ) इत्यादिना व्यपदेशादानन्दमयः परमात्मा । यतो हि "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" त्यनया श्रुत्या जगज्जन्मादिकर्तृत्वस्य ब्रह्मैकनिष्ठत्वबोधनेन तस्य ब्रह्मत्वसाधकहेतुत्वात् । एवं "आनन्दादेव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दम्प्रयन्त्यभिसंविशन्ति" ( तै० ३।६। ) इत्यत्रानन्दमयस्य ब्रह्मत्वज्ञापकतयानन्दमयः परमात्मैव । प्रयोगस्त्वीदृशः "आनन्दमयः परमात्मा जगत्सृष्ट्यादिकर्तृत्वात्" यन्नैवं तन्नैवं एवमप्यानन्दमयपदवाच्यं ब्रह्मेति सिद्धम् ॥१५॥

इतश्च न जीव आनन्दमयः--

## मान्त्रवर्णिकमेव च गीयते । १।१।१६।

"सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रवर्णोदितं ब्रह्मैवानन्दमयो गीयते ।

तज्जीवप्राप्यत्वेन श्रुतं जीवात्परं ततोऽन्यद्भवितुमर्हति । तथा हि "ब्रह्मविदाप्नोतिपरम्" इत्युपक्रम्य "सत्यं ज्ञानमनन्तम्ब्रह्म" यो वेद निहितं गुहायाम्" "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" ( तै० २।१ ) इत्यस्मिन्मन्त्रे तद्गीयते तन्मान्त्रवर्णिकम् । तदेव "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" ( तै० २।१ ) इत्यादिश्रुतिभिरात्मत्वेनाकाशादिकर्तृत्वेनानन्दमयत्वेन "स एको ब्रह्मण आनन्द" इत्यानन्दप्रचुरत्वेन च गीयत इत्यर्थः ।

अयम्भावः । ब्रह्मविज्जीवप्राप्यतया जगत्कर्तृतयाऽनन्दप्रचुरतया श्रूयते यद्ब्रह्म मान्त्रवर्णिकं तदेवानन्दमयपदवाच्यं भवति न जीवः प्राप्तुरुपासकस्य जीवस्य स्वप्राप्यब्रह्मत्वानुपपत्तेः । जगद्व्यापारवर्जमिति सूत्रेण मुक्तस्यापि जीवस्य जगत्सृष्ट्यादिकर्तृत्वप्रतिषेधाच्च न जगत्कर्त्तानन्दमयपदवाच्यो जीवः किन्तु ब्रह्मैव ।

अथेदं तत्वम्-"जन्माद्यस्य यतः" ( ब्र० सू० १।१।२। ) इत्यारभ्य "मान्त्रवर्णिकमेव च गीयते" ( ब्र० सू० १।१।१६। ) इत्यन्तैः सूत्रैः सूत्रकृद्भिर्निश्चितम् तद्धि जगत्कारणं ब्रह्म द्विभुजाद्यवयवविग्रहवदस्तीति "ब्राह्मणोस्य मुखमासीद् बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत" ( पु० सू० ११ ) इत्यनया श्रुत्यावगम्यते सोऽस्य विग्रहो ब्रह्मानन्दमयोस्तीति "अर्द्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः"(रा०ता०) इत्यनयावगम्यते। एतदविरोधाय ब्रह्मप्रतिपादकनिराकारपदस्य प्राकृतहेयाकारनिषेधपरत्वमुपपद्यते। प्राकृताकाररहितत्वं निराकारत्वमिति तन्निर्वचनम्। तस्य जगत्कर्तुर्ब्रह्मणो ज्ञानशक्तिबलैश्वर्यतेजोवीर्यादयो बहवः स्वाभाविका दिव्या गुणाः सन्ति। एतच्च, "सकारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" (श्वे० ६।६।) "न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" ( श्वे० ६।८। ) इत्यादिभिः श्रुतिभिरवगम्यते। एवञ्च "अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत्" ( क० १।३।१५। ) इत्यादि श्रुतीनां "सर्वगन्धः सर्वरस." इत्यादिश्रुतिभिः सहैकवाक्यतया प्राकृतहेयगन्धादिनिषेधकत्वमुपपद्यते। एवं "अपहतपाप्मा विजरो विमृत्युर्विशोकोविजिघित्सोऽपिपासः सत्यकामः सत्यसंकल्पः" ( छा० ८।७।१। ) इत्यनया श्रुत्या तस्य हेयान् पाप्मत्वादीन् गुणान् प्रतिषिध्य दिव्यानामेव सत्यकामत्वादिगुणानां प्रकाशनात्। न चागन्धमस्पर्शमित्यादिश्रुतिविरोधेन ज्ञानशक्त्यादिगुणानामेवौपाधिकत्व कुतो न स्यादिति वाच्यम्। स्वाभाविकी ज्ञानबलक्रिया चेत्यत्र श्रुतौ स्वाभाविकत्वेनैव स्वकण्ठरवेणोक्तानां ज्ञानादीनामौपाधिकत्वानुपपत्तेः। तस्मादगन्धमित्यादिवाक्यानां हेयगुणनिषेधपरत्वेनाचक्षुरश्रोत्रमित्यादिवाक्यानाञ्च हेयप्राकृतशरीरनिषेधपरत्वेन चोपपत्तिः। तथा च कर्तारमीशं पुरुषं ब्रह्मयोनिमित्यादिवचनैः साकारजगत्कर्त्रन्तर्यामिब्रह्मदर्शनेन तत्साम्यप्राप्तिरुक्ता भवति। तस्मात्सगुणनिर्गुणसाकारनिराकारादिशब्दाभिहितनिरव-

भिकनिरतिशयज्ञानानन्दबलैश्वर्यतेजोवीर्याद्यनन्तगुणैकतानं दिव्यमङ्गल-विग्रहं स्वप्रकाशचिज्ज्योतिःस्वरूपं सर्ववेदान्तप्रतिपाद्यं स्वचिन्तकैकप्राप्यं यज्जगज्जन्मादिहेतुभूतं ब्रह्म तदेव जिज्ञास्यं ज्ञेयं ध्येयम्प्राप्यञ्चेति। तत्प्राप्ते साधनं विजातीयप्रत्ययानन्तरित सजातीयप्रत्ययप्रवाहलक्षणं तदेकध्यानं तदेकचिन्तनमिति "ततस्तु तम्पश्यते निष्कलं ध्यायमानः" इत्यादि श्रुतिभिः स्पष्टम्प्रतिप्रादितमिति सर्वमनवद्यम् ॥१६॥

यद्यपि बद्धजीवस्य न मान्त्रवर्णिकत्वमुपपद्यते तथापि विलीनाखिल-प्रपञ्चसम्बन्धस्य निर्विशेषचिन्मात्रैकरसस्य शुद्धस्वरूपस्य मुक्तावस्थस्यैव जीवस्य तथा सम्पद्यतामित्याशङ्क्याह-

## नेतरोऽनुपपत्तेः ।१ १।१७।

ब्रह्मण इतरो भिन्नो जीवो मुक्तिदशामापन्नोऽपि मान्त्रवर्णिको नार्हति भवितुम्। अनुपपत्तेः। मुक्तस्यापि जीवस्य "सह ब्रह्मणा विपश्चिता" इति श्रुत्युक्तनिरुपाधिकविपश्चित्त्वाऽनुपपत्तेः। एवं "सोऽकामयत प्रजायेय" "सत्यकामः सत्यसंकल्पः" (छा० ८।७।१) इत्यादि श्रुतिभिः परमात्मन एव सत्यसंकल्पत्वनिर्णयात्। एवञ्चात्र विविधं पश्यतीति विपश्यञ्जीवः सचासौ चिच्चेति विपश्चित् तस्य भावो विपश्चित्त्वं पश्यच्छब्दावयवभूतस्य यच्छब्दस्य पृषोदरादित्वाल्लोपेन व्युत्पन्नोयं विपश्चिच्छब्दः। तत्त्वञ्च नित्यानुपहितेतरानपेक्षासंकुचितसर्वविषयकज्ञानवत्त्वम्। एतादृशं निरुपाधिकं विपश्चित्त्वं मुक्तात्मनोऽपि न सम्भवति। मुक्तेः प्राक्संसारावस्थायां सोपाधिकविपश्चित्त्वेन निरुपाधिकतत्त्वासम्भवात्।

अथवा विगतंपशबन्धनं यस्मात् सविपश् सचासौ चिच्चेति विपश्चित् तस्य भावो विपश्चित्त्वं इतीदमपि विपश्चित्त्वं मुक्तजीवस्य संसारित्वदशायां व्यभिचरति। तद्दशायां तस्यैवात्मनो बद्धत्वान्निरुपाधिकस्य तस्याभावात्। "न जायते म्रियते वा विपश्चित्,"

इत्यत्र तु विपश्चिच्छब्दो ज्ञानवज्जीवपरो विगतं पश् बन्धनं यस्मात्तद् विपश् ज्ञानं तच्चिनोतीति विपश्चिदिति निरुक्तेरिति तत्रैव स्पष्टम् ।

एवञ्चात्र "यतो वाचो निवर्तन्ते" इत्यादि वाक्यं न ब्रह्मणो वाङ्मनसयोरगोचरतामभिधत्ते । प्रकरणान्तः पातिनामनन्तानां विपश्चित्त्वजगत्कारणत्वादीनां गुणानां वैर्ग्र्यापाताच्छतगुणितोत्तरक्रमेण महताऽडम्बरेण प्रतिपादितस्य सर्वोत्कृष्टानन्दस्य चाकाण्डताण्डवायितत्वात् । किन्तु स्वकर्मोपार्जितपुण्यपापरूपादृष्टवशादधिगतमलिनवासनस्य पुंसो मनसोऽविषयत्वमेव । "दृश्यते त्वग्र्या बुद्धया सूक्ष्मया सूक्ष्मदर्शिभिः" ( का० १।३।१२) "मनसा तु विशुद्धेन" इत्याद्यनेकैः प्रमाणैर्निदिध्यासनादिसाधननिर्मलीकृतान्तःकरणानां मनसो ग्राह्यत्वमेवेति संक्षेपः ॥१७॥

इतश्च जीवादन्य आनन्दमयः-

## भेदव्यपदेशाच्च ।१।१।१८।

"तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योन्तर आत्मानन्दमयः" ( तै० २।५। ) इति स्पष्टं विज्ञानमयाज्जीवाद्भेदस्य व्यपदेशादयं मान्त्रवर्णिक आनन्दमयः परमात्मैव न जीवः । अथवानेन सूत्रेण हेत्वन्तरमाह-तथा हि "ज्ञाज्ञौ द्वावजावीशानीशौ" ( श्वे० १।९ ) "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" ( मु० ३।१।२ ) इत्यादिषु जीवपरमात्मनोर्भेदव्यपदेशात् । किञ्च "अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" (छा० ८।१२।३) इत्याविर्भूतस्वरूपस्य मुक्तजीवस्य परमात्मनश्च "जगद्व्यापारवर्जं" मितिसूत्रेण जगत्कर्तृत्वतदकर्तृत्वरूपस्य भेदस्य व्यपदेशान्न मुक्तावस्थो जीव आनन्दमयो भवितुमर्हति । जगद्व्यापारवर्ज्जमिति सूत्रं परमात्ममुक्तजीवयोर्भेदमन्तरेणानुपपद्यमानं सत्तयोर्भेदमुपपादयति । अन्यथा मुक्तानां परमात्मस्वरूपत्वेन जगत्कर्तृत्वा-

पपत्त्या तद्विभाजकस्य जगद्व्यापारवर्ज्जमिति सूत्रस्य प्रणयनप्रयास एव न कुर्यात्सूत्रकारः। कृते त्वेवमुभयोर्भेदः स्पष्ट एव दर्शित इति ॥१८॥

इतश्च जीवादन्य आनन्दमयः।

## कामाच्च नानुमानापेक्षा १।१।१९।

ननु यद्यानन्दमयपदवाच्यः परमात्मैवस्यात्तर्हि तस्यैवोत्तरत्रजगत्कर्तृत्वमपि श्रूयते नत्वेवदस्ति। परमात्मसृष्टौ च प्रबलं वैदिकं प्रमाणमपि नोपलभ्यते। किञ्चहस्तादीन्द्रियाभावात्तद्व्यापारसाध्यां सृष्टिमीश्वरो नैव कर्तुं शक्नुयात्। अनुमानं प्रधानसृष्टिसामग्रीत्वेनापेक्ष्य जगत्कर्तृत्वेतु परमात्मनोऽपेक्षया हिरण्यगर्भादि जीवस्य श्रूयमाणं जगत्कर्तृत्वमेव प्रत्यक्षसनाथीकृतं कुतो न ग्राह्यम्। एवञ्च हिरण्यगर्भादेरिन्द्रियसम्बन्धसत्वात् 'प्रजापतिरकामयत' इत्यादिप्रमाणसद्भावाच्च सृष्टिरप्युपपद्यते। तस्मादानन्दमयपदवाच्यो जीव एवेत्याशंकायामाह-कामाच्चेति। 'सोऽकामयत बहुस्यां प्रजायेय' ( तै० २।६ ) इत्यादि वैदिकान्येव परश्शतानि प्रमाणानीश्वरः स्वकामनयैव सृष्टिं विधत्त इत्येतदर्थकान्युपलभ्यन्त इति न सृष्टावानुमानिकस्य प्रधानस्यापेक्षा। प्रत्यगात्मनस्तु तदपेक्षा वर्तत इति न सोऽआनन्दमयः।

इदं त्ववगन्तव्यम्। प्रकृतसूत्रे चानुमानिकस्य केवलस्य प्रधानस्य जगत्सर्गेऽपेक्षा नास्तीत्येतदुक्तं न तु परमात्मशरीरभूतस्याचिद्वस्तुनोऽप्यपेक्षा नास्तीति। तादृशा चिद्वस्तुनो ब्रह्मस्वरूपान्तः पातितया तदनपेक्षाया वक्तुमशक्यत्वात्। अन्यथा "अस्मान्मायी सृजते विश्वमेतत्" ( श्वे० ४।९ ) इत्यादिश्रुतीनां तदुपबृंहणीभूत स्मृतीनाञ्च विरोधात्। ताश्च स्मृतयः।

विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्। गी० १३।२०।
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ गी० १३।२१।

इत्यत्र तु विपश्चिच्छब्दो ज्ञानवज्जीवपरो विगतं पश् बन्धनं यस्मात्तद् विपश् ज्ञानं तच्चिनोतीति विपश्चिदिति निरुक्तेरिति तत्रैव स्पष्टम् ।

एवञ्चात्र "यतो वाचो निवर्तन्ते" इत्यादि वाक्यं न ब्रह्मणो वाङ्मनसयोरगोचरतामभिधत्ते । प्रकरणान्तः पातिनामनन्तानां विपश्चित्त्वजगत्कारणत्वादीनां गुणानां वैयर्थ्यापाताच्छतगुणितोत्तरक्रमेण महताऽडम्बरेण प्रतिपादितस्य सर्वोत्कृष्टानन्दस्य चाकाण्डताण्डवायितत्वात् । किन्तु स्वकर्मोपार्जितपुण्यपापरूपादृष्टवशादधिगतमलिनवासनस्य पुंसो मनसोऽविषयत्वमेव । "दृश्यते त्वग्रया बुद्धया सूक्ष्मया सूक्ष्मदर्शिभिः" ( का० १।३।१२) "मनसा तु विशुद्धेन" इत्याद्यनेकैः प्रमाणैर्निदिध्यासनादिसाधननिर्मलीकृतान्तःकरणानां मनसो ग्राह्यत्वमेवेति संक्षेपः ॥१७॥

इतश्च जीवादन्य आनन्दमयः-

## भेदव्यपदेशाच्च ।१।१।१८।

"तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्मानन्दमयः" ( तै० २।५। ) इति स्पष्टं विज्ञानमयाज्जीवाद्भेदस्य व्यपदेशादयं मान्त्रवर्णिक आनन्दमयः परमात्मैव न जीवः । अथवानेन सूत्रेण हेत्वन्तरमाह-तथा हि "ज्ञाज्ञौ द्वावजावीशानीशौ" ( श्वे० १।९ ) "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" ( मु० ३।१।२ ) इत्यादिषु जीवपरमात्मनोर्भेदव्यपदेशात् । किञ्च "अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" (छा० ८।१२।३) इत्याविर्भूतस्वरूपस्य मुक्तजीवस्य परमात्मनश्च "जगद्व्यापारवर्जं" मितिसूत्रेण जगत्कर्तृत्वतदकर्तृत्वरूपस्य भेदस्य व्यपदेशान्न मुक्तावस्थो जीव आनन्दमयो भवितुमर्हति । जगद्व्यापारवर्ज्जमिति सूत्रं परमात्ममुक्तजीवयोर्भेदमन्तरेणानुपपद्यमानं सत्तयोर्भेदमुपपादयति । अन्यथा मुक्तानां परमात्मस्वरूपत्वेन जगत्कर्तृत्वो-

पपत्त्या तद्विभाजकस्य जगद्व्यापारवर्ज्जमिति सूत्रस्य प्रणयनप्रयास एव न कुर्यात्सूत्रकारः। कृते त्वेवमुभयोर्भेदः स्पष्ट एव दर्शित इति ॥१८॥

इतश्च जीवादन्य आनन्दमयः।

## कामाच्च नानुमानापेक्षा १।१।१६।

ननु यद्यानन्दमयपदवाच्यः परमात्मैवस्यात्तर्हि तस्यैवोत्तरत्रजगत्कर्तृत्वमपि श्रूयते नत्वेवदस्ति। परमात्मसृष्टौ च प्रबलं वैदिकं प्रमाणमपि नोपलभ्यते। किञ्चहस्तादीन्द्रियाभावात्तद्व्यापारसाध्यां सृष्टिमीश्वरो नैवकर्तुं शक्नुयात्। अनुमानं प्रधानसृष्टिसामग्रीत्वेनापेक्ष्य जगत्कर्तृत्वेतु परमात्मनोऽपेक्षया हिरण्यगर्भादि जीवस्य श्रूयमाणं जगत्कर्तृत्वमेव प्रत्यक्षसनाथीकृतं कुतो न ग्राह्यम्। एवञ्च हिरण्यगर्भादेरिन्द्रियसम्बन्धसत्वात् 'प्रजापतिरकामयत' इत्यादिप्रमाणसद्भावाच्च सृष्टिरप्युपपद्यते। तस्मादानन्दमयपदवाच्यो जीव एवेत्याशंकायामाह-कामाच्चेति। 'सोऽकामयत बहुस्यां प्रजायेय' ( तै० २।६ ) इत्यादि वैदिकान्येव परश्शतानि प्रमाणानीश्वरः स्वकामनयैव सृष्टिं विधत्त इत्येतदर्थकान्युपलभ्यन्त इति न सृष्टावानुमानिकस्य प्रधानस्यापेक्षा। प्रत्यगात्मनस्तु तदपेक्षा वर्तत इति न सोऽ आनन्दमयः।

इदं त्ववगन्तव्यम्। प्रकृतसूत्रे चानुमानिकस्य केवलस्य प्रधानस्य जगत्सर्गेऽपेक्षा नास्तीत्येतदुक्तं न तु परमात्मशरीरभूतस्याचिद्वस्तुनोऽप्यपेक्षा नास्तीति। तादृशा चिद्वस्तुनो ब्रह्मस्वरूपान्तः पातितया तदनपेक्षाया वक्तुमशक्यत्वात्। अन्यथा "अस्मान्मायी सृजते विश्वमेतत्" ( श्वे० ४।६ ) इत्यादिश्रुतीनां तदुपबृंहणीभूत स्मृतीनाञ्च विरोधात्। ताश्च स्मृतयः।

विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्। गी० १३।२०।
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ गी० १३।२१।

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥
मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ॥ गी० १४।३।
सर्वयोनिषु कौन्तेय मूर्तयः सम्भवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ गी० १४।४।

इत्याद्याः । इमाश्च परमात्मा मायामाश्रित्य तत्सकाशादेव विश्वसृष्टिं करोतीति स्पष्टम्प्रतिपादयन्ति । नच, काञ्चित्सृष्टिं काममात्रेण करोति काञ्चिच्च मायासकाशादिति वाच्यम्, सृष्टेर्द्वैविद्ध्याश्रवणात् । समेषां सृष्टिवाक्यानामेकवाक्यतामन्तरेण परस्परविरुद्धार्थकत्वेन तेष्वप्रामाण्यापत्तेश्च । नच मायामनाश्रित्य चिदेकरसात्मकस्वरूपादेव स जगत्सृजत इतिसाम्प्रतम् । परमात्मनि विकारित्वसुखदुःखभोक्तृत्ववैषम्यनैर्घृण्यादिदोषापत्तेः । नच तर्हि विवर्तवादस्याश्रयणात्सर्वं समञ्जसमितिवाच्यम् । तस्य कुदृष्टिकपोलकल्पनाकल्पितत्वेनाप्रामाणिकत्वात् । अत एव प्राङ्निरस्तत्वाच्च । तस्मात्पूर्वोक्तार्थ एव सूत्रकृतां वृत्तिकृतांञ्च तात्पर्यमित्यलं पल्लवितेन ॥१९॥

इतश्चानन्दमयाज्जीवोऽन्य इत्याह--

## अस्मिन्नस्य च तद्योगं शास्ति ।१।१ २०।

"रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति" (तै० २।७।) श्रुतिरियं रसशब्दनिर्दिष्ट आनन्दमयेऽयंशब्दवाच्यस्य जीवस्यानन्दीभवतीतिवचनादानन्दमयप्राप्त्यनन्तरमानन्दयोगं शास्ति । यस्य प्राप्तेरनन्तरमानन्दयोगः प्रत्यगात्मनः स आनन्दमयस्तस्मादन्य एव मान्त्रवर्णिकः। रसपदाभिधेयपरमात्मनः सम्बन्धात्प्रत्यगात्मन आनन्दीभाव इत्युभयोर्वैधर्म्यं स्पष्टत एव शक्यमवगन्तुम् । अयमभिप्रायः । "निरञ्जनः परमं साम्यमुपैति" (मु० ३।१।३) इति श्रुतेः "भोगमात्रसाम्यलिङ्गाच्च"

(ब्र.सू ४।४।२१) इति सूत्राच्च मुक्तजीवस्य भोगमात्रे परमात्मसाम्यं भवति नतु जगत्सृष्ट्यादिकर्तृत्वं जगद्व्यापारवर्ज्जमिति मुक्तस्य जगद्व्यापारत्व-प्रतिषेधात् । तस्मादानन्दमयस्य चेतनाद्बद्धमुक्ताद्यवस्थावतो जीवशब्द-वाच्याद्वस्तुतोऽर्थान्तरत्वादानन्दमयः परमात्मात्मैवेति सिद्धम् ॥२०॥

## ॐ अथान्तरधिकरणम् ॥७॥

एवं षड्भिरधिकरणैरखिलकल्याणगुणाकरः सर्वज्ञः सकलजगदुभय-कारणभूतः चिदचिद्विशिष्टः परमपुरुषः परमात्मा साधितः । अथोपासकानां मनोरथपूर्तये तस्यैव स्वरूपं विविच्यते । तत्राल्पपुण्यानां जीवानां स्वेच्छया यद्यपि जगत्सृष्टिरानन्दयोगश्च न सम्भवति । तथापि विलक्षणपुण्यानामा-दित्येन्द्रप्रजापत्यादीनां सम्भवत्येवेत्याशंकायामाह ।

## अन्तस्तद्धर्मोपदेशात् ।१।१।२१

छान्दोग्ये-"य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रु-हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः (छा० १।१।६) तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्य पाप्मभ्यो य एवं वेद" (छा० १।६।७।) तस्यर्क्च साम च गेष्णौ इत्यधिदैवतम् "अथाध्यात्मम्" "य एषोऽन्तरक्षिणि पुरुषो दृश्यते" (छा० १।७।५।) इत्यादिकं साम्नायते । अत्र हिरण्मयो ज्योतिर्मयः अत्रत्यं हिरण्यपदं सुवर्णपदञ्च विलक्षणज्योतिःपरम् । दृश्यते अवहितमनस्कै रुपासकैरितिशेषः प्रणखो नखाग्रं तेन सहेत्यभिविधावाङ् । चक्षुषोर्विशेष-माह तस्येति-कं जलं पिबतीति कपिः सूर्यस्तेनास्यते विकास्यत इति कप्यासं पुण्डरीकं रक्ताम्भोजम् । कैश्चिदस्य वाक्यस्य मर्कटपश्चाद्भागवत्

* 'एषोऽन्तरक्षिणी' त्यादौ विचिकित्सा प्रजायते ॥१७२॥ जीवः पुरुषवाच्यः स्याद् ब्रह्म वा ? किं भवेदिह । जीवः शरीररूपादेस्तद्धर्मो-क्त्या तु राघवः ॥१७३॥

यत्लोहितं पुण्डरीकमिति विवरणं कृतं तदश्लीलत्वादिदोषदुष्टतयाऽनादरणीयम् तादृशपुण्डरीकवदस्य देवस्याक्षिणी नेत्रे। तस्य नामाह उदितिनामनिर्वचित स इति उदितः उद्गतः सर्वेभ्यः सर्वपापास्पृष्ट इत्यर्थः। अधिदैवतम्–देवतामधिकृत्योपास्तिवाक्यमित्यर्थः।

अत्रादित्यान्तःस्थमक्ष्यन्तस्थञ्च पुरुषमधिकृत्य शरीरवत्त्वश्रुत्या सर्वपापास्पर्शवत्त्वश्रुत्या च संशयः। किमयं पुरुषः पूर्वकृततप आदिप्रभावादीदृशमौत्कृष्ट्यं प्राप्तः कश्चिज्जीव उत परमात्मा सर्वान्तर्गत इति। किं युक्तम् ? जीवः। कुतः ? शरीरवत्त्वाद्रूपवत्त्वाच्च। अक्षिपुरुषस्यापि तदेव रूपं यदमुष्यरूपमिति यन्नाम तन्नामेति तादृशरूपवत्वतादृशनामवत्वश्रवणाच्च शरीरसंयोगो रूपसम्बन्धश्चादृष्टवशाज्जीवस्यैव तादृशादृष्टजन्यपुण्यपापरूपफलभोगाय, नतु परमेश्वरस्य, तस्य चाशरीरत्वारूपवत्वश्रवणादित्येवं प्राप्त आह–अन्तस्तद्धर्म्मोपदेशादिति।

आदित्यान्तर्गतोऽक्ष्यन्तर्गतश्च श्रूयमाणः पुरुषः परमात्मैव कुतः ? स एष सर्वेभ्यः पाप्मभ्य उदित उद्गतो निर्गत इत्यादिना तदसाधारणधर्माणामपहतपाप्मत्वादीनामुपदेशात्। अपहतपाप्मत्वंहि अपहतकर्मतया सम्पद्यते। कर्मवश्यताराहित्येनेतिस्पष्टोर्थः। कर्माधीनसुखदुःखभागिनः कर्मवश्या हि जीवा एव सन्ति। अतोऽपहतपाप्मत्वस्य बद्धजीवधर्मत्वानुपपत्तेर्मुक्तानामपि संसारदशायां कर्मवश्यत्वेन निरुपाधिकापहतपाप्मत्वाद्यनुपपत्तेः। तस्मात्परमात्मन एव तादृशधर्मवत्वादादित्याक्ष्यन्तः स्थः पुरुषः परमात्मैव न जीवः।

यत्तूक्तं रूपवत्वशरीरवत्वश्रवणादयं जीव एवेति। नैष दोषः। न हि शरीरवत्वं जीवत्वं कर्मवश्यताञ्च साधयितुमीष्टे। तस्य जीवत्वाभाववति कर्मवश्यत्वाभाववति च विपक्षेऽपि सत्वात्। सत्यसङ्कल्पस्य परमात्मनः स्वेच्छयैव शरीरसम्बन्धसम्भवात्। इयांस्तु भेदः। जीवानाङ्कर्मपारवश्यात्तदनुगुणप्राकृतस्यैव शरीरस्य सम्बन्धः। परमेश्वरस्य तु कर्मानधीनत्वेन

स्वाभिमताप्राकृतदिव्यशरीरग्रहणमिति । अत एव न तस्य शरीरकृतदुःखाद्यनुभवः । स च कर्माधीनप्राकृतशरीरगृहीतुर्जीवस्यैवेति दर्शनविन्मतम् । तथा च श्रुतयः । "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्" (मु० ३।१।३।) "रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम्" "ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः" (यजु० ३० ११) इत्याद्याः । यदापश्येति श्रुत्या जीवस्य तद्दर्शनानन्तरं पुण्यपापविनाशपूर्वकब्रह्मप्राप्तिर्बोधिता । तत्र ब्रह्मयोनिरुक्मवर्णपदाभ्यां स्वनाभिजपद्मद्वारा कार्यब्रह्मणो हिरण्यगर्भस्य कारणत्वेन मुक्तप्राप्यस्य ब्रह्मणः शरीरवत्त्वं रूपवत्त्वञ्च बोध्यते । एवं "स्वभाविकी ज्ञानबलक्रिया च" (श्वे० ६।८।) इति श्रुत्या स्वाभाविकज्ञानबलक्रियाशालिनस्तच्छरीरस्य तच्छरीरनिष्ठरूपस्य च स्वाभाविकत्वोपपत्या नित्यत्वसिद्धेः । अत एव श्रुत्युपबृंहणीभूतेतिहासपुराणादिषु बहुशस्तत्र तत्र भगवतो दिव्यमङ्गलविग्रहस्योपवर्णनं सङ्गच्छते । तथा चादित्याद्यन्तर्गतः पुरुषः परमात्मैवेति ॥२१॥

इतश्च न जीवः--

## भेदव्यपदेशाच्चान्यः ।१।१ २२।

जीवविशेषादादित्यादेर्भेदो व्यपदिश्यते परमेश्वरस्य "य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मा" (बृ० ३।७।९।) "यश्चक्षुषि तिष्ठन् चक्षुषोन्तरो य चक्षुर्न वेद यस्य चक्षुश्शरीरं यश्चक्षुरन्तरोयमयति" (बृ० ३।७।१८) "य आत्मनि तिष्ठन् आत्मनोन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति" ( बृ० ३।७।२२ ) इत्याद्याः श्रुतयः परमात्मनो भिन्नांश्चिदचिदात्मकान्सर्वान् पदार्थानीश्वरस्य शरीरत्वेन तन्नियम्यत्वेन --तस्य च शरीरित्वेन तत्तज्जीवान्तरात्मत्वेन नियमनकर्तृत्वेन च व्यपदिश्य चिदचितोर्नियामकतया भेदं साधयन्ति । तस्मादादित्यादिजीवविलक्षणः परमात्मादित्याद्यन्तवर्ती पुरुषोऽन्य एवेति सिद्धम् ॥२२॥

* अथ आकाशाधिकरणम् ॥८॥

अथ सर्वेषां कारणवाक्यगतानां कारणवस्तुपराणां शब्दानां सर्वशाखाप्रत्ययन्यायेन सर्वकारणे पर्यवसानेन ब्रह्मवाचकत्वमिति स्पष्टयितुमाह ।

## आकाशस्तल्लिङ्गात् ।१।१।२३

छान्दोग्ये श्रूयते-"अस्य लोकस्य कागतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्" (छा० १।९।१) इति । तत्र संशयः । किमत्राकाशशब्देन भूताकाशमभिधीयत आहोस्विद्ब्रह्मेति कुतः संशयप्रयोजकस्याकाशशब्दस्योभयत्रप्रयुक्तत्वात् । तत्र भूताकाश आकाशपदस्यप्रसिद्धत्वाल्लोकशास्त्रयोर्ब्रह्मण्यपि प्रयोगो दृश्यते । "कोह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्" (तै० २।७।) इत्यादावाकाशस्यानन्दमयब्रह्मपरत्वावगमात् । तथा चात्राकाशपदेन भूताकाशस्यैव ग्रहणं युक्तम् । कुतः ? तत्र रूढत्वात् । श्रुत्यपेक्षया लिङ्गस्य दुर्बलत्वाच्च । वाक्यशेषेऽपि "आकाशाद्वायुरिति वाय्वादिक्रमेणाकाशस्य कारणत्वं स्पष्टमेव । एवञ्चैतदानुगुण्ये "नात्मन आकाशः सम्भूत" इत्यादावप्यात्मपदस्याकाशवाचकत्वम् । आप्नोतीत्यात्मासूक्ष्माकाशस्ततश्च स्थूलाकाशस्य सम्भूतिस्सम्भवत्येव । सदेव सौम्येत्यादावपि सदादिपदवोध्यत्वं सूक्ष्माकाशस्यैवेति प्राप्त उच्यते । आकाशस्तल्लिङ्गात् । प्रकृतकारणवाक्य आकाशपदवाच्यं सर्वजगत्कारणं परंब्रह्मैव । कुतः ? तल्लिङ्गात् । तस्य ब्रह्मणो महाभूतसृष्ट्यादिकं सकलजगदेककारणत्वं सर्वस्माज्ज्यायस्त्वं परायणत्वमित्यादीनि लिङ्गान्युपलभ्यन्ते । जगत्सृष्ट्यादिकं यद्ब्रह्मणोऽव्यभिचारिलिङ्गं तस्य तदन्यलिङ्गत्वानुपपत्याऽनन्यथासिद्धेन लिङ्गेन भूताकाशश्रुतेर्बाधात् । एवञ्च प्रकृतवाक्ये भूताकाशपरत्वमाकाशपदस्येत्यर्थस्यायुक्तत्वादानन्दमयाकाशस्य ब्रह्मण एव सर्वजगदुत्पत्ति-

---

* "अस्य लोकस्य के" त्यादौ वियद्वा ब्रह्म वा मतम् । आकाश रूढितो वाच्यं तल्लिङ्गाद् ब्रह्मवाच्यता ॥१७४ ॥

रित्यर्थस्यैव युक्तत्वादाकाशशब्दवाच्यः परमात्मैव । तथासत्येव सर्वस्मा-ज्ज्यायस्त्वपरायणत्वादिगुणानामपि सामञ्जस्यम् । परमपुरुषे ब्रह्मण्येव, तादृग्गुणानां सम्भवो नान्यत्र भूताकाशाद्यचिद्वस्तुनीति । न चाकाश इति प्रसिद्धवन्निर्देशादभूताकाश एव ग्राह्य इति वाच्यम् । प्रसिद्ध-वन्निर्देशस्यापि प्रमाणान्तरसापेक्षकत्वात् । बहुप्रमाणविरोधासम्भ-वाच्च । परमात्मनः कारणत्वन्तु बह्वीभिश्श्रुतिभिरसकृदाघोषितम् तथा हि- "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" (छा० ६।२।१) "तदैक्षत बहुस्याम्प्रजायेय" (छा० ६।२।३) "आत्मा वा इदमेक एवाग्र आसीत्" "स इमाॅंल्लोकानसृजत" (ऐ० १।१) "तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः" (तै० २।१) इत्येवमादयोऽनंताः श्रुतयः परमात्मन एव सर्वजग-त्कारणत्वम्प्रतिपादयन्ति । आकाशस्यतु "सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते" (छा० १।९।१) इत्येकमेव वाक्यम् । ततश्चादि-कारणत्वस्य द्विष्ठत्वासम्भवाद्बहुश्रुतितदनुगुणतर्कानुरोधेन चेतनस्य ब्रह्मण एव जगत्कारणत्वमास्थेयम् । तथा चासमन्तात्प्रकाशत इति व्युत्पत्या-काशः परमात्मेति सिद्धम् । किञ्च "यदेष आकाश आनन्दो न स्यादि" ति श्रुतादानन्दाकाशादात्मनः "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" (तै० २।१।) इति भूताकाशस्योत्पत्तिश्रवणात् सृष्ट्यन्तर्गतस्य भूताकाशस्य जगत्स्रष्टृत्वानुपपत्तेः कार्याकाशकारणाकाशयोर्मध्ये कारणाकाशस्यैव जगत्कारणत्वोपपत्तेश्चास्य जगत्कारणत्वेन श्रुतस्याकाशस्य परमात्मपर-त्वमेव युक्तम् ॥२३॥

## * अथ प्राणाधिकरणम् ॥६॥

## अत एव प्राणः ।१।१ २४।

तत्रैवोद्गीथविद्यायां श्रूयते-"प्रस्तोतर्या देवता प्रस्तावमन्वा-

* 'भूतानि प्राण' मादौ किं प्राणशब्देन कथ्यते ? । प्राणो वा ब्रह्म

यत्ता" इत्युपक्रम्य यतमा सा देवतेति । प्राण इति होवाच सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जीहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रास्तोष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति" (छा० १।११।४-५) तत्र प्राणवायुरितिलौकिकप्रसिद्धेः "प्राणस्य प्राणम्" (बृ० ४।४।१८।) "प्राणबन्धनं हि सौम्य मनः" (छा० ६।८।२।) इत्यादिषु च प्राणस्य ब्रह्मपरत्वावगमात्संशयः । किमत्र प्राणशब्देन वायुविकार उच्यत उत परमात्मेति । तत्र वायुविकारस्य प्राणस्य लोकप्रसिद्धित एव शीघ्रोपस्थितिकत्वाद्वायुविकार इति प्राप्ते–आकाशन्यायातिदेशेन प्राणशब्दस्य परमात्मपरत्वं ज्ञापयति सूत्रकारः । अत एव प्राण इति । अत एवाकाशवाक्य इव प्राणवाक्येऽपि सर्वभूतसृष्टृत्वादिब्रह्मलिङ्गदर्शनादेव प्राणशब्दाभिहितः परमात्मेत्यर्थः । "यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः स यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्ते" (श० ब्रा० १०।३।३।६) इति श्रुतावपि परमात्मरूपे प्राणे संवेशनादिकमुक्तं, नतु महाभूतसंवेशनादिकम् । अत्र वाक्पदमनुक्तकर्मेन्द्रियोपलक्षकं चक्षुःश्रोत्रे ज्ञानेन्द्रियोपलक्षके । तस्मादत्रत्यप्राणशब्दवाच्यः परमात्मैवोपास्यप्रस्तावे देवतेति सिद्धम् ॥२४॥

❀ अथ ज्योतिरधिकरणम् ॥१०॥

## ज्योतिश्चरणाभिधानात् । १।१।२५ ।

छान्दोग्ये समाम्नायते– "अथ यदतः परो दिवो ज्योतिर्दीप्यते

---

वा ? प्राणो लोकप्रसिद्धिहेतुतः ॥१७५॥ तल्लिङ्गादेव हेतोस्तु ब्रह्मणि प्राणवाच्यता ।

'अतः परो दिवो ज्योति'रत्र ज्योतिष्पदेन किम् ॥१७६ ॥ उच्यते प्रथितादित्यादिर्वा ब्रह्माथवा खलु ? । आदित्यादिः प्रसिद्धे हि ब्रह्मलिङ्गश्रुतेरपि ॥१७७॥ नैतत् पादाभिधानाद्वै छन्दस्तथा ह्युपासितुम् ।

विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योति" (छा० ३।१३।७।) अस्या अर्थः गायत्रीपदबोध्यब्रह्मोपास्त्यनन्तरमुपास्त्यन्तरार्थोऽथशब्दः। अतो दिवो द्युलोकात्परः परस्तात् यज्जोतिर्दीप्यते-विश्वत पृष्ठेषु विश्वस्मात्प्राणिवर्गादुपरीत्यर्थः न केवलं विश्वतः पृष्ठेषु किन्तु सर्वतः पृष्ठेषु-सर्वस्माद्भूरादि प्रजापतिलोकपर्यन्तात्सर्वसंसारमण्डलादुपरीत्यर्थः अनुत्तमेषूत्तमेषु-उत्तमा न विद्यन्ते येभ्यस्तेषु स्वावधिकोत्तमरहितेषु उत्तमस्थानविशेषेषु परब्रह्मधामस्वित्यर्थः। इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिरिति परज्योतिषः कौक्षेयज्योतिषैक्योपदेशस्तु तदात्मकत्वानुसन्धानेन फलाधिक्यज्ञापनायेति न दोषः। उक्तं हि भगवता पुरुषान्तःस्थस्य ज्योतिषः स्वात्मकत्वम्।

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः" (गी० १५।१४।) इति तत्रलोकेऽग्निसूर्यादौ वेदे ब्रह्मणि च ज्योतिःशब्दप्रयोगात्संशयः। किमत्र ज्योतिःशब्देन प्रसिद्धमादित्यादिज्योतिरभिधीयते। उत तस्यापि प्रकाशकममिततेजः परंब्रह्म। किं युक्तम्? प्रसिद्धमादित्यादिज्योतिरिति। कुतः? प्रसिद्धवन्निर्द्देशात् दिव इति द्युसम्बन्धित्वनिर्देशात्परमात्मलिङ्गविशेषाश्रवणाच्चेति प्राप्तेऽभिधीयते-ज्योतिश्चरणाभिधानादिति। "वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं सर्वमि" त्युक्तं द्युसम्बन्धत्वेन निर्दिष्टमनुत्तमलोकेषु दीप्यमानत्वेनोक्तं निरतिशयज्योतिः शब्दवाच्यमादित्यादिप्रकाशकं परम्ब्रह्मैव। कुतः? चरणाभिधानात्। पादाभिधानात्। ज्योतिर्वाक्यात्पूर्ववाक्ये ब्रह्मणश्चतुष्पात्त्वाभिधानात्। "एतावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि" (छा ३।१२।६) इत्यत्र सर्वभूतानां मृत्युग्रस्तानामेकपादत्वोक्त्या संसारमण्डलस्य न्यूनत्वं निर्दिश्य त्रिपादस्येतिद्युशब्दनिर्दिष्टस्य परमपदस्य त्रिपाद्विभूतिपदाभिधेयस्य त्रिपादिति बहुपादत्वकथनेन ब्रह्माण्डात्रिगुणाधिक्यनिर्द्देशेनाप्रमेयत्वमुक्तम्। तन्निवासिनाममृतपदेन मृत्युराहित्यमुपवर्ण्य नित्यमुक्तानां स्थितिस्तत्र सूचिता। एवञ्च "ततो ज्यायांश्च पूरुष" इति

तत्स्वामित्वबोधनाद्ब्रह्मण एव ज्योतिश्शब्दाभिधेयत्वमिति ॥२५॥

## छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनम् १।१।२६।

पूर्ववाक्ये "गायत्री वा इदं सर्वं भूतं यदिद किञ्च" (छा० ३।१२।१) इति गायत्र्याख्यच्छन्दसः प्रकृतत्वात्तस्यैव "पादोऽस्य सर्वभूतानि" इति सर्वभूतव्यपदेशस्योपपत्तेर्न ब्रह्मण इतिचेन्न। तथा छन्दोद्वारेण तद्गते तत्प्रतिपाद्येऽक्षरसमुदायात्मकगायत्रीवाच्ये ब्रह्मणि चेतोऽर्पणस्य चित्तप्रवेशनस्य निगदादभिधानात्। तत्र दृष्टान्तमाह तथाहि दर्शनम्। अन्यत्रापि तत्तद्वारा तदन्तर्गतस्य ब्रह्मण उपासनं दृश्यते "एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः" (ऐ. आ० ३।२।३।१२) इति। एवञ्च "गायत्री वा इदं सर्वं भूतं यदिदं किञ्च" इत्युक्तस्य सर्वात्मकत्वस्याक्षरसन्निवेशरूपाया गायत्र्या अनुपपत्तेः। सर्वान्तर्गतस्य ब्रह्मणः सर्वशरीरित्वेन सर्वात्मकत्वोपपत्त्या तस्यैव सर्वभूतपादस्य त्रिपादामृतत्वस्य च निष्पत्तेः पूर्वसूत्रोक्तज्योतिःशब्दवाच्यत्वं निष्पद्यते न तदन्यस्य। एतदेव द्रढयति ॥२६॥

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ।१।१ २७।

भूतपृथवीशरीरहृदयानि निर्दिश्य सैषा चतुष्पदेति गायत्र्या श्चतुष्पदात्वव्यपदेशस्य तद्वाच्ये ब्रह्मण्येवोपपत्तेः। अक्षरसन्निवेशरूपाया गायत्र्यास्तदनुपपत्तेः। एवं गायत्रीशब्दनिर्दिष्टं ब्रह्मैव ज्योतिःशब्दवाच्यं भवतीत्यर्थः ॥२७॥

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ।१।१।२८

पूर्वस्मिन् वाक्ये "त्रिपादस्यामृतं दिवि" इति सप्तम्या दिवस्त्रिपादाधारत्वनिर्देशादथ यदतः परो दिव इतिपञ्चम्या ज्योतिषोऽवधित्वेन दिवो

निर्देशादुभयत्र विभक्तिभेदकृतस्योपदेशभेदस्य सत्वान्न ज्योतिर्वाक्ये प्रत्यभिज्ञोपपद्यत इतिचेन्न । कुतः ? प्रातिपदिकार्थेन प्रधानेन कारितायाः प्रत्यभिज्ञाया गुणभूतेन विभक्त्यर्थेन प्रतिषेध्यत्वानुपपत्तेर्भेदेनोपदेशद्वयेऽपि प्रत्यभिज्ञाया विरोधाभावात् । लोकेऽपि यथा वृक्षाग्रे श्येनो, वृक्षाग्रात्परतः श्येन इत्युभयथाप्युपदिश्यते । तस्मात्परमात्मैव "दिवः परो ज्योतिर्दीप्यत" इति वाक्यात्प्रतिपाद्यत इति निरवद्यम् ॥२८॥

## * अथ प्राणानुगमाधिकरणम् ॥११॥

यद्यप्यनन्यथासिद्धतात्पर्यवद्ब्रह्मलिङ्गादाकाशज्योतिरादिपदघटितवाक्यानां ब्रह्मपरत्वे युक्तेऽपि प्रातर्दने प्रकरणे तद्घटकप्राणादिपदार्थानामनेकेषामनेकलिङ्गदर्शनात्कथं तात्पर्यनिर्णय इत्याशङ्कायामाह ।

## प्राणस्तथाऽनुगमात् १।१।२९।

कौषीतकीब्राह्मणोपनिषदि श्रूयते-"प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च" इत्यारभ्य "स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व" इति । तथाग्रेऽपि "अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" (कौ० ३।१।२।३।) अन्ते च "स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः" (कौ० ३।८।) इत्यादि । दिवोदासस्यापत्य प्रतर्दनो युद्धेन तत्कारणेन पौरुषेण पुरुषकारप्रदर्शने नेन्द्रस्य प्रियं धाम गृहं जगाम । तं दृष्ट्वा इन्द्र उवाच प्रतर्दन ! वरं ते ददामि। सहोवाच प्रतर्दनः हे इन्द्र त्वमेव वरं वृणीष्वेत्यादिरर्थस्तत्र संशयः।

* प्रतर्दनो ह वै' वाक्ये प्राणशब्देन को मतः ? ॥१७८॥ प्राणवायुरथो जीवः परमात्माऽथवा खलु । इत्येवं संशये प्राप्ते पूर्वपक्षतयोच्यते ॥१७९॥ प्राणवायुर्यतस्तत्र प्रसिद्धा प्राणवाच्यता । जीवो वात्मविशेषे हि प्रसिद्धाऽस्तीन्द्रवाच्यता ॥१८०॥ प्राणवाच्योऽपि जीवस्तत्सामानाधिकरण्यतः। प्रज्ञात्मत्वाजरत्वादेः प्राणो ब्रह्मेति गम्यते ॥१८१॥

किमिह प्राणशब्देन वाय्वात्मकः प्राण उक्त, उत जीवोऽथवा परमात्मेति। किं युक्तम् ? जीवः। कुतः ? इन्द्रशब्दवाच्यस्य जीवत्वप्रसिद्धेः। प्राणशब्दस्य तत्समानाधिकरण्येन तत्रैव पर्यवसानात्" इति प्राप्ते ब्रूमः प्राणः प्राणशब्दाभिहितः प्राणस्य प्राणः यस्य प्राणः शरीरम् "यस्यात्मा शरीरम्" "जगत्प्राणायात्मने तस्मै नमः स्यादि" त्येवमादिश्रुत्युक्तः प्राणशरीरः प्राणनियन्तृत्वेन तत्स्थितिप्रवृत्तिहेतुभूतः परमात्मा। कुतः ? तथानुगमात्। "प्रज्ञात्माऽनन्दोऽजरोऽमृत" इत्यादिपरमात्मनोऽव्यभिचारिलिङ्गं प्राणस्य ब्रह्मपरत्वेनानुगमात्। न हि प्रज्ञात्मत्वमचेतनस्य वायोः सम्भवति। तथोत्तरत्र "एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतो न साधुना कर्मणा भूयान्नो एवासाधुना कर्मणा कनीयानेष ह्येवैनं साधुकर्म कारयति तं यमन्वानुनेषत्येष एवैनमसाधुकर्म कारयति तं यमेभ्यो लोकेभ्योऽनुनुत्सत एष लोकपाल एष लोकाधिपतिरेष सर्वेश्वरः" (कौ० ब्रा० ३।६।) इति श्रुतिप्रतिपादितधर्माधर्मकारयितृत्वलोकाधिपतित्वसर्वेश्वरत्वादीनि लिङ्गादि प्राणशब्दस्य ब्रह्मपरत्व एव संगच्छन्त इति प्राणपदबोध्यम्ब्रह्मैव ॥२९॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ।१।१।३०।

यदुक्तं प्राणो ब्रह्मेति तन्न। कुतः ?

"प्राणोस्मि तम्मामायुरमृतमित्युपास्व" इति वक्तुरिन्द्रस्य स्वात्मन उपास्यत्वेनोपदेशात्। उपक्रमस्येन्द्रपरत्वे निश्चिते सति उपसंहारस्य तदनुरोधेन नेतव्यत्वाच्च उपसंहारादुपक्रमस्य बलीयस्त्वात्। उपक्रमे हि देवताविशेष इन्द्रोऽहंकारवादेन स्वात्मानं स्यापयामास प्रतर्दनाय "मामेव विजानीहि" "प्राणोस्मि प्रज्ञात्मा" इत्यादिभिः। तथा "त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान्यतीच्छालावृकेभ्यः प्रायच्छम्" इत्यादिभिश्च विग्रहधर्मैरेव स्वात्मानं प्रशशंस। न चैते धर्मा ब्रह्मणि सम्भवन्ति। तस्मान्न

प्राणो ब्रह्मेति चेन्न, अध्यात्मसम्बन्धभूमा ह्यस्मिन् । हि यस्मादस्मिन्नध्यायेऽध्यात्मसम्बन्धस्यात्मानमधिकृत्य वर्तमानस्य सम्बन्धस्य परमात्मसम्बन्धस्य भूमाबाहुल्यमुपलभ्यते । उपक्रमोपसंहारयोरन्तराले परमात्मधर्मसम्बन्धस्य भूयस्त्वं दृश्यते । उपक्रमे "यं त्वं मनुष्याय हिततमं मन्यसे" इत्युक्तं तद्धि हिततमत्वं परमात्मोपासनयैव संगच्छते । एतदुक्तं भवति । सर्वेषां प्राणजीवदेवादीनां परब्रह्मन्यूनत्वेन तदधीनस्वरूपस्थितिप्रवृत्तित्वेन प्राणादिविषयिण्या उपासनायाः हितत्वेऽपि हिततमत्वं नास्ति । तदपेक्षया सर्वदेवादिनियन्तृत्वसर्वफलदातृत्वादिकं परमात्मोपासनायामवास्तीति तस्या एव हिततमत्वमितिराद्धान्तः । "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः" (कौ० ३।६) इति सर्वाधारत्वस्य, "एष ह्येव साधुकर्म कारयती" ति साध्वसाधुकर्मकारयितृत्वस्यानन्दादेश्च सर्वलोकाधिपतित्वस्य तत्पालकत्वस्य च परमात्माऽसाधारणधर्मत्वनिष्पत्तेः प्राणशब्दनिर्दिष्टः परमात्मैवेत्यवधेयम् ॥३०॥

कथं तर्हि इन्द्रकृतस्य "मामुपास्व" "मामेव जानीही"त्युपदेशस्योपपत्तिरित्यत आह--

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ।१।१।३१।

"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" (छा० ६।३।२) "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" (यजु० आ०) "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि" (छा० ६।८।७) "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरम्" (बृ० ५।७।२२) इत्येवमादिशास्त्रेण जीवात्मनः परमात्मशरीरत्वं परमात्मनश्च जीवशरीरित्वं नियन्तृत्वं जीवस्य तन्नियम्यत्वेन तदधीनस्वरूपस्थितिप्रवृत्तितया तदभिन्नसत्ताकत्वं तेन तदभिन्नत्वञ्चावगम्य जीववाचिनामहंममादिशब्दानां तच्छरीरिणि परमात्मनि पर्यवसानत्वेन परमात्मनोऽहंममादिशब्द-

वाच्यत्वमवगम्य "मामेव विजानीहि" "मामुपास्व" इत्यादिभिः स्वशरीरिणं परमात्मानमेवोपास्यत्वेनोपदिष्टवानिन्द्रः। तत्र दृष्टांतमाह—वामदेववदिति—यथाजलसागरे तैलसमूहे च पतितस्य तूलकणस्य स्वेन रूपेण भानं न भवति—अपितु जलादिरूपेणैव, तथैव सर्वव्यापकेन परमात्मनाऽन्तर्बहिर्व्याप्तस्य जीवस्य स्वेन रूपेण भानस्य प्रमोषेण परमात्मरूपेणैव मानम्। ब्रह्मणा बहिरन्तर्व्याप्तस्य जीवस्य तदपृथक्सिद्धया तदधीनस्वरूपस्थितिप्रवृत्तित्वेन तदभिन्नसत्ताकत्वेन शरीरशरीरिणोरुभयोरप्येकशब्दवाच्यत्वमवगम्याहं ब्रह्मास्मीति ब्रह्मविद्यया प्रतीतिरुपपद्यते। तदभिन्नाभिन्नस्य तदभिन्नत्वमितिन्यायेन मनुसूर्यादिसर्वजगदभिन्नं ब्रह्म तदभिन्नस्य स्वस्य मनुसूर्याद्यभिन्नत्वम्पश्यन् मनुसूर्यादिसर्वरूपो भूत्वाह वामदेवः। "अहं मनुरभवं सूर्यश्च" (बृ० ३।४।१०) एवञ्च तदात्मकत्वानुसन्धानेनैव "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्" (बृ० १।४।१०) इत्यादयोऽपि प्रतीतय उपपद्यन्त इति सर्वं स्पष्टम् ॥३१॥

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ।१।१।३२

ननु "न वाचं विजिज्ञासीत वक्तारं विद्यात्" (कौ० ब्रा० १।८) इति जीवलिङ्गात् वागादिकरणैर्वेष्टितस्य जीवस्य वक्तुर्ज्ञेयत्वावगमात्। एवं "प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" (कौ० ब्रा० ३।१) इति प्राणलिङ्गात्। देहधारणस्य प्राणलिङ्गात्—तच्चच्छान्दोग्येऽपि व्यक्तम्" ते ह प्राणाः प्रजापतिपितरमेत्योचुरित्यारभ्य भगवन्नेधि त्वन्नः श्रेष्ठोऽसि मोत्क्रामीरित्यादिना प्राणेन्द्रियसंवादेनाप्यवगम्यते। अतो न ब्रह्मपरमिदं वाक्यमितिचेन्न, उपासात्रैविध्यात् परमात्मन एव सर्वकारणभूतस्य स्वाकारेण सच्चिदानन्दस्वरूपेण, प्राणाद्यचेतनवर्गशरीरकत्वेन चेतनजीवब्रह्मेन्द्रादिशरीरकत्वेन चानुसन्धानमित्युपासात्रैविध्याद्धेतोःप्राणेन्द्रादिशब्देन परमात्मनोऽभिधानमवगम्यते।

अन्यत्रापि "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दो ब्रह्म" (तै० ३।६) इत्यादिना स्वरूपेणानुसन्धानं "तत्सृष्ट्वा तदेवानुप्राविशत्" "तदनुप्रविश्य सच्च त्यच्चाभवत्" (तै० २।६) "निरुक्तञ्चानिरुक्तञ्च निलयनञ्चानिलयनं च विज्ञानञ्चाविज्ञानञ्च सत्यञ्चानृतञ्च सत्यमभवत्" (तै० २।६) इत्यादिना भोक्तृभोग्यभोगोपकरणतयानुसन्धानाम् "यः पृथिव्यां तिष्ठन् यस्य पृथिवी शरीरम्" (बृ० ३।७।३) "योप्सु तिष्ठन् यस्यापः शरीरम्" (बृ० ३।७।४) "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्" (बृ० ४।४।१८) इत्यादिभिरचेतनवर्गशरीरकत्वेन "य आत्मनि तिष्ठन् यस्यात्मा शरीरम्" (बृ० ५। अ० ७। ब्रा० विज्ञानस्थाने माध्यन्दिनपाठः) इत्यादिभिश्चेतनजीवेन्द्रादिशरीरकत्वेन चानुसंधानं बहुश उपलभ्यते ।

आश्रितत्वाच्च "प्राणबन्धनं हि मनः" इत्यादिना ब्रह्मलिङ्गवशात् प्राणशब्दस्य ब्रह्मपरत्वावगमाद्ब्रह्मोपदेशोयमित्यवगम्यते । इहापि प्रकरणे "यत्वं मनुष्याय हिततमं मन्यसे" इति हिततमोपक्रमादिब्रह्मलिङ्गयोगाच्च ब्रह्मोपदेशोऽयमित्यवधेयम् । यत्तु प्राणः प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" (कौ० ब्रा० ३।३) इति मुख्यप्राणलिङ्गात् तस्यैवायमुद्देश इत्युक्तं तत्र, "नप्राणेन नाप्राणेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ" ( काठ० २।५।५ ) इति श्रुत्या प्राणव्यापारस्यापि परमात्मायत्तत्वात्तस्यापि परमात्मन्येव प्रयुक्तत्वादिति सर्वमवदातम् ॥३२॥

इति श्रीमद्भगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये प्रथमाध्यायस्य प्रथमः पादः ॥१॥

## श्रीमद्भगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये

# प्रथमाध्यायस्य द्वितीयः पादः ।

### * अथ सर्वत्र प्रसिद्धयधिकरणम् ॥१॥

प्रथमपादे श्रद्धापूर्वकाचार्योपसत्यादिभिरधीतसाङ्गसशिरस्कवेदस्य कर्ममीमांसाश्रवणाधिगतकर्मयथार्थविज्ञानस्य केवलकर्मणामल्पास्थिरफलत्वज्ञानतया समुत्पन्नमोक्षाभिलापस्यानन्तस्थिरफलब्रह्मजिज्ञासायां प्रवृत्तस्य मुमुक्षोरभीप्सितफलसिद्धये शास्त्रैकप्रमाणकेऽनन्तकल्याणगुणगणैकराशौ निखिलजगज्जन्मादिहेतौ परे ब्रह्मणि श्रुतीनां समन्वयो दर्शितः । तत्र केषाञ्चिदर्थान्तरप्रसिद्धानां श्रौतवाक्यानां परमात्मन एवाभिधायकत्वमित्यपि समर्थितम् ।

अथ कानिचिदस्पष्टजीवादिलिङ्गकानि कानिचिच्च स्पष्टजीवलिङ्गकानि वाक्यानि तान्यपि ब्रह्मपराण्येवेति निर्णयाय द्वितीयतृतीयपादावारभ्येते--

### सर्वत्र प्रसिद्धोपदेशात् ।१।२।१

छान्दोग्ये-सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत । अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः (छा० ३।१४।१।२।) इत्यादिकमाम्नायते ।

तत्र संशयः । किमयं मनोमयत्वादिधर्मकः क्षेत्रज्ञ उपास्यत्वेन परि-

---

* 'यथाक्रतुश्रुताव' त्रोपास्यो जीवोऽथवेश्वरः ? । मनः प्राणान्वयाज्जीवो ब्रह्म सर्वप्रसिद्धितः ॥१॥ यद्वा-'सर्वं खल्विदमि'त्यत्र ब्रह्मशब्देन किं मतम् ? । जीवो वा ब्रह्म वा ? जीवः सर्वं ब्रह्मेति भाषणात् ॥२॥ प्रसिद्धकथनाद् ब्रह्म तज्जलानिति हेतुतः ।

गृह्यत आहोस्वित्परमात्मेति । किन्तावद्युक्तम् । जीव इति । कुतः ? मनः प्राणयोर्ह्यत्रोपकरणत्वश्रवणात्ताहृशोपकरणानि क्षेत्रज्ञस्यैव सर्वत्र प्रसिद्धतया ज्ञायन्त इति । परमात्मनस्तु—"अप्राणोऽमनाः शुद्ध" इत्यादिना मनः प्राणादिसम्बन्धस्य प्रतिषेधान्मनोमयत्वादेस्तत्सम्बन्धित्वानुपपत्तेः । ननु "सर्वं खल्विदं ब्रह्मे" ति पूर्ववाक्ये स्वरवेणैव ब्रह्माभिहितम् तस्यैवोपासनेयमपि स्यादितिचेन्न, तस्य वाक्यस्योपासनाङ्गभूतशान्तिविधानरूपार्थे विनियुक्तत्वात् । उत्तरवाक्ये मनोमयादिपदार्थेन समं निराकाङ्क्षत्वाच्च । एवञ्च "स क्रतु कुर्वीते" त्यनेन वाक्येन विहितस्योपासनस्य न पूर्वोदितब्रह्मविषयत्वमितिप्राप्ते ब्रूमः । मनोमयत्वादिगुणकः परमात्मैव । कुतः ? सर्वत्र प्रसिद्धोपदेशात् । सर्ववेदान्तवाक्येषु तस्मिन्नेव परे ब्रह्मणि प्रसिद्धस्य मनोमयत्वादेरुपदेशात् । "मनोमयः प्राणशरीरनेता" (मु० २।२।७।) "स एषोन्तर्हृदयाकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः" (तै०१।६।१।) "न चक्षुषा गृह्यते नापि वाचा" "मनसा तु विशुद्धेन" (मु० ३।१।८।) इत्यादिषु हि ब्रह्मणो मनोमयत्वादिगुणैः प्रसिद्धस्योपदेशात् । मनोमयत्वमत्र विशुद्धमनोग्राह्यत्वम्, प्राणशरीरत्वं प्राणस्याप्याधारत्वं नियन्तृत्वञ्च । तस्मान्मनोमयत्वादिगुणकः परमात्मैवात्रोपास्यतया विहितो न जीव इति ।

यद्वा "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" (छा० ४। १४।१) इति पूर्वोदितवाक्येनैवोपासनं विधीयते । सर्वशरीरकं ब्रह्म शान्तस्सन्नुपासीतेति । तत्र गुणोपादानार्थं स क्रतुं कुर्वीतेत्यनुवादः । ते च गुणाः मनोमयत्वादयः । अर्थान्मनोमयत्वादिगुणविशिष्टं सर्वशरीरकं ब्रह्मोपासीतेति समुदितवाक्यार्थः । तत्र ब्रह्मशब्देन किमत्र प्रत्यगात्मोच्यत आहोस्वित् परमात्मेति संशयः । प्रत्यगात्मेति पूर्वपक्षस्तस्यैव सर्वपदार्थसामानाधिकरण्यात् । ब्रह्मणस्तु तन्नोपपद्यते । अपहतपाप्मत्ववचनैर्हेयगुणराहित्येन पुण्यपापसमन्वितस्य सर्वपदग्राह्यस्य तस्याऽसंभवात् । तत्र सिद्धान्त उच्यते । सर्वत्र प्रसिद्धोपदेशादिति । सर्वं खल्विदं ब्रह्मेत्यादिवाक्य

निर्दिष्टं सर्वशरीरितया विधीयमानं ब्रह्मैव न क्षेत्रज्ञः। कुतः? प्रसिद्धोपदेशात्। तज्जलानि तद्धेतोः। यस्मात्सर्वमिदं जगत् ब्रह्मात्मकमेव तज्जत्वा तल्लत्वात्तदनत्वाच्चेति प्रसिद्धोऽपदेश उपलभ्यते। यतो वेत्यादिश्रुतय उपदिशन्ति परस्य ब्रह्मणो जगत्कारणत्वम्। तत्र हि परमात्मनः सकाशादेवोत्पत्तिस्तेनैव पालनं तत्रैव च लय इति स्पष्टमुक्तम्। एवञ्च सर्वपदार्थान्तर्गतस्य क्षेत्रज्ञस्यापि स एव परमात्मा कारणम्। "सकारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता नचाधिपः" (श्वे० ३।६) इति करणाधिपस्य क्षेत्रज्ञस्याधिपः परमात्मैव कारणमभिधीयते। एवञ्च सर्वशरीरकस्य सर्वप्रकारस्य परस्य ब्रह्मणः शान्तः सन्नुपासनं कुर्यादिति श्रुतिः परमात्मनः सर्वात्मकत्वमुपपाद्य सार्वदिकमुपासनं विदधाति। परमात्मा च सूक्ष्मचिदचिद्विशिष्टतया स्थूलचिदचिद्विशिष्टस्य कार्यावस्थस्य कारणमित्यसकृदावेदितम्। अतः परमात्मैवात्र ब्रह्मशब्दाभिधेयो न क्षेत्रज्ञ इति ॥१॥

## विवक्षितगुणोपपत्तेश्च ।१।२।२।

"मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः" (छा० ३।१४।२) इत्यादिना ब्रह्मासाधारणत्वेन वक्तुमिष्टानां सत्यसंकल्पत्वादीनां गुणानां ब्रह्मण्येवोपपत्तेश्चायं मनोमयत्वादिगुणकः परमात्मैव। श्रुत्यर्थस्तु–मनोमयः भगवन्निदिध्यासनादिसाधनैर्निर्मलीकृतमनसा ग्राह्यः। प्राणशरीरः–सर्वेषां प्राणानां धारकः "यस्य प्राणः शरीरम् इति श्रुत्या प्राणस्य शरीरत्वनिर्देशादाधेयत्वविधेयत्वाङ्गत्वादयस्तस्मिन्फलन्ति। लोकेऽपि शरीरपदेनाधेयत्वादय एव गृह्यन्त इति तान्येव शरीरपदबोध्यानीति। भारूपः–प्रकाशस्वरूपः–अप्राकृतदिव्यमङ्गलविग्रहवत्तया निरतिशयदीप्तियुक्त इति यावत्। सत्यसंकल्पः–अप्रतिहतसंकल्पः। आकाशात्मा–आकाशस्याप्यात्मत्वेन ततोऽपि सूक्ष्मरूपः–"अणोरणीयान्महतो महीया" निति श्रुतेः। सर्वकर्मा–सर्वं जगत्कर्म यस्यासौ सर्वकर्मा सर्वजगत्कर्त्तेति यावत्। यद्वा–

सर्वाणि जगत्प्राणिभिः क्रियमाणानि कर्माणि यस्य सः सर्वजगत्प्राणिभिः सर्वकर्मकारयितेत्यर्थः। सर्वकामः—काम्यन्त इति कामाः भोग्यभोगोपकरणादयस्ते दिव्याः सन्ति यस्य स सर्वकामः सर्वगन्धोऽप्राकृतदिव्यगन्धः। सर्वरसः। दिव्यरसः। स्वभोग्यभूतनिरवद्यनिरतिशयकल्याणरूपाः सर्वविधाः गन्धरसाः स्वेच्छया सन्ति यस्य स इत्यर्थः।

"अशब्दमस्पर्शमगन्धवच्च" इतितु प्राकृतशब्दस्पर्शादिनिषेधपरमिति ज्ञेयम्। सर्वमिदमभ्यात्तः। उक्तमिदं रसपर्य्यन्तं कल्याणगुणजातं सर्वं स्वीकृतवानित्यर्थः। अभ्यात्त इति कर्तरि क्तः। अवाकी—वाक उक्तिः सोऽस्य नास्तीत्यवाकी। यतः। अनादरः—अवाप्तसमस्तकामत्वेनादर्त्तव्याभावादादररहितः। अत एवावाकी। अजल्पाकः—परिपूर्णैश्वर्यत्वाद्ब्रह्मादिस्तम्बपर्यन्तं सर्वं तृणीकृत्य तूष्णीमासीन इत्यर्थः। त एते विवक्षितगुणाः पर एव ब्रह्मण्युपपद्यन्त इति मनोमयत्वादिगुणकः परमात्मैव न जीव इति ॥२॥

## अनुपपत्तेस्तु न शारीरः ।१।२।३।

पूर्वसूत्रेण विवक्षितानां गुणानां परमात्मन्युपपत्तिमभिधायानेन तु जीवेऽनुपपत्तिस्तेषामुच्यते। तुशब्दोऽवधारणार्थकः। उक्तन्यायात् परमात्मैव मनोमयत्वादिगुणको न शारीरो जीवः। कुतः। मनोमयत्वप्राणशरीरत्वभारूपत्वसत्यसंकल्पत्वादीनां कल्याणगुणानां शरीरसम्बधनिबन्धनापरिमितदुःखनिमग्नजीवसम्बन्धित्वानुपपत्तेः ॥३॥

हेत्वन्तरमाह—

## कर्मकर्तृव्यपदेशाच्च ।१।२ ४।

न शारीर इति पूर्वपदानुषङ्गः। शारीरो मनोमयत्वादिगुणको न भवितुमर्हति। कुतः। कर्मकर्तृव्यपदेशात्। "एतमितः प्रेत्याभिसम्भवितास्मि" (छा० ३।१४।४) इति प्रकृतं मनोमयत्वादिगुणकमुपास्यं परमा-

त्मानं प्राप्यत्वेन कर्मत्वेन व्यपदिशति । अभिसंभवितास्मीति प्राप्तास्मीत्युपासकं जीवं कर्तृत्वेन व्यपदिशति । अतः प्राप्ता जीव उपासकः प्राप्यं ब्रह्मोपास्यं न च सत्यां गतावेकस्यैव कर्मकर्तृव्यपदेशो युज्यते । तथोपास्योपासकभावोऽपि भेदाधिष्ठान एवेति न शारीरो मनोमयत्वादिगुणकः । श्रुत्यर्थस्तु-प्रारब्धकर्मावसाने मुमुक्षुरहं शरीरपातादूर्ध्वं प्रकृतं मनोमयत्वादिगुणकमेतं परमात्मानमभिसंभवितास्मि प्राप्तास्मीति ॥४॥

## शब्दविशेषात् ।१।२।५।

इतोऽपि मनोमयत्वादिगुणकः परमात्मा शारीराज्जीवात्मनोऽन्यः कस्मात् । शब्दविशेषात् । "एष म आत्मान्तर्हृदये" (छा० ३।१४।३) इत्यत्र षष्ठ्या शारीरो निर्दिष्टः प्रथमया परमात्मा । भिन्नविभक्तिनिर्देशेन तयोर्भेदः स्पष्ट एव । तथा समानप्रकरणे वाजिनां श्रुतौ शब्दविशेषः श्रूयते जीवपरयोः । "व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा एवमयमन्तरात्मन् पुरुषो हिरण्मयो यथा ज्योतिरधूमम्" (शतपथब्राह्मण १।६।३) इति । अन्तरात्मन्निति सप्तमीप्रकृतिकेन शारीरो निर्दिष्टः पुरुषो हिरण्मय इति प्रथमान्तेनोपास्यः परः । अतस्तयोर्भेदप्रत्यायकशब्दविशेषान्मनोमयत्वादिगुणकः परः शारीरादन्य इति ॥५॥

इतश्च शारीराद्भिन्नः ।

## स्मृतेश्च ।१।२।६।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ गी० १८।६१।
तमेव शरणं गच्छ सर्वभावेन भारत ।
"यो मां पश्यति सर्वत्र" "मयि सर्वमिदं प्रोतम्"
"सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च" (गी० १५।१५।) इत्यादयः स्मृतयः । चकारात्-"ज्ञाज्ञौ द्वावजावीशानीशौ"

"प्रधानक्षेत्रज्ञपतिर्गुणेशः" (श्वे० ६।१६) "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" (श्वे० ६।१३) पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" (श्वे० १।६) इत्यादयः श्रुतयोऽप्युपासकत्वेन जीवमुपास्यतया परमात्मानमुपदिशन्ति। अतो जीवादन्यः परमात्मेति।

एवमत्रास्मिन्द्वितीये पादे भगवता सूत्रकारेण जीवपरयोर्भेदश्चतुर्भिः सूत्रैः स्पष्टतयाऽभिहितः। अयञ्च भेदः श्रुतिस्मृतिषु परमप्रसिद्धिमापन्नः पदवाक्यमाननिष्णातैरधिगतप्रत्यक्षादिप्रमाणमर्य्यादैरवश्यमेवाद्रियते।

यत्तु पर एव ह्यात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यते। यथा घटकरकाद्युपाधिवशादपरिच्छिन्नमपि नभः परिच्छिन्नवदवभासते। तथैवौपाधिकभेदमादाय कर्मकर्तृत्वव्यवहारः प्राक् तत्त्वमसीत्यात्मैकत्वोपदेशग्रहणात्। गृहीते त्वात्मैकत्वे सर्वप्रपञ्चव्यावृत्तिरिति स्वपक्षावेशवशादुक्तम, तत्समीचीनन्यायविद्भिरनादरणीयम्। सर्वज्ञत्वसर्वशक्तित्वादिगुणवतोऽनन्ताप्रतिहतज्ञानस्वरूपस्य स्वतन्त्रस्य परब्रह्मणोऽविद्याकल्पितोपाधियोगासम्भवात्।

तथाहि—परमात्मैवोपाधिवशाज्जीवत्वमुपगत इत्यत्रोपाधीनां विभुत्वं मध्यमपरिमाणत्वमणुत्वं वेति। नाद्यः। सर्वस्यावृतत्वेन जगदान्ध्यप्रसङ्गात् प्रकाशकाभावेन गत्याद्यनुपपत्तेश्च। मुक्तोपसृप्यभावप्रसङ्गश्च दुष्परिहरः। न द्वितीयः। उपाध्यणुत्वनिरूपितजीवाणुत्वस्य स्वकीयसिद्धान्तस्य बाधात् चाक्षुषत्वापत्तेश्च। नापि तृतीयः। उपाधिगमने तदवच्छिन्नाद्वितीयचिन्मात्रस्यात्मनः सर्वगतत्वेन घटगमने तदवच्छिन्नाकाशस्य गतेरभावादुपाधिना सह गमनाभावात्। क्षणे क्षणे बन्धमोक्षौ च स्याताम्। अनाद्युपाध्यवच्छिन्नस्य साधनाभावेऽपि मुक्तिप्रसङ्गात्। निर्विशेषचिन्मात्रस्य तस्याकस्मिकबन्धप्रसक्तेश्च। एवमेव ब्रह्मविषयकजिज्ञासाचार्योपसत्तिशास्त्रारम्भादिसाधनानां वैयर्थ्यापत्तिः।

किञ्च परिच्छेदशस्योपाधेः सत्यत्वं मिथ्यात्वं वा ? नाद्यः। तस्य द्वितीयत्वेनाद्वैतसिद्धान्तभङ्गात्। सत्यस्य च ज्ञानबाध्यत्वाभावेनानिर्मोक्षप्रसङ्गाच्च। नापि द्वितीयः। अनुपपन्नत्वात्। नहि स्वाप्ननिगडेन जाग्रद्दशायां बन्धो दृष्टचरः। तस्माच्छ्रुतियुक्तिविरुद्धत्वादुपाधिपरिकल्पितो जीव इतिमतमनुपादेयमेव ॥६॥

## अर्भकौकस्त्वात्तद्व्यपदेशाच्चेति चेन्न निचाय्यत्वादेवं व्योमवच्च ।१।२।७।

अर्भकमत्यल्पकमोको नीडं स्थानं यस्य तस्य भावस्तत्त्वं तस्मात्। "एष म आत्मान्तर्हृदये" (छा० ३।१४।३) इत्यणीयसि हृदयायतने स्थितत्वात्। "अणीयान्व्रीहेर्वा यवाद्वा" (छा० ३।१४।३) इतिस्वरूपेणाणीयस्त्वस्य व्यपदेशात्। शारीरो जीव एवात्रोपास्यतया निश्चीयते। तस्यान्यत्रा "राग्रमात्रो ह्यवरोऽपि दृष्टः" इत्यादावल्पीयस्त्वश्रवणात् न परमात्मा तस्य सर्वगतत्वेनापरिच्छिन्नत्वादिति चेन्न। निचाय्यत्वादेवम्। एवं स्वल्पपरिमाणहृदयस्थत्वेन निचाय्यत्वादुपास्यत्वात्परस्यात्मनस्तथात्वं व्यपदिश्यते। न पुनरणीयस्त्वमेवास्य स्वरूपम्। सर्वगतस्यापि कयाचिदपेक्षया परिच्छिन्नत्वं व्यपदिश्यते। अत्र दृष्टान्तः व्योमवच्चेति। यथा सर्वगतमपि व्योमतल्पपरिमाणीकः सूचीपाशापेक्षया व्यपदिश्यते। यथा चाखिललोकाधिपतेरयोध्याधिपतित्वेन व्यपदेशश्चक्रवर्तिकुलेवतीर्णस्य भगवतः श्रीरामस्योपपद्यते। एवमपरिच्छिन्नस्यापि परस्योपासनार्थमल्पत्वव्यपदेशः। न चैतावताल्पप्रमाणापत्तिः। "ज्यायान्पृथिव्या ज्यायानन्तरिक्षा" दित्यादिना ब्रह्मणो महत्त्वाभिधानात्।

एतदुक्तम्भवति-सर्वगतोऽपीश्वरो हृदयपुण्डरीके परिच्छिन्नरूपो ध्यानयोगादुपास्यमानः प्रसीदतीति ॥७॥

## सम्भोगप्राप्तिरितिचेन्न वैशेष्यात् ।१।२।८।

हृदयमनःप्राणेषु जीवपरमात्मस्थित्यभ्युपगमे जीवस्येव शरीरसम्ब-

न्यप्रयुक्तसुखदुःखभोगावाप्तिः परमात्मनोऽपि प्रसज्येतेति चेन्न, जीवपरयोर्वैशेष्यात्। स्वार्थे ष्यञ्। स्वतन्त्रपरतन्त्रज्ञानाश्रयाज्ञानाश्रयत्वादिरूपेणोभयोर्विशेषवत्त्वात्। नहि शरीरान्तर्वर्तित्वं सुखदुःखोपभोगहेतुः। शुभाशुभकर्मपारवश्यतायास्तद्धेतुत्वेनाभ्युपगमस्य सर्वसम्मतत्वात्। एवं स्थिते "तयोरन्यः पिप्पलं स्वाद्वत्ति-अनश्नन्नन्योऽभिचाकशीति" श्रुतिर्जीवस्य पुण्यपापरूपकर्मपरवशत्वेन सुखदुःखोपभोगमपहतपाप्मनः परमात्मनस्तन्निवृत्तिञ्चाभिधत्ते।

तत्र यः परमात्मासौ स नित्यो निर्गुणः स्मृतः।
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा॥ (वि० पु०)
न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा। (गी०)

इत्यादिस्मृतयोऽपि तस्यात्यन्तवैशेष्यं ब्रुवते। तस्माज्जीवस्यैव सम्भोगप्राप्तिर्न परमात्मन इत्यतो मनोमयः प्राणशरीरः परमात्मैवेति सिद्धम्॥८॥

## ❀ अत्रधिकरणम् ॥२॥

पूर्वाधिकरणेन सर्वं खल्विदं ब्रह्म" त्यादि श्रुतीनां समन्वयं ब्रह्मणि प्रदर्श्य तस्य कर्मजन्यसुखदुःखोपभोगाभावोऽपि दर्शितः। इदानीं "यस्य ब्रह्म च क्षत्रं चोभे भवत" इत्यादि श्रुतीनां समन्वयं तस्मिन्नेव ब्रह्मणि दर्शयंस्तस्य चराचरात्तृत्वासंभवरूपां शंकां निराकरोति।

## अत्ता चराचरग्रहणात् ।१।२।९।

अथ कठवल्लीष्वेवमाम्नायते। "यस्य ब्रह्म च क्षत्रञ्चोभे भवत

---

* ब्रह्मक्षत्रौदने वाक्ये अत्ता कोऽयं विचार्यताम् ॥३॥ अग्निर्जीवोऽथवा ब्रह्म ? विशेषानवधारणात्। 'अग्निरन्नाद' इत्यग्निर्दाहकत्वस्य शक्तितः ॥४॥ कर्महेतुकभोक्तृत्वं पिप्पलादनदर्शनात्। जीवस्यैवेति, न ब्रह्म सर्वात्तृत्वस्य दर्शनात् ॥५॥

ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" ( काठ० १।२।२५ ) इत्यत्रौदनोपसेचनसूचितः कश्चिदत्ता प्रतीयते । स किमग्निः किंवा जीव उत परमात्मेति संशयः । विशेषानवधारणात् त्रयाणामपि संशयविपयत्यादिति । किंयुक्तम् ? अग्निस्तावदत्तास्यात् "अग्निरन्नाद" इति श्रुतेः । ब्रह्मक्षत्रादिदहनसामर्थ्यप्रसिद्धेश्च । जीवो वात्ता स्यात् । तस्य हि कर्मनिमित्तकभोक्तृत्वप्रसिद्धिः । "तयोरन्यः पिप्पलं स्वाद्वत्ति" (मु० ३।१।१) इति दर्शनात् । परमात्मनस्तु अनश्नन्नन्योऽभिचाकशीतीति तत्रैव निषेधादिति प्राप्ते ब्रूमः ।

अत्रात्ता खलु परमात्मा भवितुमर्हति । कुतः । चराचरग्रहणात् । कृत्स्नस्य चराचरस्यात्तृत्वं तस्यैव सम्भवति । ब्रह्म च क्षत्रं चेति कृत्स्नं जगच्चराचरात्मकमिहादनीयत्वेन गृह्यते । उपसेचनं मृत्युरुपसेचनं स्वयमद्यमानं सदन्यस्यादनहेतुर्भवतीति प्रसिद्धम् । तस्मादुपसेचनत्वेन मृत्योरप्यद्यमानत्वात्तदुपसिच्यमानस्य सर्वस्य चराचरस्य जगत ओदनत्वमत्र विवक्षितम् । तादृशस्याद्यस्यात्ता परमात्मनोऽन्यो न सम्भवति । परमात्मा तु ब्रह्मक्षत्रोपलक्षितं चराचरात्मकं जगत्संहरन् सर्वमत्तीति तस्यैवात्तृत्वमुपपद्यते । "अनश्नन्नन्योऽभिचाकशीति" ( मु ३।१।१। )एतद्दर्शनं कर्म्मणां फलभोगस्य प्रतिषेधपरम् । सर्ववेदान्तेषु सृष्टिस्थितिसंहारकारणत्वेन ब्रह्मणः प्रसिद्धत्वात् । सर्वसंहृतिरूपभोक्तृत्वेनात्ता परमात्मैव न चान्य इति ॥९॥

## प्रकरणाच्च ।१।२।१०।

एवमपि परमात्मैवात्रात्ता भवितुमर्हति । यतस्तस्यैवेदं प्रकरणम् "न जायते म्रियते वा विपश्चित्" (काठ० १।२।१८) "महान्तं विभुमात्मानं मत्वा धीरो न शोचति" (का० १।२।२२) "नायमात्मा प्रवचनेन लभ्यो न मेधया" (का० १।२।२३) इत्यादिषु ब्रह्मैव प्रकृतम् । "क इत्था वेद यत्र सः" (का० १।२।२५) इति तत्प्रसादाभावे तस्य दुर्विज्ञानस्वरूपलिङ्गादपीहात्तृत्वं परमात्मन एवेति ॥१०॥

## * अथ गुहाप्रविष्टाधिकरणम् ॥३॥

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ।१ २।११।

कठवल्लीषु पूर्ववाक्यानन्तरमेवं पठ्यते "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेता" (का० १।३।१) इति । तत्र संशयः ।

किमत्र गुहां प्रविष्टौ बुद्धिजीवौ । आहोस्विज्जीवपरमात्मानौ । किं युक्तम् ? गुहां प्रविष्टाविति वचनात्सर्वगतस्य परमात्मनोऽपरिच्छिन्नत्वेन गुहाप्रवेशासम्भवात् । ऋतं पिबन्तावित्यपि न सम्भवत्याप्तकामस्य तस्य- कर्मफलभोगेच्छाऽनुपपत्तेः । लोक्यन्ते भुज्यन्ते कर्मफलानीति लोकस्त- स्मिल्लोके शरीरे सबन्धासम्भवाच्च । किञ्च जीवात्मा बुद्धेर्भिन्नस्त- ज्ज्ञानार्थं "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाहम्" (का० १।१।२०) इत्येवं प्रश्नदर्शनाद्बुद्धि- जीवावेवात्र प्रतिपाद्येते । इति प्राप्त आह । गुहां प्रविष्टावात्मानौ हि तद्दर्शनादिति । गुहां प्रविष्टावृतं पिबन्तावित्यत्र न बुद्धिजीवौ नवा प्राण- जीवावुच्येते । अपितु जीवपरमात्मानावेव ज्ञेयौ हि यतस्तद्दर्शनात् तयो- रेवात्र स्थितिश्रवणात् अस्यामेवोपनिषदि "अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य" (का० २।४।१२) इति स्वभक्त- जनहृदयगुहायां परमात्मनोऽवस्थानात् । तथा "तं दुर्दर्शं गूढमनुप्रविष्टं गुहा- हितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" (का०१।२।१२) यो वेदनिहितं गुहायामित्यादिभिश्च सर्वगतस्यापि ब्रह्मणो हृदयलक्षणगुहावर्तित्वं श्रुतम् । एवमेव "या प्राणेन सम्भवत्यदिति

---

* गुहाप्रवेशवाक्यं च प्रवेष्टृत्वेन कौ मतौ ? । बुद्धिजीवा उत स्याता जीवेशौवाऽत्र किं शुभम् ॥६॥ बुद्धिजीवाविहोक्तौ स्तः सम्भवात् प्रश्न- दर्शनात् । जीवेशाविति विज्ञेयौ काठके च तयोक्तितः ॥७॥

दैवतामयी । गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत" (का० २।१।७) इत्यादिना जीवस्यापि गुहाप्रवेशो व्यपदिष्टः । कर्मफलान्यत्तीत्यदितिर्जीवः प्राणेन सम्भवति-इन्द्रियाधीनभोगा । गुहां प्रविश्य तिष्ठन्ती-हृदयपुण्डरीकमध्यवर्त्तिनी । भूतेभिर्व्यजायत-पृथिव्यादिभूतैस्सहिता देवादिरूपेण बहुधा जायते । इतिश्रुत्यर्थः । एवञ्च "ऋतं पिबन्ताविति व्यपदेशः" छत्रिणो यान्तीतिवत्संगच्छते । कर्मफलभोक्तृत्वेनैकस्मिञ्चेतने निश्चिते द्वितीयेनापि समानस्वभावेन चेतनेनैव भाव्यम् । समानसंख्यान्वयश्च समानस्वभावेष्वेव लोके दृश्यते । तद्यथाऽस्य गोर्द्वितीयोन्वेष्टव्य इत्युक्ते गौरेवान्विष्यते, नाश्वो न गर्दभ इति । अथवा-जीवः पिबति, परमात्मा पाययति एवमपि पिबतीत्येवमुच्यते । पाचयितर्यपि पक्तृत्वप्रसिद्धिदर्शनात् । अनन्यशरण भक्तर्पितकर्मफलस्याप्रभोक्तायं परमात्मेति प्रसिद्धश्च । तस्मात्स्पष्टजीवपरमात्मलिङ्गाज्जीव परमात्मानावेव गुहाप्रविष्टाविति ॥११॥

## विशेषणाच्च ।१।२।१२।

इतश्च जीवपरमात्मानावेव गुहाप्रविष्टौ ज्ञेयौ तयोरेवाऽत्रविशेषणात् "आत्मानं रथिनं विद्धि शरीरं रथमेव तु" (कठ० १।३।३।) इत्यादिना रथिरथादिरूपकल्पनया संसारान्मोक्षगन्ता जीवो निश्चितः । "सोऽध्वनः परमाप्नोति । तद्विष्णोः परमंपद" मिति गन्तव्यत्वेन च परः । तथा च "ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति" (का० १।१।१७) ब्रह्मणो जातत्वाज्जत्वाच्च ब्रह्मजज्ञो जीवस्तं देवमीड्यं विदित्वेति जीवात्मानमुपासकं ब्रह्मात्मकतयावगम्येत्यर्थः । "यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् । अभयं तितीर्षतां पारं नाचिकेतं शकेमहि" (कठ० १।३।२।) इत्यत्रोपास्यः परमात्मोक्त इति जीवपरमात्मानौ गन्तृगन्तव्यभावेन मन्तृमन्तव्यत्वेनोपासकोपासनीयत्वेन चास्मिन्प्रकरणे विशिष्टतया दर्शितौ । तस्माद्गुहाप्रविष्टत्वेनेह जीवपरमात्मानावेवोच्येते नतु बुद्धिजीवाविति सिद्धम् ॥१२॥

## * अथान्तराधिकरणम् ॥४॥

## अन्तर उपपत्तेः ।१।१।१३।

छान्दोग्ये–उपकोशलविद्यायां श्रूयते–"य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच । एतदमृतमभयमेतद्‌ब्रह्म" (छा० ४।१५।१) इति । तत्र संशयः । किमयं प्रतिबिम्बात्मा ह्यक्ष्याधारतया निर्दिश्यते । अथवा चक्षुरधिष्ठाता देवताविशेष उत जीवः । आहोस्वित्परमात्मेति । अत्र पूर्वः पक्षः । अत्राक्ष्याधारतया प्रतिबिम्बात्मैव स्यात् । कुतः ? दृश्यत इति प्रसिद्धवदपरोक्षतयाभिधानात् । जीवादेरदृश्यत्वप्रसिद्धेश्च । "रश्मिभिरेषोऽस्मिन्प्रतिष्ठित" (बृ० ७।५।१) इति श्रुतेः । चक्षुषोऽनुग्राहकश्चक्षुरधिष्ठातादित्यरूपो देवताविशेषो वा । चक्षुषा रूपं पश्यन् चक्षुषि सन्निहितो जीवो वात्र प्रतिपत्तव्यः । आत्मशब्दोऽप्यस्मिन्पक्षेऽनुकूलो भवति । ननु परमात्मा सर्वगतस्य परमात्मनोऽक्षिस्थानत्वासम्भवात् ।

अत्रोच्यते । अन्तर उपपत्तेरिति । अन्तरः परमात्मा कुतः ? तत्रोपदिष्टगुणानां तस्मिन्नेवोपपत्तेः । एतदमृतमभयमेतद्‌ब्रह्मेति श्रुति दर्शितामृतत्वाभयत्वादिगुणानां तस्मादन्यत्राऽनुपपत्तेः । "एतं संयद्वाम इत्याचक्षते । एतं हि सर्वाणि वामान्यभिसंयन्ति एष उ एव वामनिः । एष हि सर्वाणि वामानि नयति । एष उ एव भामनिः । एष हि सर्वेषु लोकेषु भाति" ( छा० ४। १५।३। ) इति वाक्योक्तानां संयद्वामत्वादिनां गुणानां परमात्मान्येवोपपत्तेः परमात्मैवात्राक्ष्याधारतयाभिधीयते । संयन्ति वामा-

---

* उपकोशलविद्यायामन्तरक्षिणि को मतः ? । प्रतिबिम्बोऽथवा चक्षुरधिष्ठात्री च देवता ॥८॥ जीवो वा ब्रह्म वा ? पूर्वो ह्यपरोक्षतया श्रुतेः । 'रश्मिभि' रिति वाक्याद्धि सूर्यो देवोऽत्र वा मतः ॥९॥ सन्निधानप्रसिद्धेस्तु जीवो वाऽत्र च सम्मतः । अन्तरः परमात्मैव तत्रोक्तग्योपपत्तितः ॥१०॥

नि कर्मफलानि यस्मादिति संयद्वामः। एतं हि अक्षिगतं पुरुषमाश्रित्य सर्वाणि वामान्यभिसंयन्ति, उत्पद्यन्त इति स एव सर्वकर्मप्रवर्तकस्तत्फलो दयहेतुश्च। वामानि नयतीति। एष वामानि कल्याणानि नयति जनं प्रापयति एष एव भामनिः सर्वलोकप्रकाशकदीप्तिमद्विग्रहस्तदेवाह एष हि सर्वेषु लोकेषु भातीति श्रुत्यर्थः ॥ १३ ॥

## स्थानादिव्यपदेशाच्च । १।२।१४।

अक्ष्यन्तरः परमात्मैव। कुतः? स्थानादिव्यपदेशात् "यश्चक्षुषि तिष्ठ" न्नित्यादिना सर्वान्तरात्मनः सर्वकारणभूतस्य परस्य ब्रह्मणश्चक्षुःस्थानत्व-चक्षुरन्तरत्वचक्षुःशरीरत्वचक्षुर्नियन्तृत्वादीनां व्यपदेशात्। "य एषोक्षिणि पुरुषो दृश्यते" अत्रापि स एव प्रतीयते। यथा सर्वगतो वह्निर्विद्युदादि-रूपेण मेघादिषूपलभ्यते तथैव सर्वगोऽपि भगवान् स्वमहिम्ना स्वासाधा-रणशक्तिमत्तया चोपासककामपूर्णाय चक्षुरादिस्थानेषु दृश्यो भवतीति न काप्यनुपपत्तिः। अत एव दृश्यते त्वग्रया बुद्धयेति साक्षात्कारनिर्दे-शोऽपि भावनाप्रकर्षाद्भक्तैर्दृश्यमानत्वादुपपद्यते। अक्षिहृदयादिषु यथे-ष्टरूपेण भवनसामर्थ्यं चकारेण समुच्चीयते ॥ १४ ॥

## सुखविशिष्टाभिधानादेव च ।१।२।१५

इतश्चाक्ष्याधारः परमात्मा "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेतीति" सुख विशिष्टस्य प्रकृतस्यैव ब्रह्मणोऽक्ष्यन्तर्वर्तित्वेन संयद्वामत्वादिगुणवत्तया चोपास्यत्वेनाभिधानात्। हेतुनैरपेक्ष्यद्योतनार्थं एवकारः। ननु "अथैनं गार्हपत्योनुशशास" इत्यादिभिर्मध्येऽग्निविद्योपदेशात् कथमक्षिस्थानः पर-मात्मेति चेन्न। "तस्मै होचुः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति" (छा० ४। १०।४) "य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभय-मेतद्ब्रह्म" (छा० ४।१५।१) इत्युपक्रमोपसंहारयोः श्रूयमाणेन ब्रह्मशब्देन मध्य उपदिष्टाया अग्निविद्याया ब्रह्मविद्याङ्गत्वावगमात्। एवञ्चाङ्गत्वेऽ-वगते सति फलानुकीर्तनमर्थवाद इति निश्चीयते। "अपहते पापकृत्यां

लोकीभवति सर्वमायुरेति" (छा० ४।१६।२) इत्यादिश्रुत्यधिगतानां फलानामपि मोक्षाधिकृतस्यानुगुणत्वात् । नह्यत्र मोक्षविरोधि किञ्चिदपि फलं श्रूयते । तत्र पापशब्दस्य ब्रह्मविद्योत्पत्तिप्रतिबन्धकपापपरत्वं लोकशब्दस्य च ब्रह्मलोकप्राप्तिमार्गभूताग्निलोकपरत्वमवगन्तव्यम् । अत एव ब्रह्मविद्यामनुपदिश्य गतवति गुरावकर्षिर्माभूदिति स्वपरिचर्य्यया परं सन्तोषमुपगताश्चाग्नयोऽन्तेवासिनमुपकोशलमुपचिकीर्षवो ब्रह्मस्वरूपमात्रं तदङ्गभूतामग्निविद्याञ्चोपदिश्य, "आचार्याद्धैव विद्या विदिता साधिष्टं प्रापत्" (छा० ४।६।३) इति श्रुतेराचार्य एवास्मै संयद्वामत्वादिगुणकं ब्रह्म तदुपासनस्थानमर्चिरादिकां गतिञ्चोपदिशत्विति मनस्याकलय्य साधुतमत्वप्राप्तय "आचार्यस्तु ते गतिं वक्ता" (छा० ४।५।६) इत्यूचुरिति । ततश्चाचार्योऽपि "अहन्तु ते तद्वक्ष्यामि–यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते" (छा० ४।१४।३) इत्युपक्रम्य संयद्वामत्वादिगुणविशिष्टं ब्रह्माक्षिस्थानोपास्यमर्चिरादिगतिञ्चोपदिष्टवान् । तथा च "कं ब्रह्म खं ब्रह्म" (छा० ४।१०।५) इति सुखविशिष्टस्य प्रकृतस्य ब्रह्मणोऽत्राभिधानादक्ष्यन्तरः परमपुरुष एवेति ॥१५॥

ननु कं खमिति शब्दौ क्रमशो लौकिकसुखभूताकाशयोरर्थयोरेवाभिधायिनाविति कथं ताभ्यां निरवच्छिन्नसुखविशिष्टं ब्रह्मेति निश्चेतुं शक्यमित्याशङ्क्याह–

## अत एव च तद्ब्रह्म ।१।२।१६।

यतस्तत्र ब्रह्मजिज्ञासार्थं "विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खञ्च न विजानामि" (छा० ४।१०।५) इति पृच्छत उपकोशलाय "यद्वाव कं तदेव खं यदेव खं तदेव कम्" (छा० ४।१०।५।) इत्येवं परस्परवैशिष्ट्यप्रतिपादनेन कशब्दोक्तस्य सुखस्य खशब्दोक्ताकाशवदपरिच्छिन्नत्वमग्निभिरभिहितमिति निरवच्छिन्नसुखविशिष्टं यदक्ष्याधारतया स्थितं तद्ब्रह्मैव न चान्यद्वैषयिकं सुखं तस्य परिच्छिन्नत्वेन खशब्दबोधिते व्यापके वस्तुन्यन्वयासम्भवात् ॥१६॥

## श्रुतोपनिषत्कगत्यभिधानाच्च ।१।२।१७।

इतश्चाक्षिस्थानः पुरुषः परमात्मैव यस्माच्छ्रुतोपनिषत्कस्याधिगतपरमपुरुषविज्ञानस्य या गतिर्देवयानाख्याऽपुनरावृत्तिलक्षणा प्रसिद्धा श्रुतौ-"अथोत्तरेण तपसा ब्रह्मचर्येणेत्यारभ्य "एतस्मान्न पुनरावर्तन्ते" (प्र० १।१०) इति सैवेहाक्षिवर्त्तिनं ज्ञातवत उपकोशलायाधीयमाना दृश्यते । एवमेव "अर्चिषमेवाभिसम्भवन्ति" इत्यारभ्य "तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" (छा० ४।१५।५) इति गतिः श्रूयते । अतः परमात्मैवायमक्षिस्थ इति ॥१७॥

## अनवस्थितेरसम्भवाच्च नेतरः ।१।२।१८।

परमात्मन इतरश्छायात्मा देवतात्मा जीवात्मा वाक्षिस्थानो न भवितुमर्हति । कुतः । अनवस्थितेः । तेषां चक्षुषि नियमेनावस्थानासम्भवात् । प्रतिबिम्बात्मनस्तावत्पुरुषान्तरसन्निधानाधीनत्वान्न नियमेन स्थितिसम्भवः । देवतात्मनोऽपि "रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः ( बृ० ७।५।१०) इति रश्मिद्वारेणावस्थितिवचनाद्देशान्तरावस्थितस्यापीन्द्रियाधिष्ठानोपपत्तेर्न चक्षुष्यवस्थानत्वम् । तथैव जीवात्मनोऽपि सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिमत्त्वात्केवलं चक्षुषि नावस्थानम् । तदन्यतमेऽमृतत्वाभयत्वसंयद्वामत्वादिनिरुपाधिकगुणानामसम्भवाच्च । अक्ष्याधारपुरुषत्वेन परमात्मैवोपास्य इति सिद्धम् ॥१८॥

### * अथान्तर्याम्यधिकरणम् ॥५॥

एवमक्ष्यन्तरपुरुषश्रुतिसमन्वयं प्रदर्श्यान्तर्यामिश्रुतेरपि ब्रह्मपरत्वं दर्शयति ।

---

* अन्तर्यामिश्रुतावत्र जीवो वेद्योऽथवा मतः ? । द्रष्टृत्वादिश्रुतेर्जीव ईशस्तद्धर्मवर्णनात् ॥११॥

## अन्तर्यम्यधिदैवादिषु तद्धर्मव्यपदेशात् ।१।२।१६।

"य इमं च लोकं परञ्च लोकं सर्वाणि च भूतान्यन्तरो यमयति" ( बृ० ३।७।१ ) इत्युपक्रम्य "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः" ( बृ० ३।७।३ ) इत्यादि श्रूयते । 'यो विज्ञाने तिष्ठन्' (बृ० ३।७) इत्यस्य स्थाने "य आत्मनि तिष्ठन्" इति पर्यायो दृश्यते माध्यन्दिनानाम् । तत्र संशयः । किमेभिर्वाक्यैः समुपदिश्यमानः कश्चिदन्तरवस्थितो नियमनकर्तान्तर्यामी प्राप्ताणिमादिसिद्धिः कश्चिज्जीवविशेष उत परमात्मेति ? किं युक्तम् ? जीव इति । कुतः ? अन्तर्यामिपदघटितश्रुत्युपसंहारे "एष द्रष्टा श्रोता मन्ता विज्ञाता" इत्यन्तर्यामिणश्चक्षुरादीन्द्रियाधीनरूपादिज्ञानवत्त्वश्रुत्या तस्य जीवत्वावगमादित्येवं प्राप्त आह । अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशादिति ।

अत्र काण्वमाध्यन्दिनपाठयोरेकीकृत्याधिदैवादीत्यादि पदेन ग्रहणं सूत्रकारस्येष्टम् । तनश्चायमर्थो निष्पन्नः। अधिदैवादि पदान्वितेषु वाक्येषु श्रूयमाणोऽन्तर्यामी परमात्मैव भवितुमर्हति कुतः ? तद्धर्मव्यपदेशात् । तस्य परमात्मनो धर्मास्तद्धर्मास्तेषां सर्वान्तःस्थत्वसर्वाधारत्वसर्वशरीरत्वसर्वनियामकत्वसर्वात्मत्वसर्वान्तर्यामित्वामृतत्वादीनां परमात्मासाधारणधर्माणां तस्मिन्नेवोपपत्तेः । स एव चैकः सन् सर्वलोकसर्वभूतसर्वदेवादीन्नियमयतीति । तथा "य इमं च लोकं परञ्च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति" (बृ० ३।७।१) इत्युपक्रम्य तमन्तर्यामिणं ब्रूहीति उद्दालकेन पृष्ट आचार्यस्तस्योत्तरमाह "यः पृथिव्यां तिष्ठन्नित्यादि । तस्मादेतत्सर्वभूतसर्वदेवसर्ववेदादियज्ञान्तानां नियमनं सर्वशरीरतया सर्वात्मत्वञ्च सर्वशक्तेः पुरुषोत्तमादन्यस्य कस्यचिदपि न सम्भवति । तदन्ये हि शरीरेन्द्रियादीनि जडवस्तूनि नियमयन्ति तदप्यन्यदीयप्रेरणयैव । परमा-

त्मा तु सर्गादिकाले शुद्धं चेतनजातं प्रकृतिञ्च प्रेरयति। तस्मान्निरुपाधिकं स्वेच्छया प्रेरणमन्तर्यामित्वं परमेश्वरस्यासाधारणं धर्मान्तरमप्यस्मिन् वाक्ये व्यपदिष्टमिति मन्तव्यम्।

यत्तूक्तम् "द्रष्टा श्रोतेतीन्द्रियाधीनज्ञानस्य परमात्मन्यनुपपत्तेस्तस्य जीवत्वमवगमयतीति तन्न, "चक्षुपश्चक्षुरुतप्राणस्य प्राणः" इत्यादिना चक्षुरादिजन्यरूपादिज्ञानस्य परमात्माधीनत्वोपपत्तेः। परमात्मनस्तु द्रष्टृत्वश्रोतृत्वादिकं न चक्षुरादीन्द्रियाधीनम्। "पश्यत्यचक्षुः स शृणोत्यकर्णः" (श्वे० ३।१९) इत्यादिश्रुतेस्तस्य स्वाभाविकं द्रष्टृत्वादिकम्। कर्मतिरोहितस्वाभाविकज्ञानस्य जीवस्य रूपादिसाक्षात्कारश्चक्षुरादिकरणजन्या परस्य तु न तथा किन्तु स्वत एव। "यं पृथिवी न वेद" "यमात्मा न वेद" (बृ० ३।७।३।२२) इत्येवमादिभिर्वाक्यैः पृथिव्यात्मादिनियाम्यैरनुपलभ्यमान एव तान्नियमयतीत्युक्तम्। "अदृष्टो द्रष्टाश्रुतः श्रोता" (बृ० ३।७।२३) इत्येवं निगमय्य "नान्योऽतोऽस्तिद्रष्टा नान्योऽतोऽस्ति श्रोता" (बृ० ३।७।२३) इत्यादिनाऽस्य जगतो नियन्त्रन्तरं निषिध्यते। "एष त आत्मा" सत आत्मेत्यत्र च 'स त' इति व्यतिरेकविभक्तिनिर्दिष्टस्य जीवस्यात्मतयोपदिश्यमानोऽन्तर्यामी परमात्मैव न प्रत्यगात्मेति।

अत्रान्तर्यामिवाक्येषु सर्वेषु परस्य ब्रह्मणः सर्वान्तः स्थत्वसर्वशरीरित्वसर्वनियामकत्वमर्वान्तर्यामित्वश्रवणात्सर्वस्य चिदचिदात्मकप्रपञ्चस्य परमात्माधेयत्वशरीरत्वनियम्यत्वस्यार्थतः सिद्धे जीवाधीनस्वशरीरस्थितिप्रवृत्तिवत् सर्वस्य चराचरस्य जगतः परमात्माधीनस्वरूपस्थितिप्रवृत्त्युपपत्तेः श्रीरामाख्यस्य परब्रह्मणः सर्वनियन्तृतया सर्वस्वामित्वेन सर्वशेषित्वं तद्भिन्नस्य सर्वस्य तच्छेषत्वमुपपन्नतरम् ॥१९॥

## न च स्मार्तमतद्धर्माभिलापात् ।१।२।२०।

स्मार्तं सांख्यस्मृतिप्रतिपाद्यं प्रधानं न चान्तर्यामिपदवाच्यम्। कुतः। अतद्धर्माभिलापात्. तस्य धर्मस्तद्धर्मो न तद्धर्मोऽतद्धर्मश्चेतनधर्म इतिया

वत्। तस्याभिलापात् कथनादित्यर्थः। यद्यप्यदृश्यत्वादयोधर्माः प्रधानस्याप्युपपद्यन्ते रूपादिहीनतया तस्य तैरभ्युपगमात् सर्वविकारकारणत्वेन नियन्तृत्वमप्युपपद्यते। तथापि सर्वात्मत्वसर्वनियन्तृत्वसर्वद्रष्टृत्वामृतत्वादीनामचेतने तस्मिन्नसम्भवात्। परमात्मनस्तु स्वाभाविका एते धर्माः। "अदृष्टो द्रष्टाश्रुतः श्रोताविज्ञातो विज्ञाता" (बृ० ३।७।२३) इत्यादि वाक्येष्वभिलापात्स एवान्तर्यामिपदवाच्यः। ईक्षतेर्नाशब्दमित्यत्र निरस्तस्यापि प्रधानस्याद्रष्टृत्वादिधर्माणां सम्भवमाशंक्य पुनरत्र निरास इति बोध्यम् ॥२०॥

ननु मास्त्वचेतनं प्रधानमन्तर्यामिपदवाच्यं शारीरस्तर्हि त्वन्तर्यामी भवतु। तस्य च चेतनत्वाद्द्रष्टृत्वादिकमप्युपपद्यते। प्रत्यक्त्वाच्चात्मत्वमपि तस्य सिद्धमेवेत्युत्तरं पठति—

## शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ।१।२।२१

अत्र पूर्वसूत्रान्नेत्यनुवर्तते। शारीरः स्वकृतफलभोगायतने शरीरे प्रविष्टः प्रत्यगात्मा नान्तर्यामी सेद्धुमर्हति। सर्वात्मत्वसर्वनियन्तृत्वसर्वद्रष्टृत्वादीनामतद्धर्मत्वात्। हि यतः काण्वा माध्यन्दिनाश्चोभयेऽप्येनं शारीरमन्तर्यामिपरमात्मनः नियाम्यत्वेन वागादिभिरचेतनैः समं भेदेनाधीयते। "यो विज्ञाने तिष्ठन् विज्ञानादन्तरः" (बृ० ३।७।२२) इत्यादि काण्वाः। "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृत" (बृ० ३।७।२२) इति च माध्यन्दिनाः। तस्मादात्मपरमात्मनो नियम्यनियामकभेदेनाध्ययनादधिदैवादिषु श्रूयमाणोऽन्तर्यामी परमात्मैव न शारीर इति। प्रकृतश्रुत्योर्विज्ञानपदवाच्य आत्मपदाभिधेयश्च शारीर एवेति बोद्धव्यम्। तस्यैव विज्ञानमयत्वादिति ॥२१॥

## * अथादृश्यत्वादिगुणकाधिकरणम् ॥६॥

## अदृश्यत्वादिगुणको धर्मोक्तेः ।१।२।२२।

आथर्वणिकैराम्नायते-अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" (मु०।१।१।५।६) एवमग्रे-"अक्षरात्परतः परः" इति तत्र संशयः । किमदृश्यत्वादिगुणको जीवः प्रधानं वोत परमात्मेति ? तत्र पूर्वपक्षः । प्रधाने जीवे वादृश्यत्वादीनां सम्भवात् । प्रधानस्य भूतयोनित्वं निसर्गतोऽचेतनरूपस्य प्रपंचस्योत्पादनात्सिद्धम् । एवं स्वकृतेन कर्मणा नानाविधदेहधारित्वेन जीवस्यापि भूतयोनित्वात्तावेवात्र प्रतीयेते । प्रधानस्य तादृशभूतयोनित्वन्तु "यथोर्णनाभिः सृजते गृह्णते च" "यथा पृथिव्यामोषधयः सम्भवन्ति यथा सतः पुरुषात्केशलोमानि तथाक्षरात्सम्भवतीह विश्वम्".(मु० १।१।७) इत्यादिभिरचेतनानामेव दृष्टान्तत्वेनोपादानमपि द्रढयति । प्रकृतश्रुतावप्यद्रेश्यमिति पर्युदासाश्रयणेन स्थूलदृश्यभिन्नं सूक्ष्माख्यं तत्प्रधानमेव ज्ञायते । अतोऽस्मिन् प्रकरणे प्रधानपुरुषावेव प्रतिपाद्येते । इत्येवं प्राप्त आह । अदृश्यत्वादिगुणको धर्मोक्तेः । अदृश्यत्वादिगुणको भूतयोनिरक्षरः परमात्मैव । कुतः ? धर्मोक्तेः । "यः सर्वज्ञः स सर्ववित्" "यस्य ज्ञानमयं तपः" (मु० १।६) इति परमात्मासाधारणधर्माणां सर्वज्ञत्वादीनामत्र प्रकरणेऽभिहितत्वात् । ननु "यया तदक्षरमधिगम्यत" इत्यक्षरमभिधाय पुनश्चाक्षरात्परतः पर इत्यनेनाक्षरमवधित्वेन प्रकल्प्य ततोऽपि परतरः कश्चिदभिधीयते । यदि चात्र पूर्वेणाक्षरपदेन परमात्मा गृह्येत तर्हि त्वक्षरात्परतः पर इति कथं संगच्छेत स्वस्य स्वस्मात्परत्वासम्भवात् । तस्मदत्रा

---

* 'अथ परा यये'त्यत्र कोऽदृश्यत्वादिमान् भवेत् ? जीवोऽथवा प्रधानं वा परमात्माऽथ किं मतम् ॥१२॥ प्रधानपुरुषावेव ह्यदृश्यत्वादिसम्भवात् । सर्वज्ञतादिधर्माणामुक्त्या ब्रह्मात्र सम्मतम् ॥१३॥

क्षरपदेन प्रधानमेव ग्रहीतव्यम् जीवो वेति चेन्न । "अक्षरात्परतः पर" इति द्वितीयाक्षरशब्दस्य परमात्मपरत्वाभावात् । तथाहि । "द्वे विद्ये वेदितव्ये परा चैवापरा चेति" । तत्र ऋगादिलक्षणाया विद्याया अपरत्वमुक्त्वा "अथ परा यया तदक्षरमधिगम्यते" (मु० १।१।५) इति परस्या विद्यायाः कथने तद्विषयत्वेनाक्षरस्योक्तत्वात् । तद्यदि तत्र परमात्मनो भिन्नमन्यत्प्रकल्प्येत न सा परा विद्या स्यात् । अभ्युदयफलाहि ऋग्वेदादिलक्षणा विद्या । अपरा निःश्रेयसफला सैव ब्रह्मविद्येति भण्यते । अभ्युदयनिःश्रेयसफलत्वयैवैतयोः परापराख्यो विभागोऽभिमतः । तस्माद् "अक्षरात्परतः पर" इत्यत्र पञ्चम्यन्तोऽक्षरशब्दः प्रकृतमदृश्यत्वादिगुणकमक्षरं नाभिधत्तेऽपि तु भूतसूक्ष्ममचेतनं वक्तीति ॥२२॥

इतोऽपि न प्रधानजीवौ—

## विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ ।१।२।२३।

चकारः पूर्वोक्तसर्वज्ञत्वादिहेतुं समुच्चिनोति । इतरौ प्रधानजीवात्मानौ न भूतयोन्यक्षरशब्दवाच्यौ किन्तु परमपुरुष एव । कुतः ? विशेषणभेदव्यपदेशाभ्याम् । सर्वगतमिति विशेषणं प्रधानपुरुषाभ्यां भूतयोन्यक्षरं व्यावर्तयति । परतः पर इत्यादिना च भूतयोन्यक्षरस्य प्रधानपुरुषाभ्यां भेदो व्यपदिश्यते । उत्तरवाक्येऽपि—"दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः" मु० २।१।२। इत्यादिनाऽमनस्त्वान्तं विशेषणं भूतयोन्यक्षरस्य प्रधानपुरुषाभ्यां व्यावर्तयति भेदञ्च व्यपदिशति। अक्षरात्परतः पर इत्यस्यायमर्थः अक्षरं प्रधानं तस्मात् परतो जीवादपि पर इति परिणामिनित्यरूपाक्षरापेक्षया कूटस्थनित्यस्याक्षरस्य जीवस्य परत्वं तदपेक्षयापि लयशून्यस्याक्षरस्य ब्रह्मणः परत्वमुक्तमिति च । "जुष्टं यदा पश्यत्यन्यमीश" मित्यागामिवाक्येऽपि भेदव्यपदेशो दृश्यते ॥२३॥

प्रधानपुरुषयोरदृश्यत्वादिगुणराहित्ये हेत्वन्तरं दर्शयति

## रूपोपन्यासाच्च ।१।२।२४।

भूतयोनिरक्षरपदाभिहितः परमात्मैव नेतरौ । कुतः । रूपोपन्यासात् । अक्षरात्परतः पर इत्यस्यानन्तरं "एतस्माज्जायते प्राणः" इत्यादिना प्राणादिपृथिव्यन्ततत्त्वजातस्य सृष्टिमुक्त्वा तस्यैवाक्षरस्य सर्वविकारात्मकरूपोपन्यासो दृश्यते । "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" (मु० २।१।४) इति परमात्मन एव सर्वचेतनाचेतनात्मकः प्रपञ्चो रूपत्वेनोपन्यस्यते । सर्वविकारकारणत्वात्तनुमहिम्नः शारीरस्य प्रधानस्य चायं रूपोपन्यासो न घटते । तयोः सर्वभूतान्तरात्मत्वस्यासम्भवात् । अतः परमात्मैव भूतयोनिरक्षरो नेतराविति सिद्धम् ॥२४॥

❀ अथ वैश्वानराधिकरणम् ॥७॥

## वैश्वानरः साधारणशब्दविशेषात् । १ २।२५।

छान्दोग्ये इदमाम्नायते-"कोनु आत्मा ? किम्ब्रह्मेति । "आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येपि तमेव नो ब्रूहीति" ( छा० ५।११।६ ) "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" (छा० ५।१८।१) "तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपःप्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः" (छा० ५।१८।२) इत्यादि । तत्र संदिह्यते । किमिह वैश्वानरशब्देन जाठराग्निर्वा भूताग्निरथ तद्देवता किंवा जीव उत परमात्मेति ? किम्पुनरत्र संशयकारणम् ?

---

* 'इमं वैश्वानरं'वाक्ये कोऽर्थो वैश्वानरस्य हि । जाठराग्निरथो तेजो देवो जीवोऽथवा परः ॥१४॥ एषु सर्वेषु चार्थेषु प्रोक्तो वैश्वानरः श्रुतौ । तस्मात् सर्वे, न सर्वेश एवानन्यविशेषणात् ॥१५॥

यस्माद्वैश्वानरशब्दः सर्वेषु साधारणतया निर्दिश्यमानो दृश्यते जाठराग्नौ तावत् "अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नम्पच्यते यदिदमद्यते" (बृ० ७।९।९) इत्यादि। भूताग्नावपि "विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्" (ऋ० सं० १०।८८।१२) अग्निशरीरायामपि वैश्वानरशब्दः। "वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः (ऋ० सं० १।९८।१) एवं को न आत्मेत्यात्मशब्दवशेन जीवात्मन्यपि भोक्तृत्वेन वैश्वानरशब्दो व्याख्येयः। परमात्मनि च "तदात्मन्येव हृदयेऽग्नौ वैश्वानरे प्रास्यत्" (अष्टक ३ प्रश्न० ११ अनु० ८) इति प्रश्ने "स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते" (प्रश्न० १।७) इत्येवमादिवाक्योपक्रमादिषु समुपलभ्यमानानि लिङ्गानि सर्वानुगुण्येन व्याख्यातुं नेतुञ्च शक्यानीति प्राप्तेऽभिधीयते।

वैश्वानरः साधारणशब्दविशेषादिति। वैश्वानरः परमात्मा भवितुमर्हति। कुतः ? साधारणशब्दविशेषात्। विशेष्यत इति विशेषः। औदर्यभूताग्निदेवताजीवपरमात्मसु साधारणस्यापि वैश्वानरशब्दस्य परमात्मासाधारणैर्धर्मैर्विशेष्यमाणत्वात्। येन विशेषेण पर एव पुरुषो वैश्वानरशब्दस्य मुख्यार्थः स्यात्। स विशेषोऽत्र विद्यते। "एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः" इत्यादिविशेषावगमादित्यर्थः। "को न आत्मा किम्ब्रह्मेति" सर्वात्मभूतब्रह्मजिज्ञासायां प्रवर्तमानैरौपमन्यवादिमहर्षिभिर्वैश्वानरात्मज्ञमश्वपतिं कैकयम्प्राप्य जिज्ञास्यमानो वैश्वानरात्मा परमात्मैवेति निश्चेतुं शक्यम्। जाठरादेर्द्युप्रभृतिपृथिवीपर्यन्ता अवयवा नोपपद्यन्ते। तस्य सर्वात्मत्वाभावात्। किं ब्रह्मेति प्रक्रान्तस्य ब्रह्मशब्दस्य स्थाने उत्तरत्र सर्वत्र वैश्वानरशब्दस्य प्रयोगात्सोऽपि ब्रह्मैवाभिदधाति। "स सर्वेषु लोकेषु" इत्यारभ्य "एवं हास्य सर्वे पाप्मानः प्रदूयन्त" इति वक्ष्यमाणं वैश्वानरात्मविज्ञानफलमपि वैश्वानरात्मानं परमेव पुरुषं विबोधयति ॥२५॥

इतश्च वैश्वानरः परः पुरुष एव-

## स्मर्यमाणमनुमानं स्यादिति ।१।२।२६

वैश्वानरपदवाच्यः परमात्मैव । यतः परस्य ब्रह्मण एवा "ग्निरास्यं द्यौ मूर्धं" तीदृशं त्रैलोक्यात्मकं रूपं स्मर्यमाणं दृश्यते । श्रुतिस्मृतिषु परमात्मन ईदृशं रूपमुपवर्ण्यते तत्र तत्र । तथाहि-"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदय विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" ( मु० २।१।४ ) इति । तथा "यस्याग्निरास्यं द्यौर्मूर्धा ख नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः"-( भारते शा. प. रा. ध. ) "द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे । दिशश्श्रोत्रे विद्धि पादौ क्षितिञ्च सोऽचिन्त्यात्मा सर्वभूतप्रणेता" इत्यादिकाः श्रुतिस्मृतयः । एवञ्च द्युप्रभृतिपृथिव्यन्तमवयवविभागेन वैश्वानरस्य रूपं स्मर्यमाणं तदेवेदमिति प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वेऽनुमानं स्यात् । प्रयोगस्तु-वैश्वानरः परमात्मा भवितुमर्हति, अभिविमानत्वे सर्वज्ञत्वे सर्वात्मत्वे च सति स्मृत्युक्तत्रैलोक्यशरीरत्वादिति । इति शब्दः प्रकारार्थः । औपमन्यवप्रभृतिभिर्महर्षिभिः "आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि" (छा० ५।११।६) इत्येवं पृष्ट. केकयस्तेभ्यो वैश्वानरात्मानमुपदिदिक्षुर्विशेषप्रश्नानुपपत्त्या वैश्वानरात्मन्येतैः किञ्चिज्ज्ञात किञ्चिदज्ञातमिति विदित्वा तेषामज्ञातांशपूर्तिकामनया तानेकैकशः पृष्ट्वोपदिदेश । "औपमन्यव कन्त्वमात्मानमुपास्से" ( छा० ५।१८।१ ) स चाह "दिवमेव भगवो राजन्नि" ति । ततस्तस्य दिवि पूर्णवैश्वानरात्मबुद्धि निवर्तयन् 'दिवः मूर्तेजाः' इति नामधेयमुक्त्वा वैश्वानरांशत्वमसूसुचत् । एवं सत्ययज्ञादिभिरुपास्यमानत्वेनोक्तानामादित्यवाय्वाकाशोपृथिवीना "विश्वरूप, पृथग्वर्त्मा बहुलोरयिः प्रतिष्ठा" इत्येकैकगुणनामधेयानि वैश्वानरात्मनश्चक्षुः प्राणसन्देहवस्तिपादायवत्वञ्चोपदिष्टवान् । तस्मात्परमात्मन एव द्युमूर्धत्वादिविशिष्टस्य रूपस्योपपत्तौ वैश्वानरः स एवेति ॥२६॥

इत्थं परमात्मन एव वैश्वानरपदाभिधेयत्वम्प्रसाध्यापि स्थूणानिखननन्यायेन पुनराशङ्क्य समाधत्ते ।

**शब्दादिभ्योन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ।१।२।२७।**

वैश्वानरः परमात्मा न भवितुमर्हति । कस्मात् । शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च । शब्दस्तावद्वैश्वानरप्रकरणे "स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते" ( प्रश्न० १।७ ) इत्यग्निशब्दसामानाधिकरण्याद्वैश्वानरस्य कौक्षेयाग्निं बोधयति । सति शक्यार्थेऽथान्तिरकल्पनाया अन्याय्यत्वात् । किञ्चात्र प्रकरणे "हृदयं गार्हपत्यो मनोऽन्वाहार्यपचनः आस्यमाहवनीयः" (छा० ५।१८।२) इत्यग्नित्रयव्यपदेशः क्रियते । "तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहा" ( छा० ५।१९।१ ) इत्यादिना च प्राणाहुत्यधिकरणतोच्यते । एवमन्तःप्रतिष्ठत्वमपि वैश्वानरस्य वाजसनेयिनामग्निरहस्ये श्रूयते "स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद" इति । तथा चैवं विधेभ्यो हेतुभ्योऽन्तःप्रतिष्ठानाच्च न वैश्वानरः परमात्मा प्रत्येतव्य इति चेन्न, तथा दृष्ट्युपदेशात् । तथाभूतेऽर्थे परमात्मदृष्टेस्तद्रूपोपासनाया उपदेशात् । "यस्याग्निः शरीरम्" (बृ० ३।७।५) इत्यन्तर्यामिश्रुतेरग्निशरीरत्वेन परमात्मनो वैश्वानरस्योपासनोपदेशाग्निशब्दादिभिर्न केवलो जाठरः प्रतिपाद्यत अपितु जाठराग्निविशिष्टः परमात्मैव । कथमिदमवगम्यते इति चेदसम्भवात् । द्युमूर्धत्वादिधर्मस्य जाठरेऽसम्भवात् सर्वात्मकत्वात्तथात्वं परस्योपपद्यते । इति श्रेणोक्तशरीरतया प्रतिपन्नवैश्वानरसमानाधिकरणो जाठरविषयतया प्रतीयमानोऽग्निशब्दो जाठरशरीरं परमात्मानमेवाभिधत्ते । तथा चोक्तं भगवता-"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" ( गीता० १५। १४) इति । एवं "स एषोऽग्निर्वैश्वानरो यत्पुरुष" इत्यादिषु वाक्येषु न

केवलस्य जाठरानलस्य पुरुषत्वमुपपद्यतेऽपितु "सहस्रशीर्षा पुरुषः"(क० १।३।११ ) इत्यादिवाक्यतः परमात्मन एव निरुपाधिकं पुरुषत्वं सिद्धमिति ॥२७॥

ननु प्रदर्शितमन्त्रोक्तेर्भूताग्नौ तच्छरीरायां देवतायां वैश्वर्ययोगात् द्युमूर्धत्वादिकं सम्भवतीत्याशंक्याह-

## अत एव न देवताभूतञ्च ।१।२।२८

अत एवोक्तैरभिविमानत्वात्मत्वत्रैलोक्यशरीरत्वनिरुपाधिकपुरुषशब्दवाच्यत्वादिभिः परमात्माऽसाधारणलिङ्गैरत्यवैश्वानरशब्दस्य जाठरपरत्वबाधेन परमात्मपरत्वनिष्पत्तेरुक्तैरेव हेतुभिस्तस्य देवताभूतपरत्वबाधान्न देवता न वा भूततृतीयोऽत्र वैश्वानरशब्दबोध्यः। विकारभूतस्याग्नेर्विकारान्तरत्रैलोक्याद्यात्मकत्वासम्भवादग्न्यभिमानिदेवताया अपीश्वरायत्तैश्वर्यत्वेन तदसम्भवाच्च परमात्मैव वैश्वानर इति ॥२८॥

पूर्वं सामान्यशब्दविशेषादिहेतुतो वैश्वानरशब्दः परे ब्रह्मणि पवत इति दर्शितम्। इदानीं यौगिकोऽपि वैश्वानरशब्दो ब्रह्मण्येव वृत्तिमानिति तदर्थमाचार्यान्तरसम्मतिं दर्शयति-

## साक्षादप्यविरोधं जैमिनिः ।१।२।२६।

पूर्वमग्निशब्दस्य जाठरत्वमाशङ्क्य वैश्वानरशब्दसामानाधिकरण्यनिर्देशेन जाठराग्निशरीरत्वेन तद्विशिष्टस्य परमात्मन एवोपासनमुक्तम्। साम्प्रतमग्निशब्दस्य वैश्वानरशब्दवत्परमात्मपरत्वोपपत्तेः साक्षादव्यवधानेन परमात्मनो वाचकत्वे न कोऽपि विरोध इति जैमिनिराचार्यो मन्यते। अयमत्राशयः। यथा विश्वश्चासौ नरश्च सर्वात्मको विश्वेषां नरः नेता वा विश्वे नरा नियम्या यस्य सर्वनियन्ता, विश्वानरः "नरे संज्ञायाम्" ( पा० सू० ६।३।१२६ ) इति दीर्घः। विश्वानर एव वैश्वानरः स्वार्थिकोऽण् बोध्यः। तथा चैवमादिगुणयोगेन साधारणोऽपि वैश्वानरशब्दः

परमात्मानमेवाभिदधातीति निश्चियते । तथैव हृत्पद्मे ध्येयत्वेनाङ्गति गच्छत्याविर्भवतीत्यग्निः । "अङ्गेर्नलोपश्च" (उणादिसू० ४६६) इति निर्नलोपश्च । अथवाङ्गयति गमयति विश्वस्याग्रं जन्म प्रापयतीत्यग्निरभितोऽङ्गतीति वाग्निरित्यादिगुणयोगेन परमात्मधर्मविशेषितोऽग्निशब्दोपि निरुपाधिकगुणयोगेन परे च ब्रह्मणि काष्ठाङ्गत सन् तस्यैव वाचक इत्यग्निशरीरकत्वकल्पनां विनैव परमात्मानमभिधत्ते ॥२९॥

अथ परिच्छेदशून्यस्य ब्रह्मणो द्युप्रभृतिपृथिव्यन्तप्रदेशसम्बन्धिन्या मात्रया "यस्त्वेतमेव प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" (छा० ५।१८।१) इति परिच्छिन्नत्वं कथं घटतेऽत्राश्मरथ्याचार्यसम्मतिं दर्शयति ।

## अभिव्यक्तेरित्याश्मरथ्यः ।१।२।३०।

अभितः परितो विगतो मानः परिच्छेदो यस्येत्यभिविमानस्तमित्यपरिच्छिन्नस्यापि परस्य पुरुषस्य ब्रह्मणः प्रादेशमात्रत्वमङ्गुष्ठतर्जनीप्रस्तार परिमितत्वं सङ्गच्छते । कथमिति चेदभिव्यक्तेर्हेतोरनन्यगतिकानामुपासकानामनुग्रहार्थं नित्यानन्दाप्राकृतस्वरूपेण तेषां हृदि भावनानुसारेण स्तम्भे नृसिंह इवाभिव्यज्यते । इत्याश्मरथ्याचार्यो मन्यते । यद्वा स्थूलधियामुपासकानां स्थूलेष्वेव देशेषु द्यौर्मूर्धाऽदित्यश्चक्षुर्वायुः प्राण आकाशो मध्यकाय आपो बस्तिः पृथिवी पादाविति द्युलोकादिषु तद्बुद्ध्यनुसारेण सर्वगोऽपि मीयते । तत्र तत्राऽभिव्यज्यत इत्येवमभिव्यक्तेः प्रादेशमात्रत्वमपि तस्योपपद्यत इति ॥३०॥

## अनुस्मृतेर्बादरिः ।१।२।३१।

प्रादेशमात्रहृत्पुण्डरीकस्थेन मनसा वैश्वानरानुस्मृतेरुपासकध्यानानुसारेण प्रादेशप्रमाणाभिव्यक्त्या प्रादेशमात्रत्वमुच्यत इति बादरिराचार्यो मन्यते । यथा घटावच्छिन्नस्य व्योम्नो घटाकाशोक्तिस्तथा मूर्धादिपादा-

न्तदेहवल्पनञ्चापरिच्छिन्नस्य बोध्यम् । परमात्मप्राप्तयेऽनुस्मृतेरनुस्मरणार्थं तथोपासनार्थमिति बादरेराचार्यस्य मतम् ॥३१॥

एवं त्रैलोक्यशरीरस्य ब्रह्मणो वैश्वानरवाच्यत्वं सिद्धम् । पुनः उर एव वेदिर्लोमानि बर्हिरित्यादि किमर्थमुरःप्रभृतीनां वेदित्वादिपरिकल्पनमित्यर्थं जैमिनिसम्मतं दर्शयति ।

## सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति १।२।३२

वैश्वानरोपासकैः क्रियमाणाया वैश्वानरविद्याङ्गभूतप्राणाहुतेरग्निहोत्रत्वसम्पादनाय तेषां वेद्यादिपरिकल्पनमिति जैमिनिराचार्यो मन्यते । तथाहि–वैश्वानरोपासको मम मूर्धैव वैश्वानरस्य मूर्धास्ति मम चक्षुर्वैश्वानरस्य चक्षुरित्यादि ममोरो वैश्वानरो वेदिमंम मन एव तदन्वाहार्यपचनो ममास्यमेव वैश्वानराहवनीयमास्यं प्राणाद्याहुतय एवाग्निहोत्रमित्येवं स्वाङ्गेषु वैश्वानराङ्गानां सम्पत्तिं कृत्वा स्वाङ्गानि वैश्वानराङ्गानि मत्वाहरहः प्राणाद्याहुतिभिः स्वहृत्पुण्डरीकस्थं वैश्वानरं परमात्मानमुपासीत । तथाहि परमात्मोपासनोचितमेवफलं प्राणाहुत्याग्निहोत्रसम्पत्तिञ्च दर्शयतीय श्रुतिः । "स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात् । अथ य एतदेव विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति । तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" (छा० ५।२४।१।२।३) इति ॥३२॥

## आमनन्ति चैनमस्मिन् ।१।२।३३।

"स एषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैनमग्निर्वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदेति" वाजसनेयिनः । "आत्मनि हैवास्य तद्वैश्वानरे हुतं स्यादि" तिच्छन्दोगाः । एनं भगवन्तं द्युमूर्धत्वादिविशिष्टं वैश्वानरं पुरुषमस्मिन्नुपासकशरीरे समामनन्ति । "तस्य ह वा एतस्यात्मनो

वैश्वानरस्य मूर्धैव सुतेजाः" ( छा० ५।१८।२ ) इति श्रुत्युक्तोऽर्थः । चकारेण वैश्वानरमूर्धाद्यवयवानामुपासकमूर्धाद्यवयवेषु सम्पत्तिञ्च प्राणाद्याहुतिभिस्तदुपासनं तदुपासना फलञ्चामनन्ति । तथा चोपासकः स्वमूर्धादीनेव वैश्वानरस्य परमात्मनो द्युप्रभृतीन् मूर्धादीन् प्राणाग्निहोत्रसमयेऽनुसन्दधत्स्वस्योरः प्रभृतीनेव वैश्वानरस्य वेद्यादीन् परिकल्प्य प्राणाग्निहोत्रेण परमात्मानं वैश्वानरमाराधयेत् । "उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः" (छा० ५।१८।२) इति एवं त्रैलोक्यशरीरस्य भगवतो वैश्वानरस्योपासनं विधीयतेऽतः परमात्मैव पुरुषोत्तमः श्रीरामो वैश्वानर इति सिद्धम् ॥३३॥

इति श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये प्रथमाध्यायस्य द्वितीयः पादः ।



## श्रीमद्भगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये

# प्रथमाध्यायस्य तृतीयः पादः ।

### * अथ द्युभ्वाद्यधिकरणम् ॥१॥

एवमुपक्रान्त एव विषये रूढपदप्रधानानां वाक्यानां ब्रह्मणि श्रीरामे समन्वयं प्रदर्श्याधुना यौगिकपदप्रधानानां तेषां समन्वयमभिधातुं तृतीयपाद प्रारभ्यते ।

### द्युभ्वाद्यायतनं स्वशब्दात् ।१।३।१।

द्यौश्च भूश्च द्युभुवौ द्युभुवावादी येषां तेषामायतनमिति विग्रहः । आथर्वणे श्रूयते "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैः । तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः" (मु० २।२।५) अत्र द्युप्रभृतीनामोतत्वेनायतनत्वं कस्यचिदवगम्यते । तथा च तत्त्वेन श्रूयमाणो जीवः स्यादाहोस्वित्परमात्मेति संशयः । किं युक्तम् । जीव इति । कुतः ? "अप्राणो ह्यमनाः शुद्ध" इति परमात्मनो मनः प्राणादिनिषेधात् । जीवस्य च मनः प्राणादिमत्वसम्भवात् । किञ्च "अरा इव रथनाभौ संहता यत्र नाड्यस्स एषोऽन्तश्चरते बहुधा जायमानः" (मु० २।२।६) । इत्युत्तरवाक्ये यत्रेति सप्तम्यन्तेन पुनरभिधाय तस्यैव नाड्याधारत्वमादिश्य बहुधा जायमानत्वमुक्तम् ।

जीवस्यैवायं बहुधा जायमानत्वरूपो धर्मः सम्भवति । तस्माज्जीव

---

* 'यस्मिन् द्यौ' रिति वाक्ये च जीवो वाऽऽयतनं परः ? नाड्या च -जन्मना जीवो नेष्टस्तयोर्विवर्जनात् ॥१॥ परः स्वस्यैव शब्दाद् यच्चोक्ताऽस्यामृतसेतुना ।

एवात्राभिधीयते । तथा च द्युभ्वाद्यायतनत्वादिकमपि तत्रैव यथाकथञ्चित् समन्वयनीयमिति प्राप्ते ब्रूमः ।

द्युभ्वाद्यायतनं स्वशब्दादिति । द्युभ्वाद्यायतनं परमात्मा, कुतः । स्वशब्दात् । स्वस्य परब्रह्मणो वाचकोयमसाधारणशब्दस्तस्मात् । "तमेवैकं जानथात्मानम्"(मु० २।२।५) इतिश्रवणात् । "अमृतस्यैष सेतु"रिति ब्रह्मणोऽसाधारणशब्दलिङ्गात् । जीवस्यात्मशब्दवाच्यत्वेऽपि अमृतस्यैष सेतुरित्युत्तरवाक्यशेषेऽमृतप्रापकतया प्रसिद्धस्य गुणस्य तत्राऽसम्भवात् । यथा नदीतडागादिषु कूलस्य प्रापकत्वेन सेतोः सेतुत्वव्यपदेशस्तथात्रापि सेतुरिव सेतुः संसारसागरपारभूतस्यामृतपदबोध्यस्य प्रापकत्वेन परमात्मन एव तत्वम् । न च "अप्राणो ह्यमनाः" इति परमात्मनो मनःप्राणादीन् निषेधतीतिवाच्यम् । तद्वाक्यस्य मनः प्राणाधीनप्रवृत्तिरहितत्वमेव परमात्मन इत्यर्थकत्वात् ॥१॥

## मुक्तोपसृप्यव्यपदेशात् ।१।३।२।

इतश्च परमात्मा द्युभ्वाद्यायतनम् । मुक्तैरुपसृप्यं प्राप्यं मुक्तोपसृप्यं भावप्रधानो निर्देशः । मुक्तोपसृप्यत्वस्य व्यपदेशादित्यर्थः । "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" (मु० ३।१।३) पुण्यपापे विधूय नाम रूपाद्विमुक्तः । "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" (मु० ३।२।८) इति नामरूपाद्विमुक्तस्य परमपुरुषप्राप्तिश्रवणात् । तथा च श्रूयते "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" (मु० २।२।८) इति हृदयग्रन्थिमिथ्याज्ञानरागद्वेषशोकमोहादयः दृष्टे भगवति तद्रहितो भूत्वा छिन्नसर्वसंशयो विनष्टसर्वकर्मा भवतीत्यर्थः । पुण्यपापनिमित्तकाचित्सम्बन्धप्रयुक्तनामरूपभावत्वमेवास्य जीवस्य संसारः तथा च पुण्यपापविधूननद्वारा नामरूपविमुक्तस्य नास्ति

संसारः । तस्मान्मुक्तोपसृप्यत्वाद् द्युभ्वाद्यायतनं परम्ब्रह्मैव ॥२॥

## नानुमानमतच्छब्दात् १।३।३।

अनुमीयत इत्यनुमानमनुमेयं प्रधानं न द्युभ्वाद्यायतनम् । कुतः । अतच्छब्दात् । न तस्य प्रधानस्य वाचकः शब्दोऽस्ति तस्मात्प्रधानवाचकशब्दाश्रवणादित्यर्थः ।

यद्यप्यात्मशब्दो जीवपरमात्मोभयसाधारणः प्रधानेऽपि च यथाकथञ्चिद् योजयितुं शक्यस्तथाऽपि "तमेवैकं जानथ आत्मानमन्यावाचो विमुञ्चथ" (मु० २।२।५) इति वाग्विमोकपूर्वकमात्मनो विज्ञेयत्वश्रवणात् परमात्मन एवात्मपदग्राह्यत्वम् । तदतिरिक्तविज्ञेयत्वस्यानधिक प्रयोजनकत्वात् । एवञ्चैतत्समानार्थाभिधायिन्या "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहूञ्छब्दान् वाचो विग्लापनं हि तत् । (बृ० ४।४।२१) इत्यस्याः श्रुतेरपि सङ्गतिः । परमात्मन एव याथात्म्यावगमोत्तरकालिकध्रुवानुस्मृतिपदवाच्यप्रज्ञाविषयत्वं न जीवस्येति । तस्माद् द्युभ्वाद्यायतनं परमात्मैव ॥३॥

## प्राणभृच्च ।१।३।४।

पूर्वसूत्रान्नेति पदमतच्छब्दादिति पदञ्चानुवर्त्तते । यथा प्रधानाभिधायकशब्दाभावात्प्रधानं नास्मिन्प्रकरणे प्रतिपाद्यते तथा प्राणभृदपि तत एव हेतोर्न प्रतिपाद्यते । सर्वदाणुस्वरूपस्य प्राणभृतो द्युपृथिव्याद्यायतनत्वाऽसम्भवाच्च । उत्तरसूत्रसौकर्यार्थं पृथग्योगकरणम् ॥४॥

## भेदव्यपदेशात् ।१।३।५।

यत्र प्रकरणे "तमेवैकं जानथात्मानम्', (मु० २।२।५) इति जीवानां ज्ञातृत्वेन, तमेवैकमात्मानमिति च परमात्मनो ज्ञेयत्वेन तयोर्भेदस्य व्यपदेशात् । एवं तत्रैव "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" (मु० २।३।२)

इत्युक्तम् । अस्य महिमानं महत्वं सर्वव्यापकत्वं सर्वजगन्नियन्तृत्वरूपं सर्वात्मकत्वं यदा जानाति तदा वीतशोको भवतीत्यर्थः । एवञ्चात्र सेव्यसेवकभावेन भेदव्यपदेशाद् द्यु्भ्वाद्यायतनं परमात्मैव ॥५॥

## प्रकरणात् ।१।३।६।

प्रकरणं चेदं परमात्मनोयतः "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातम्" (मु० १।१।३) इत्युपक्रम्य प्रतिपिपादयिषितस्यैकविज्ञानेन सर्वविज्ञानस्याखिलजगत्कारणात्परमात्मनोऽतिरिक्तेऽसम्भवात्तस्यैव द्यु्भ्वाद्यायतनत्वमिति ॥६॥

## स्थित्यदनाभ्याञ्च ।१ ३ ७।

न जीवो द्यु्भ्वाद्यायतनत्वेन ग्रहीतुं शक्यः । कुतः । स्थित्यदनाभ्यामिति । "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" ( मु० ३।१।१ ) इति मन्त्रे जीवस्य कर्मफलात्तृत्वं तदन्यस्य परमात्मनोऽनश्नतोऽपि स्वयंप्रकाशस्वरूपेणावस्थितेः श्रवणात् कर्मपरवशस्य जीवस्यानादिबद्धस्यामृतप्रापकत्वानुपपत्तेः । मुक्तजीवस्यापि तदश्रवणाच्च । कर्मपरतन्त्रत्वाभाववतः परमात्मनस्त्वमृतसेतुत्वस्यानेकश्रुतिसम्मतत्वाद्द्यु्भ्वाद्यायतनं परमात्मैव न प्राणभृदिति सिद्धम् ॥७॥

### * अथ भूमाधिकरणम् ॥२॥

## भूमा सम्प्रसादादध्युपदेशात् ।१।३।८।

छान्दोग्ये श्रूयते "यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं

---

* 'यो वै भूमे'तिवाक्ये च भूमशब्देन को मतः ॥२॥ प्राणी कश्चिदथो ब्रह्म ? प्राणी प्राणोपदेशतः । भूमा तु परमात्मैव जीवादध्युपदेशतः ॥३॥

भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति" (छा० ७।२३।१) इति। तथा "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा। अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्" (छा० ७।२४।१) एतद्वाक्यमस्य विषयः। तत्र भूमशब्दस्य धर्मिपरत्वमेवास्थेयम्। तथाहि–"पृथ्वादिभ्य इमनिज्वा" (पा० सू० ५।१।१२२) इति पाणिनीयानुशासनेन पृथ्वादिगणान्तःपातिनो बहुशब्दादिमनिचि "बहोर्लोपो भू च बहोः" (पा० सू० ६।४।१५८) इति प्रकृतिप्रत्ययविकारे च तन्निष्पत्तेः। एवञ्चात्र भूमपदप्रवृत्तिनिमित्तं वैपुल्यमेव न तु संख्यादिकम्। कुतः। अल्पस्य तत्प्रतियोगित्वेनोपादानात्। अत एव च धर्मिपरोऽपि भूमशब्दः सिद्धयति। तच्च वैपुल्यं सर्वोत्कृष्टगुणवत्त्वम्, न तु परिमाणादिरूपमिति। तत्रायं सन्देहः। किमयं भूमशब्दावगतः प्राणादिविशिष्टः कश्चित् परमात्मा वेति? तत्र परमात्मव्यतिरिक्तः प्राणादिविशिष्टः कश्चिदिति पूर्वः पक्षः। कुतः। प्राणो वा आशाया भूयानिति पूर्ववाक्ये प्राणस्यैव निर्दिष्टत्वात्। अत्र हि भगवता सनत्कुमारेण नामादिप्राणपर्यन्तान्युपास्यतया तत्त्वान्युपदिष्टानि। तत्र प्राचीनेषु वाक्येषु "अस्ति भगवो नाम्नो भूय" इत्यादि नारदप्रश्नानन्तरं "वाग्वाव नाम्नो भूयसी" इत्यादिकं प्रतिवचनमुपलभ्यते। इयञ्च प्रश्नप्रतिवचनपरम्परा प्राणपर्यन्तैव समुपलभ्यते। प्राणोपदेशानन्तरं तस्या अभावात् प्राण एव भूमापदवाच्य इति शक्यतेऽवगन्तुम्। अत्र प्राणशब्देन प्राणसहायो जीवात्माभिधीयते न वायुविशेषमात्रम्। "प्राणो ह पिता प्राणो ह माता" (छा० ७।१५।१) इत्यादिवचनैस्तस्य चेतनत्वावगमात्। अत एव नारदप्रश्नस्याचार्यकृतोत्तरस्य च सामञ्जस्यम्। तथा च प्राणज्ञापनानन्तर "अस्ति भगवः प्राणाद्भूय"इति प्रश्नस्याभावात्स एव भूमेति प्राप्तेऽभिधीयते। भूमा सम्प्रसादादध्युपदेशादिति। भूमा परमात्मैव न प्राणादिविशिष्टो जीवात्मा। कुतः? सम्प्रसादादध्युपदेशात्। सम्यक् प्रसादो यस्येति व्युत्पत्त्या सम्प्रसादो जीव उच्यते। "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योति-

रूपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" (छा० ८।१२।३) इति श्रुतौ सम्प्रसादशब्दस्य प्रत्यगात्मपरत्वप्रसिद्धेः। तस्मात्प्राणशब्दबोधितात्सम्प्रसादादध्यूर्ध्वं भूमगुणविशिष्टस्य सत्यशब्दाभिहितस्योपदेशादिति। "यः सत्येनातिवदती" ति सत्यशब्दाभिधेयं ब्रह्मैव भवति "सत्यं ज्ञानमनन्तं ब्रह्म" (तै० २।१।१) इति श्रुतेः। अयमभिप्रायः। अस्मिन्प्रकरणे नामाद्याशापर्यन्तानामचेतनानानामुत्तरोत्तरपुरुषार्थभूयस्त्वेनोपदिष्टानामुपासकस्य नातिवादित्वमुक्तम्। प्राणशब्दाभिहितप्रत्यगात्मयाथात्म्यज्ञानवतस्तु पुरुषार्थभूयस्त्वमिति मन्यमानेन "प्राणो ह्येवैतानि भवति" स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति" (छा० ७।१५।४) इत्यतिवादित्वमुक्तम्। अतिवादित्वञ्चोपास्यत्वेनोक्तान्नामादीनतिक्रम्य स्वोपास्यमतिशयेन वदतीत्यर्थकम्। एवं प्रत्यगात्मोपासकस्यातिवादित्वमुक्त्वा तस्यापि सातिशयपुरुषार्थत्वान्निरतिशयपुरुषार्थत्वेनोपास्यभूतब्रह्माधिकवादिन एव यथार्थाभिधायित्वेनातिवादित्वम्। "एष तु वा अतिवदति यः सत्येनातिवदति" (छा० ७।१६।१) इत्युक्तम्। अत्र तुशब्देन पूर्वस्मादतिवादिनः परब्रह्मवादिनो भिन्नत्वमभिधाय वैशब्देनास्य सत्यवदिनो यथार्थवादित्वमुक्तम्।

अत एव "सोऽहं भगवः सत्येनातिवदानी" ति नारदेन प्रार्थितः सनत्कुमार "सत्यं त्वेव विजिज्ञासितव्य" मित्याह। पुनः "सत्यं भगवो विजिज्ञास" इति नारदेन प्रार्थिते ब्रह्मसाक्षात्कारोपायभूतं ब्रह्मोपासनपर्यायभूतं ब्रह्मविज्ञानं "यदा वै विजानात्यथ सत्यं वदति विज्ञानन्त्वेव विजिज्ञासितव्य" मित्युपदिश्य विज्ञानोपायभूतं मननं "यदा वै मनुतेऽथ विजानाति मतिस्त्वेव विजिज्ञासितव्ये" त्युपदिश्यानन्तरं वस्तुश्रवणं विना तन्मननस्यानुपपत्तेः श्रवणस्याप्यर्थसिद्धत्वाच्छ्रवणोपायभूतां ब्रह्मश्रद्धां "यदा वै श्रद्दधात्यथ मनुते श्रद्धात्वेव विजिज्ञासितव्ये" त्युपदिश्य तदुपायभूतां तन्निष्ठां "यदा वै निस्तिष्ठत्यथ श्रद्दधाति निष्ठात्वेव विजिज्ञासितव्ये" त्यवबोध्य तदुपायभूतामिन्द्रियसंयमादिप्रयत्नरूपां कृतिं "यदा वै करोत्यथ

निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्ये" ति विनिर्दिश्य प्राप्यस्य सत्यशब्दोक्तस्य ब्रह्मणः सुखात्मकता ज्ञातव्येति सुखं त्वेव विजिज्ञासितव्यमित्युपदिश्यानन्तरं "सुखं भगवो विजिज्ञास" इति जिज्ञासासमनन्तरमाहाचार्यो "यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमात्वेव विजिज्ञासितव्यम्" (छा ७।२३।१) इति। ततो "भूमानं भगवो विजिज्ञास" इति नारदप्रार्थनया "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्" इत्युपदिदेश। अनन्तरं तस्याप्याधारः कश्चिदन्यः स्यादित्याकाङ्क्षायामाह स भगवः कस्मिन् प्रतिष्ठित इति। तत्समाधानञ्चाचार्येण "स्वे महिम्नि यदि वा न महिम्नीति" (छा० ७।२४।१) इत्यादिकं कृतम्। अतोऽल्पे परिच्छिन्ने सुखं नास्ति। अपि तु तत्प्रतियोग्यनल्पेऽपरिच्छिन्ने भूमपदवाच्य एव सुखम्। अत एव स एव सुखमिति भूमा परमात्मैव ॥ ८ ॥

## धर्मोपपत्तेश्च १।३।९।

भूमपदाभिधेयस्यात्र प्रकरणे ये धर्माः समाम्नायन्ते ते सर्वेऽपि परस्मिन्नेव ब्रह्मण्युपपद्यन्ते। स्वाभाविकामृतत्वस्वमहिम्निप्रतिष्ठितत्वदशदिग्व्यापकत्वसर्वात्मकत्वादयो धर्माः परमात्मन्येवानन्यसाधारणतयोपपन्ना भवन्तीति परमात्मैव भूमेति सिद्धम् ॥ ९ ॥

### * अथाक्षराधिकरणम् ॥३॥

## अक्षरमम्बरान्तधृतेः ।१।३।१०।

बृहदारण्यके श्रूयते-"कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति।

---

* 'अक्षरं गार्गि' वाक्येऽत्र वाच्यो को वाऽक्षरस्य हि। प्रधानमुत जीवो वा परमात्माऽथवा ननु ॥४॥ आकाशाधारतत्त्वाद्यो जीवो वा तस्य तत्स्मृतेः। अम्बरान्तधृतेर्ब्रह्म सा च तस्य प्रशासनात् ॥५॥

सहोवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घम-लोहितमस्नेहम्" (बृ० ५।८।८) इत्यादि। तत्र संशयः। किमत्राक्षरशब्द निर्दिष्टमक्षरात्परतः पर" इति श्रुत्युक्तं प्रधानमुत "क्षर प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः" (श्वे० १।१०) इति श्रुत्युक्तो जीव आहोस्वित् "यया तदक्षरमधिगम्यते" (मु० १।१।५) इत्यभिहितः परमात्मा? किं युक्तम्? प्रधानस्य सर्वविकारकारणत्वात्तदेव प्रतीयते। प्रकृतश्रुतौ च "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे"त्यादि गार्गीप्रश्नस्याकाशकारणं किमित्यभिप्रायस्तदुत्तरतयोपरिष्टादुक्तम् तथा चाकाशादीनामाधारतयाक्षरपदवाच्यप्रधानस्यैव सर्वत्र निर्दिष्टत्वात्तदेवेहाभिधीयते। अथवा "अपरेऽयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूतां महाबाहो ययेदं धार्यते जगत्" (गी० ७।५) इति जीवस्यापि जगदाधारत्वकथनाज्जीवः। इति प्राप्तेऽभिधीयते-अक्षरमम्बरान्तधृतेरिति। अक्षरं परम्ब्रह्मैव। कुतः। अम्बरान्तधृतेः। अम्बरस्य गगनस्यान्तः समाप्तिर्यत्र तदम्बरान्तमव्याकृतमम्बरस्य कारणम्। "तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत" (बृ० १।४।६) इति श्रुतेः। प्रथममव्याकृतं भूतसूक्ष्ममासीत्तस्यैवाकाशादिनामरूपाभ्यां व्याकरणानन्तरं सर्वमिदं नामरूपात्मकमाकाशादिकं जगदभवत्तेनाकाशस्य कारणमव्याकृतम्। कार्याणां स्वकारणे समाप्तेर्लयस्य श्रवणादन्तशब्दस्य समाप्त्यर्थकत्वेनोक्तार्थस्योपपत्तिः। त्रैलोक्यान्तर्वर्तिनो द्युपृथिव्यादिविकारजातस्याधारतया निर्दिष्टस्याकाशस्य भूताकाशत्वानुपपत्तेश्च। यतस्तस्यापि विकारान्तर्गतत्वेन सर्वविकाराधारत्वाऽसम्भवात्। तस्मादम्बरान्तपदनिर्दिष्टमव्याकृतं तस्य धृतेर्धारणात्तदाधारत्वादित्यर्थः। तस्मादम्बरान्तस्याव्याकृतस्याधारत्वादक्षरं ब्रह्मैव न प्रधानमिति ॥१०॥

अथापि "यस्याऽव्यक्तं शरीरम्" यस्याक्षरं शरीरम् "क्षर प्रधानममृताक्षरं हरः" (श्वे० १।१०) "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" [ गी० १५।१६ ) "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः"

( गी० १५।१८ ) इत्येवमादिश्रुतिस्मृत्युक्तोऽक्षरशब्दवाच्यो जीवोऽस्तु । तस्य च "ययेदं धार्यते जग" दिति जगदाधारत्वस्मरणात्तस्यैवास्थूलत्वादिधर्मकत्वोपपत्तेश्चेत्याशंकायामाह-

## सा च प्रशासनात् ।१।३।११।

सा चाम्बरान्तधृतिरस्याक्षरशब्दबोध्यस्य परमात्मनः प्रशासनादेव सम्पद्यते । "एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" (बृ० ३।८।६) इत्याद्यक्षरस्य प्रशासनवैभवमाविष्कुर्वन्त्यः श्रुतयः परमात्मानमेवाक्षरपदाभिधेयत्वं द्रढयन्ति । प्रकृष्टत्वञ्चात्र शासनेऽप्रतिहताज्ञत्वरूपम् तथा चाक्षरस्याबाधिताज्ञायां सूर्यचन्द्रमोद्युपृथिवीनिमेषमुहूर्ताहोरात्रार्धमासर्तुसंवत्सरादीनां विधृततया स्थितेः श्रवणादस्य स्वाधीनशासनस्य चिदचित्सर्ववस्तुविधारणस्य प्रत्यगात्मन्यसम्भवात् । प्रधानस्य त्वचेतनस्यासम्भवपराहतत्वात्प्रशासनस्येति परिशेषात्तस्य परमात्मधर्मत्वमेवेति तदेवाक्षरपदवाच्यम् ॥११॥

इतश्च ब्रह्मैवाक्षरम्-

## अन्यभावव्यावृत्तेश्च ।१।३।१२।

अन्ययोः प्रधानजीवयोर्भावो धर्मोऽन्यभावस्तस्य व्यावृत्तेः । तद्व्यावर्तकानां केवलपरमात्मधर्माणां वाक्यशेषे श्रवणात् । "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" (बृ० ३।८।११) अत्र हि दृष्टत्वादिरूपैश्चेतनधर्मत्वेनप्रधानभावस्य व्यावर्तनात् । एवं सर्वैरदृष्टत्वाद्यात्मकैः सर्वद्रष्टृत्वात्मकैश्च परमात्मासाधारणधर्मैर्जीवभावस्य व्यावृत्तेः । किञ्च "एतस्य वाक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वी पितरोऽन्वायत्ताः" (बृ० ३।८।६) इति यस्य प्रशासनेऽन्वायत्ता यदा-

ज्ञया श्रौतं स्मार्तञ्च यागदानहोत्रादिकं कुर्वन्ति तदक्षरं परम्ब्रह्मैव। अत एव "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः, अथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः" (बृ० ३।८।१०) इतीयं श्रुतिर्यदज्ञानात्कार्पण्यं, यज्ज्ञानाच्च ब्राह्मण्यं स्वयमेवाभिदधाति तदक्षरपदवाच्यः परमपुरुषः परमात्मैवेति सिद्धम् ॥१२॥

## * अथेक्षतिकर्माधिकरणम् ॥४॥

## ईक्षतिकर्मव्यपदेशात्सः ।१।३।१३।

अथर्वणे सत्यकामप्रश्ने श्रूयते—"यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परमपुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः। यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तस्य सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" (प्र० ५।५) अत्र च पुरुषेक्षणरूपं फलमभिध्यानञ्च फलीति फलफलिनोरीक्षणध्यानयोरेकविषयत्वनियतत्वाद् ध्यात्रा यो ध्येयः स एवेक्षणीय इति ध्यानेक्षणविषयतया ज्ञायमानो योऽर्थः स एवेक्षणीय इति निश्चिते सति संशयः। किमत्र पुरुषपदवाच्यः प्रत्यगात्मा समष्टिपुरुषाभिमानी चतुर्मुख आहोस्वित्सर्वेश्वरः श्रीरामाख्यः परमात्मेति। किं युक्तम् ? समष्टिपुरुषश्चतुर्मुखः। कुतः ? तद्विदः सातिशयलक्षणफलस्यात्रोच्यमानत्वात्। तथाहि—"स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोंकारमभिध्यायीत कतमं वाव स तेन लोकं जयति" (प्र० ५।१) इति प्रकृत्यैकमात्रप्रणवोपासकस्य मनुष्यलोकप्राप्तिरूपं फलं द्विमात्रप्रणवोपासकस्य चान्तरीक्षलोकप्राप्तिफलमभिधाय "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः"

---

* 'त्रिमात्रेणोमि'ति श्रौते वाक्ये कः पुरुषो मतः। ब्रह्मा वा ब्रह्म वा ? ब्रह्मा लोकत्रयक्रमाद् मतः ॥६॥ परामृताजरत्वादेर्व्यपदेशात् परो हि सः।

(प्र० ५।५।) इति त्रिमात्रप्रणवोपासकस्य प्राप्यत्वेनोच्यमानो ब्रह्मलोकस्तत्र च ध्यानेक्षणविषयो जीवसमष्टयभिमानी चतुर्मुख एव स्यात्। तस्यैव तल्लोकाध्यक्षतया स्थितत्वादिति प्राप्तेऽभिधीयते। ईक्षतिकर्मव्यपदेशात्स इति। प्रकृतश्रुतावीक्षतिकर्मेक्षणविषयः सः परमात्मैव। कुतः? व्यपदेशात्। ईक्षतिकर्मतयात्र व्यपदिश्यत एव परमात्मा। तदेवं प्रकृतमन्त्रे "तमोंकारेणैवायतनेनान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परञ्च" (प्र० ५।७) इति प्रदर्शितं शान्तमजरत्वादिरूपं परमात्मन एव सम्भवति। एवं "एतस्माज्जीवघनात्परात्परम्" इति परात्परत्वव्यपदेशः परमात्मन एव नान्यस्य चतुर्मुखादेः। यतस्तस्यापि जीवघनशब्दग्राह्यत्वात्। यः कर्मनिमित्तदेहवान् स जीवघनः श्रूयते चतुर्मुखस्यापि कर्मनिमित्तकं जन्मादिकम्। "हिरण्यगर्भं जनयामास पूर्वम्" "यो ब्रह्माणं विदधाति पूर्वम्" (श्वे० ६।१८) इत्यादिवचनैः। तथा "ते ब्रह्मलोके तु परान्तकाले परामृताः परिमुच्यन्ति सर्वे" (मु० ३।२।६) इतिश्रुतौ "ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" इति स्मृतौ च परान्तकाल इति परस्यान्त इति च ब्रह्मणो मृत्युश्रवणाज्जन्ममृत्युमत्वेन च तस्य जीवत्वोपपत्त्या सर्वपापविनिर्मुक्तजीवप्राप्यत्वाजरामृतत्वादिधर्मकत्वानुपपत्तेः। परमात्मन एव तादृशधर्मकत्वोपपत्त्या वीक्षतिकर्मभूतः परमपुरुषः परमात्मैवेति सिद्धम् ॥१३॥

### * अथ दहराधिकरणम् ॥५॥

## दहर उत्तरेभ्यः ।१।३।१४।

छान्दोग्ये भूमविद्यानन्तरं श्रूयते—"अथ यदिदमस्मिन्ब्रह्मपुरे दहरं

---

* 'दहरोऽस्मिन्नि'ति श्रौते वाक्ये को दहरो मतः ॥७॥ भूताकाशोऽथवाजीवः सर्वेशो वाऽत्र किं वरम्? प्रसिद्धेः प्रचुरत्वाद्धि भूताकाशोऽवगम्यते ॥८॥ हृदयस्थोऽतिसूक्ष्मश्च जीवो वा दहरो मतः। उत्तरेभ्यस्तु हेतुभ्यः सर्वेशो दहरः खलु ॥९॥

पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम् । (छा० ८।१।१) अथ संशयः । अत्र दहरे हृत्पुण्डरीके यो दहराकाशः श्रूयते स किं भूताकाशोऽथवा प्रत्यगात्मा ? आहोस्वित्पर-मात्मेति । किं युक्तम् ? भूताकाश इति । कुतः ? आकाशपदस्य भूता-काशे प्रसिद्धिप्राचुर्यात् । "तस्मिन्यदन्तरि" त्याधारत्वप्रतीतेश्च । अथवा ब्रह्मपुरशब्देनाभिहितस्य देहस्य स्वामी जीवो हृदयनिवासी स्याद्दहराका-शपदवाच्यस्तस्यापि सूक्ष्मत्वादिति प्राप्त आह–दहर उत्तरेभ्य इति । दह-राकाशः परमात्मैव भवितुमर्हति । कुतः ? उत्तरेभ्यो वाक्यशेषगतेभ्यो हेतुभ्यः । तथाहि–"अथ यदिदमस्मिन्नि" ति वाक्यस्यायमर्थः । विद्यान्त-रारम्भार्थोऽयमथशब्दः अस्मिन्प्रत्यक्षे ब्रह्मपुरे ब्रह्मनिवासस्थाने तत्प्राप्ति-साधनीभूत उपासकशरीरे यदिदं दहरं सूक्ष्मं पुण्डरीकं पुण्डरीकाकारमल्प-परिमाणं हृदयं परब्रह्मवेश्मभूतं दहरः सूक्ष्मोऽस्मिन् हृद्यन्तराकाशः सूक्ष्मा-काशः परमात्मा सदा तिष्ठतीत्यर्थः । "स वा एष आत्मा हृदि तस्यैत-देव निरुक्तं हृदयमि"तित्यग्रे परमात्मनो हृत्स्थत्वश्रवणात् । तस्मिन्परमा-त्मनि यदन्तस्तदन्तर्वर्त्यात्मत्वापहतपाप्मत्वसत्यकामत्वसत्यसंकल्पत्वा-दिकं स्वाभाविकानवधिकापरिमितमङ्गलगुणजातं तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमेतद्गुणसहितं परं ब्रह्म विचार्य्यं ज्ञानविषयीकर्तव्यञ्चे-त्यर्थः । दहराकाशशब्दवाच्यः परमात्मा तदन्तर्वर्तिनोऽपहतपाप्मत्वाद यस्तद्गुणा इति कुतोऽवगम्यत इति चेत् "स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनाऽस्य हन्यत एतत्सत्य ब्रह्मपुरम्" "अस्मिन् कामाः समाहिताः" (छा० ८।१।४) इत्याकाशशब्दाभिहितस्य ब्रह्मणोऽन्तर्वर्तिनोऽन्वेष्टव्यान् कामान्निर्दिश्य कोऽयं ? दहराकाशशब्दोक्तः के च ? तदन्तर्वर्तिनः कामा इत्यपेक्षायां "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽ पिपासः सत्यकामः सत्यसंकल्पः" (छा० ८।१।५) इत्युत्तरं वाक्यमाकाश-शब्दाभिहितः परमात्मा तदन्तर्वर्तिनोऽपहतपाप्मत्वादयो गुणा इति ज्ञाप-यति । किञ्च "तद्य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां

सर्वेषु लोकेष्वकामचारो भवत्यथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति" (छा० ८।१।६) इत्युत्तरं वाक्यं स्वेच्छया सञ्चरणं स्वेप्सितसर्वभोगप्राप्तिं दर्शयदात्मनश्च-कारेण सत्यकामानाञ्चोपास्यत्वं ज्ञापयति । तस्मात्स्वशरीरान्तर्वर्तिहृत्पु-ण्डरीकान्तःस्थं ब्रह्मापहतपाप्मत्वादिगुणविशिष्टमन्वेष्टव्यमिति स्पष्टम् ।

एवञ्चात्र तदन्वेष्टव्यमिति तच्छब्दपरामृष्टयोर्दहराकाशतदन्तर्वर्ति-गुणजातयोरुभयोरप्यन्वेष्टव्यत्वमवगम्यते । "अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म" इति प्रागनूद्य "दहरोऽस्मिन्नन्तराकाशः इति तस्य "तस्मिन्यदन्तः" तस्मिन्दहराकाशपदवाच्यपरमात्मन्यन्तर्वर्तिगुणगणश्रे-ण्येतस्य चोभयोरपि "तदन्वेष्टव्यतया विशिष्टविधानमि"ति निर्गलितार्थः । एतदुभयविधानं कथमवगम्यत इति चेदित्थम्-पूर्वं हि "स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इत्यादिवाक्यं पुण्डरीकदहर-वद्दहरत्वमन्तराकाशस्यापि समापन्नमपाकुर्वद्भूताकाशत्वमपि तस्य वार-यति । भूताकाशे प्रसिद्धस्याप्याकाशशब्दस्य स्वस्य स्वेनैवोपमा नोपपद्यत इति तस्य व्यावृत्तिः साधिता । अनन्तरं तेनैव वाक्येन तस्य महत्त्वमभि-धाय "उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि" (छा० ८।१।३) इति प्रकृतस्यैवाका-शपदवाच्यस्यास्मिन्निति विद्वाधारतामुक्त्वा "यदैनज्जरामाप्नोति प्रध्वं-सते वा किं ततोऽतिशिष्यत" इति विचारे "स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते" इत्यादिभिर्दहरस्य जराप्रध्वंसादौ सत्यपि तस्यातिसू-क्ष्मत्वेन निर्विकारत्वं प्रदर्श्य ब्रह्म वपुरं निखिलजगन्निवासभूतमिति तदेव सत्यं कालत्रयाबाध्यमिति "एतत्सत्यं ब्रह्मपुर"मित्युपपाद्य "अस्मिन् कामाः समाहिताः" इति वाक्येनास्मिन्दहराकाशाख्ये परस्मिन्पुरुषे काम्यन्त इति कामाः वक्ष्यमाणापहतपाप्मत्वादयो दिव्यगुणाः कार्त्स्न्येन वर्तन्त इत्यभिधाय "एष आत्मापहतपाप्मा विजरो विमृत्युरि" त्यादिना तेषां दिव्यगुणानामेव स्वरूपमाख्याय "तेषां सर्वेषु लोकेषु कामचारो

भवती" त्यनेन च दहराकाशपदाभिधेयपरमात्मनस्तदन्तर्वर्तिनामपहतपा-प्मत्वादीनां गुणानामुपासनया तस्य पुरुषोत्तमस्यानुग्रहेणैवाखिलमनोरथ-पूर्तिस्सत्यकामत्वं सत्यसङ्कल्पत्वञ्चाविर्भवतीति प्राकरणिकार्थः। तस्मा-दत्र दहराकाशपदवाच्यः परमात्मापहतपाप्मत्वादिगुणाश्च तदन्तर्वर्त्तिन इत्येतदुभयमन्वेष्टव्यमिति सिद्धान्तः ॥१४॥

## गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गञ्च १।३।१५।

इतश्च परमात्मैव दहरपदवाच्यः। यतस्तस्यैवाभिधायकौ गतिशब्दौ दृश्येते। तथा हि– "अस्यैते सत्याः कामा अनृतापिधानास्तद्यथापि हिर-ण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः" (छा० ८।३।२) अस्यार्थः–एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिता इत्युपक्रम्य तम्ब्रह्मपुरमात्मानमेतांश्च सत्यान्कामाननुविद्य ये व्रजन्ति तेषां ब्रह्मदर्श-नाभावेनाकामचारित्वमुक्त्वा सत्यान् कामाननुविद्य ये व्रजन्ति तेषां ब्रह्मलोकं गत्वा ब्रह्मसाक्षात्कारानन्तरमाविर्भूतस्वरूपाणां सर्वलोकका-मचारित्वमुक्त्वाथ तादृशमात्मानमजानतां सुषुप्त्यवस्थायामहरहर्दहराका-शब्रह्मसमीपं गतानामपि तदप्राप्तिं वदति श्रुतिः। प्रत्यगात्मनः कर्मपर-वशतया जाग्रत्स्वप्नसुषुप्त्याद्यवस्थाभिस्तिरोहितापहतपाप्मत्वादिगुणत्वादु क्तगुणविशिष्टं दहराकाशं परमात्मानं न विन्दन्ति तथाऽन्याः प्रजाश्च न विन्दन्तीति सदृष्टान्तमाह "तद्यथा हिरण्यनिधिमक्षेत्रज्ञा इत्यादिना अयमा-शयः। तथा क्षेत्रतत्त्वापरिचितास्तदुपर्युपरि सञ्चरन्तोऽपि निहितं हिर-ण्यनिधिं न विन्देयुर्न प्राप्नुयुस्तथेमाः सर्वाः प्रजाः सुषुप्त्यवस्थायामहरह-र्दहरब्रह्मसमीपं गच्छन्त्योऽप्येतं ब्रह्मलोकं न विन्दन्ति न प्राप्नुवन्ति। ब्रह्मलोकमित्यत्र च पूर्वतन्त्रसिद्धनिषादस्थपतिन्यायेन सर्वसमासापेक्षया कर्मधारयसमासस्य श्रेष्ठतया ब्रह्मैव लोको ब्रह्मलोक इतिविग्रहः। इदञ्च हेतुगर्भितं वाक्यम्। "अनृतेन हि प्रत्यूढाः" इति च हेतुः। यतोऽनृतति-

रोहितापहतपाप्मत्वादिगुणविशिष्टात्मस्वरूपा अत एव ताः प्रजास्तत्समीपं गत्वाऽपि तं न पश्यन्तीति श्रुत्यर्थः ।

अत्र प्रजाभिरहरहर्गन्तव्यस्य हृद्गतदहराकाशस्य ब्रह्मलोकशब्देन निर्दिष्टतया चेत्याभ्यां गतिशब्दाभ्यां दहराकाशस्य ब्रह्मत्वमवगम्यते । तथा हि दृष्टमिति सुषुप्त्यवस्थायामहरहः सर्वेषां जीवानां सच्छब्दवाच्य-परब्रह्मगमनं श्रुत्यन्तरेऽप्यभिधीयमानं दृष्टम् "एवमेव खलु सोम्येमाः सर्वाः प्रजाः सतिः सम्पद्य न विदुः सति सम्पद्यामह इति" (छा० ६।९।२) तथैव सत आगम्य सत आगच्छाम इति च न विदुरित्यादिषु ब्रह्म-लोकशब्दश्च परस्मिन्ब्रह्मणि दृष्टः । "नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिता एष आत्मा" (छा० ८। १।५) इत्यत्र पुरशब्दस्य लोकशब्दस्य नैकार्थकत्वाद्ब्रह्मणः पृथिव्यग्नि-वायुसूर्यादिनिवासस्थानत्वेनोभयत्र पुरलोकशब्दयोः प्रयोगस्य साफल्यात् । एव"मेष ब्रह्मलोकश्च स आडिति होवाचे"त्यत्र ब्रह्मलोकशब्दस्य ब्रह्मणि दृष्टत्वाच्च । लिङ्गञ्च । चशब्दोऽवधारणार्थको यदिदमस्मिन्द-हरप्रकरणे श्रूयते प्रजानामहरहर्ब्रह्मलोकगमनं तदेव दहराकाशस्य परमा-त्मत्वेऽबाधितमव्यभिचारि लिङ्गं ज्ञापकं हेतुभूतमित्यर्थः । प्रयोगस्तु दह-राकाश• परमात्माहरहः सर्वप्रजागतिस्थानत्वे सति तदद्दश्यत्वात्तदज्ञात-त्वाच्चेत्यादिकः शक्यः कल्पयितुम् । नचान्यल्लोके प्रजानां प्रात्यहिकग-मनं युक्तियुक्तमिति दहराकाशः परमात्मैव ॥१५॥

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ।१।३।१६।

"एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय"(बृ० ४।४।२२) इत्यन्यत्र श्रुतस्यास्य परमात्मनो धृत्याख्यस्य महिम्नोऽस्मिन्दहराकाश उपलब्धेः । "अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय" (छा० ८।४।१) इत्येवमत्र दहरप्रक-रण अस्मिन्दहराकाशे धृत्याख्यस्य महिम्न उपलब्धेरयं दहराकाशशब्दा-

भिहितः परमात्मैव । अत्र य आत्मा स सेतुः सेतुवत्संसारसागरात्पारप्रापकः । संसारसागरतरणोपायभूतस्तत्पारस्थब्रह्मलोकाधिपतिश्चेति स्वयमेवाय दहराकाशः परमात्मोपाय उपेयश्च स्वानन्यभक्तानामिति सेतुशब्दार्थः सङ्गच्छते तदुक्तं गीताचार्यैः ।

अनन्येनैव योगेन मां ध्यायन्त उपासते ।

तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ॥

भवामि न चिरात्पार्थ ! मय्यावेशितचेतसाम् । गी० १२।७

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ॥

निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ गी० १२।८

इति स्वस्यैव स्वानन्यभक्तानां संसारसागरतरणोपायत्वस्य तत्प्राप्यत्वस्य चोक्तत्वात् । अग्रे च तमेवार्थं स्पष्टयति । "तस्माद्वा एतं सेतुं तीर्त्वा" एतच्छब्दपरामृष्टमात्मानं सेतुं तीर्त्वा लब्ध्वा "अन्धः सन्ननन्धो भवति" परमात्मप्राप्तिपूर्वकालेऽन्धवत्परमात्मनोऽद्रष्टापि तत्प्राप्तिकाले द्रष्टा भवतीति । तथा चैषां लोकानां विधृतिर्विधारकः सेतुशब्दार्थः । न हि सर्वलोकविधारकत्वं स्वानन्यभक्तसंसारसागरतारकत्वं ब्रह्मणोऽन्यस्य सम्भवति । तस्मादयं दहराकाशः परमात्मा ॥१६॥

## प्रसिद्धेश्च १।३।१७।

"आकाशो ह वै नामरूपयोर्निर्वहिता" (छा० ८।१४।१) सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" (छा० १।९।१) को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" (तै० २।७) इत्यादिष्वाकाशशब्दस्य परमात्मनि प्रसिद्धेः । सर्वभूतोत्पादकत्वादिपरमात्मधर्माणां भूताकाशेऽनुपपत्तेश्च दहराकाशः परमात्मैव ॥१७॥

## इतरपरामर्शात्स इतिचेन्नासम्भवात् ।१।३।१८

"अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाच" ( छा० ८।३।४ )

इत्यत्र वाक्यशेषे सम्प्रसादशब्दाभिहितस्येतरस्य जीवस्याप्यस्मिन् दहरप्रकरणे परामर्शात्स जीव एव दहराकाशपदवाच्यः स्यादिति चेन्न। असम्भवात्।

जीवे द्युपृथिव्यादिसर्वजगदाधारत्वादीनां परमेश्वरासाधारणधर्म्माणां पूर्वोक्तानामसम्भवात् दहराकाशः परमात्मैव। श्रुत्यर्थस्तु य एष इति दहराकाशवित्तदुपासक उच्यते। स एव सुषुप्त्यवस्थायां सर्वपाप्मस्पर्शाभावेन सम्प्रसन्नो जीव एव सम्प्रसीदति सुषुप्त्यवस्थायामिति सम्प्रसाद इत्युक्तः। स च दहराकाशोपासनया प्रसन्नस्य ब्रह्मणः प्रसादेन कर्मबन्धाद्विमुक्ततया सम्प्रसादपदभाक् भवति। सोऽयमस्माच्छरीरात्समुत्थाय सुषुम्नया नाड्या शरीराद्बहिर्निर्गत्यार्चिरादिमार्गेण ब्रह्मलोकं गत्वा तत्र परं ज्योतिरुपसम्पद्य परं ब्रह्मसमीपं सम्प्राप्य तत्प्रसादेन स्वेन रूपेण स्वाभाविकेनापहतपाप्मत्वादिगुणविशिष्टसच्चिदानन्दरूपेणाभिनिष्पद्यते ऽभितः सर्वप्रकारेण निष्पन्नो भवतीति।

इदञ्चात्र विचार्यते। कैश्चिदत्र परं ज्योतिरुपसम्पद्य स्वस्य परे ब्रह्मणि लयम्प्राप्य तद्रूपो भवतीत्यर्थः क्रियते। स च प्रकरणविरुद्धत्वादनुपपन्नः। तथाहि-ब्रह्मलीनस्य ब्रह्मैकताङ्गतस्य तस्य "जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानै" रित्यादि सर्वलोककामचारत्वादिव्यवहाराणामनुपपत्त्या तद्बोधकश्रुतीनां वैयर्थ्यापत्तेर्जगद्व्यापारवर्ज्जमिति सूत्रस्य वैयर्थ्यापत्तेश्च। तस्माज्जक्षन् क्रीडन्नित्यादिश्रुतयोऽन्यथा स्वार्थमलभमाना मुक्तजीवस्वरूपस्य ब्रह्मणः पार्थक्यमुपपाद्य स्वार्थं लभन्ते। अत एव "निरंजनः परमं साम्यमुपैति" (मु० ३।१।३) इति श्रुतेः परमात्मप्रसादेनाविर्भूतोक्तगुणविशिष्टात्मस्वरूपो मुक्तजीवो ब्रह्मसाम्यं प्राप्यते तत्समानभोगवान् भवतीति "भोगमात्रसाम्यलिङ्गाच्च" (ब्र० सू० ४।४।२१) इति सूत्रनिर्णीतार्थः सङ्गच्छते जगद्व्यापारवर्ज्जमिति सूत्रन्तु ब्रह्मणो जगद्व्यापारकर्तृत्वेऽपि मुक्तानां तदभाव इति बोधनेन मुक्तजीवानां ब्रह्मणो न्यूनैश्वर्यकत्वं तद्भिन्नत्वञ्च स्पष्टयति। एवञ्च मुक्तस्वरूपस्थितिप्रवृत्तीनां-

परमात्माधीनत्वबोधनद्वारा तेषां तच्छेषत्वं परमात्मनश्च शेषित्वं आपयतीयं श्रुतिः । तदेव चानया श्रुत्या परज्योतिस्सम्पत्तिसमनन्तरं तत्प्रसादेन ज्ञानिभक्तानां स्वेन रूपेणाभिनिष्पत्तिरुच्यते । तथा च स्वस्वरूपाविर्भावरूपमुक्तेरपि परमात्माधीनत्वसूचनेन बद्धमुक्तोभयावस्थस्य जीवस्य परमात्माधीनस्वरूपस्थितिप्रवृत्तित्वेन तच्छेषत्वं परमात्मनस्तच्छेषित्वं प्रतिपादयन्तीभिरनेकश्रुतिभिस्तदर्थनिर्णायकेन सूत्रेण च बद्धमुक्तोभयावस्थस्य जीवस्य परमात्मशेषत्वनिष्पत्तेस्तस्य जगद्विधारकत्वतत्सेतुत्वादिव्यापारनिषेधेन तदसम्भवात् । अतोऽपि सर्वजगद्धारको दहराकाशः परमात्मैव ॥१८॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ।१।३ १९.

उत्तरात्प्रजापतिवाक्याज्जीवस्यापहतपाप्मत्वादिगुणवत्त्वावगमात्स एव दहराकाशो भवत्विति चेन्न । आविर्भूतस्वरूपस्तु-तुशब्दः पूर्वपक्षव्यावर्तकः उत्तरस्मादपि वाक्याज्जीवस्य ग्रहणं दहराकाशान्न सम्भवतीति । अत्रायमभिप्रायः पूर्वपक्षतयाभिमतः । दहरविद्यासमनन्तरं तदेकवाक्यतया तदेकार्थप्रतिपादिकायां प्रजापतिविद्यायां फलतया "एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्य्येति जक्षन्क्रीडन्रममाणः स्त्रीभिर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरं स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः" (छा० ८।१२।३) इति श्रूयते ।

अस्मिंश्च वाक्यशेष आविर्भूतस्वरूपस्य जीवस्यैव क्रीडनादिव्यवहाराणां श्रवणादस्य वाक्यस्य जीवस्वरूपधर्मवर्णनपरत्वोपपत्तेर्जीवस्य चापहतपाप्मत्वादिगुणकत्वोपपत्तेः स एव दहराकाशशब्दनिर्दिष्ट इति चेत् । तत्राह, आविर्भूतस्वरूपस्त्विति । आविर्भूतस्वरूपशब्दो हेतुगर्भः । अस्य वाक्यस्याविर्भूतस्वरूपजीवस्य प्रतिपादनपरत्वान्न तदाभिधेयो दहराकाशः । अयमत्र निर्णयः । अस्मिन्प्रजापतिप्रकरणेऽनादिकालप्रवृत्तपुण्यपापरूपकर्ममूला-

वस्थात्रयैस्तिरोहितापहतपाप्मत्वादिगुणकस्य जीवस्य संसारिस्वरूपं प्रदर्श्यानन्तरं "मघवन्मर्त्यं वा इदं शरीरमात्त" मित्यादिनोपरितनवाक्येन तस्यैव जीवस्य परमात्मोपासनाजनिततदुपसम्पत्त्याऽऽविर्भूतस्वरूपस्य क्रीडनादिधर्माणाञ्चोपदेशश्रवणात् । "भोगमात्रसाम्यलिङ्गाच्चे" तिसूत्रेण तस्य मुक्तजीवत्वावगमात् । जगद्व्यपारवर्ज्जमिति च मुक्तानां जगत्सृष्टिस्थितिप्रलयजगद्विधारणत्वसेतुत्वादिपरमात्मव्यापाराणां प्रतिषेधात् । आविर्भूतस्वरूपमुक्तव्यवहारेषु च "जक्षन् क्रीडन्रममाण" इत्युक्तेषु जगद्विधारणत्वसेतुत्वाद्यप्रतिपादनात्तस्य दहराकाशपरमात्मत्वाऽसम्भवात् । एवञ्च यत्परज्योतिः प्राप्य जीवोपि कर्मबन्धाद्विमुच्याविर्भूतस्वरूपो भवति तत्स्वप्राप्यभूतं परज्योतिःपदप्रतिपाद्यं परब्रह्मैव नतरां जीवः । अत्र वाक्ये बद्धजीवस्य दहरब्रह्मोपासनया कर्मबन्धाद्विमुच्य स्वरूपाविर्भावो भवतीति बोध्यते । तस्मान्न बद्धमुक्तोभयावस्थो जीवो दहराकाशो भवितुमर्हतीति ॥१९॥

तर्हि दहराकाशवाक्य "एष सम्प्रसाद" इत्यादिना जीवप्रस्तावोऽथ च प्रजापतिवाक्य "एष सम्प्रसाद" इति जीवप्रस्ताव आविर्भूतस्वरूपोपदेशश्च किमर्थं इति चेत्तत्राह--

## अन्यार्थश्च परामर्शः ।१।३।२०

परज्योतिः स्वरूपदहराकाशोपासनया तत्प्रसादेनैष सम्प्रसादो जीवोऽस्माच्छरीरात्समुत्थायेति प्रतिपादनात्परज्योतिःपदाभिधेयदहराकाशसम्पत्त्याऽस्य जीवस्यानृतेन तिरोहितस्वरूपस्य स्वरूपाविर्भावो भवतीत्येतज्ज्ञापनार्थं दहरविद्यायां जीवस्य परामर्शः कृतः । एवं प्रजापतिवाक्येऽपि जीवप्रस्तावः परमपुरुषोपासनया तत्प्रसादेनास्य जीवस्य स्वेन रूपेणाभिनिष्पत्तिरिति ज्ञापनार्थमेवेति निर्णयः । तदेवं दहरप्रजापतिवाक्ययोः कृतानां जीवपरामर्शस्वरूपोपदेशतद्व्यवहारोपदेशानामन्यार्थत्वेनापक्षीणत्वेन दहराकाशस्वरूपसमर्पकत्वमिति दहराकाशः परमात्मैव ॥२०॥

## अल्पश्रुतेरिति चेत्तदुक्तम् ।१।३।२१।

प्रकृतश्रुतिघटकवाक्यं "दहरोऽस्मिन्नन्तराकाश" इति विद्यते तेन दहराकाशस्याल्पत्वं हृदयावच्छिन्नत्वञ्च बोध्यते । तादृशप्रादेशिकत्वञ्च परमात्मनोऽसम्भवदुक्तिकम् । "महतो महीयानि"ति तस्यापरिच्छिन्नत्वमेव श्रूयते । तस्मादाराग्रमात्रोपमितस्य जीवस्यैव दहराकाशत्वमुपपद्यते । तथा सति हृदयपुण्डरीकपरिच्छिन्नत्वमपि तस्योपपन्नतरमिति चेत् । तदुक्तम् । तत्रोत्तरमुक्तम् । अर्भकौकस्त्वात्तद्व्यपदेशादित्यत्र निचाय्यत्वादेवं व्योमवच्चेत्युपासनार्थमल्पत्वं परमेश्वरेऽविरुद्धम् । "अणोरणीयान्महतो महीयान्" का० १।२।२०) इति श्रुतेस्तस्याणोरप्यणीयस्त्वेन हृदिस्थत्वमुपपद्यते । तथा चोपासनार्थं परमात्मनोऽल्पत्वं स्वभावतो परिमितानन्तमहाविभूतिमतोऽपरिच्छिन्नत्वञ्चाघटितघटनापटीयस्या तच्छक्त्या सर्वमप्युपपद्यते । तस्माद्दहराकाशः परमात्मैव ॥२१॥

## अनुकृतेस्तस्य च ।१।३।२२।

अनुकृतिरनुकरणम् । मुख्यं यत्तदनुकार्यम् । मुख्यस्याभावे यदुपादीयमानं तदनुकरणम्भवति । एवञ्च तस्य जीवस्य दहराकाशब्रह्मानुकृतेश्च हेतोर्न जीवो दहराकाश इत्यर्थो निष्पन्नः । अनुकार्यानुकरणयोर्भेदविशिष्टत्वादिति भावः । अत्रेदं तात्पर्यम् । संसारदशायां कर्ममूलाभिर्जाग्रदाद्यवस्थाभिस्तिरोहितापहतपाप्मत्वादिगुणकस्य जीवस्यानुकार्यब्रह्मोपासनेन तत्प्रसादादाविर्भूतस्वरूपस्याविर्भूतानामपहतपाप्मत्वादिगुणानाञ्च परमात्मस्वाभाविकस्वरूपस्वाभाविकापहतपाप्मत्वादिगुणानुकृतित्वोपपत्त्याऽनुकर्तुर्जीवादनुकार्यस्य दहराकाशपरज्योतिषो भेदत्वोपपत्तेर्न तस्य दहराकाशपरमात्मत्वमुपपद्यते । अनुकृतिर्नामानुकार्यस्य साम्यावाप्तिः सैवात्र श्रूयते । "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति" (छा० ८।१।६।) इत्यनुदिनभगवदुपासनजनिततत्प्रसादेन विमुक्तकर्मबन्धस्य जीवस्य परमेश्वरस्येव संकल्पमात्रेण

सर्वकामावाप्तिर्भवतीति । सैव च "स यदि पितृलोककामो भवती" त्यादिना महता प्रकरणेनोपरिष्टादुद्बोधिता । तथा चात्र परमात्मन एव दहराकाशत्वमिति ॥२२॥

## अपि च स्मर्यते ।१।३।२३।

स्मर्यते चापीत्यन्वयः । "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" (गी० १४।२।) इति जीवस्य परमात्मज्ञानपूर्वकतदुपासनेन प्राप्तायास्तत्साधर्म्यरूपायास्तदनुकृतेः स्मरणान्न मुक्तजीवस्यापि दहराकाशत्वमुपपद्यते । साधर्म्यं समानधर्मत्वं धर्मादचापहतपाप्मत्वादिगुणाः । अयमर्थः । दहरब्रह्मज्ञानपूर्वकतदुपासनेन परज्योतिर्ब्रह्मोपसम्पद्य तद्दर्शनेन कर्मबन्धविनिर्मुक्त आविर्भूतापहतपाप्मत्वादिगुणको जीवः परमात्मसंकल्पायत्तसंकल्पवान्भवति । तदनुगुणानखिलान् दिव्याञ्छाश्वतिकानवाप्नोति । मुक्तस्यापि भगवदायत्तसंकल्पतया परमात्मशेषत्वमस्य नित्यमेव सिद्धं भवति। तथा चोभयावस्थस्यापि जीवस्य न दहराकाश वाच्यत्वमित्यतः परमात्मैव दहराकाश इति सिद्धम् ॥२३॥

### * अथ प्रमिताधिकरणम् ॥६॥

## शब्दादेव प्रमितः ।१।३।२४।

काठके श्रूयते—"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति" "ईशानो भूतभव्यस्य न ततो विजुगुप्सते एतद्वै तत्" तथा "अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स उ श्व एतद्वै तत्" (का० २।४।१२।१३) इति । तत्र किमयमङ्गुष्ठमात्रः पुरुषः श्रूयमाणो

---

* 'अङ्गुष्ठमात्र' इत्यत्राङ्गुष्ठमात्रस्तु को मतः । जीवो वा परमात्मा वा ? कस्मिन् पक्षे न दुष्टता ॥१०॥ जीवात्माऽङ्गुष्ठमात्रत्वात् स्ववाचिशब्दतः परः।

जीव आहोस्वित् परमात्मेति संशयः। तत्र पूर्वः पक्षः। अङ्गुष्ठमात्रः पुरुष इत्युक्तश्रुत्या परिमाणकथनाज्जीवात्मैवात्र निश्चीयते। परमात्मनस्त्वङ्गुष्ठमात्रपरिमाणकत्वं कथमपि न सम्भवति। जीवस्य तु श्रुतिस्मृतिषु तथा स्वरूपमुपवर्ण्यते। "प्राणाधिपः सञ्चरति स्वकर्मभिः" (श्वे० ५।७) "अङ्गुष्ठमात्रो रवितुल्यरूपः" (श्वे० ५।८) "अथ सत्यवतः कायात्पाशबद्धं वशङ्गतम्। अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यमः" (म० भा ३।२९७।१७) इत्यादयः। तस्मादङ्गुष्ठमात्रो जीव इति प्राप्तेऽभिधीयते—

शब्दादेव प्रमित इति। अङ्गुष्ठमात्रः पुरुषोऽत्र परमात्मैव। कुतः? शब्दात् "ईशानो भूतभव्यस्य" त्यपरोक्षतया श्रूयमाणशब्दबलादेव। नहि तावज्जीवस्य कर्मपरतन्त्रप्रवृत्तिमतः स्वातन्त्र्येण भूतभव्यस्येशितृत्वं युज्यते। न वा कर्मबन्धविमुक्तस्य मुक्तस्यापि। मुक्तव्यवहारपरश्रौतेषु वाक्येषु तस्य भूतभव्येशानत्वाश्रवणात्। अत एव जगद्व्यापारवर्जमिति जगद्व्यापारस्यापि प्रतिषेध उपपद्यते। एतद्वै तदिति पृष्टस्योत्तरतयानुसन्धानमपि परमेश्वरोपादान एव सङ्गच्छते। पृष्टञ्चेह नचिकेतसा ब्रह्मैव। इत्येतद्वै तदिति परमात्मन एव ग्रहणम् ॥२४॥

किमर्थं तह्यंपरिच्छिन्नस्य ब्रह्मणोऽङ्गुष्ठमात्रप्रमितत्वेन परिच्छिन्नत्वव्यपदेश इत्यत्राह—

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ।१।३।२५।

अपरिच्छिन्नस्यान्तर्यामितया सर्वत्रावस्थितस्यापि परमात्मनः स्वाश्रितजनोपासनासिद्ध्यर्थमेवोपासकहृदयेऽधिष्ठितत्वात्। हृदयस्य चाङ्गुष्ठप्रमाणकत्वं सिद्धमेव तद्गतपरमपुरुषे भगवति समारोप्येदमङ्गुष्ठमात्रप्रमितत्वं तस्योच्यते "अङ्गुष्ठमात्रः पुरुष" इत्यादिवचनैः। शक्तिमतिविशेषाधिनि च शास्त्राणि चरितार्थीभवन्तीति सिद्धान्तान्मनुष्यानधिकृत्यैव शास्त्रस्य प्रवृत्तत्वान्मनुष्याणामेव परमात्मोपासकत्वसम्भवात्।

मनुष्यहृदयस्य च तत्तदङ्गुष्ठप्रमितत्वात्तदपेक्षयेदमभिहितमित्यत्र परमात्मैवाङ्गुष्ठमात्र इति सिद्धम् ॥२५॥

## * अथ देवताधिकरणम् ॥७॥

## तदुपर्यपि बादरायणः सम्भवात् ।१।३।२६।

पूर्वं मनुष्यानधिकृत्य शास्त्रस्य प्रवृत्तत्वान्मनुष्याणां ब्रह्मोपासनेऽधिकार इत्युक्तम् । तत्प्रसङ्गेन देवादीनां ब्रह्मविद्यायामधिकारोऽस्ति नवेति संशयो बुद्ध्यारूढो भवति । तत्रायम्पूर्वः पक्षः । नास्ति ब्रह्मविद्यायां देवादीनामधिकारः । कुतः ? तेषां विग्रहादिप्रतिपादकवचनाश्रवणात् । मन्त्रार्थवादादीनामपि "वायुर्वै क्षेपिष्ठा देवता" ( यजु. काण्ड. २ प्रश्न. १ अनु १ पं० १) इत्यादीनां "वायव्यं श्वेतमालभेत भूतिकाम" इत्यादिविधिवाक्यैकवाक्यतया शेषभूतानां वायुस्तुतिमात्रपराणां वाय्वादिदेवताविग्रहादिसद्भावप्रकाशकत्वाश्रवणात् । करणकलेवरमन्तरेण च ब्रह्मानुध्यानलक्षणोपासनादिसामर्थ्यं न स्यात् । तदतिरेकेण चार्थित्वस्याप्यसम्भवात्सामर्थ्यार्थित्वयोरभावादेव देवादीनां तत्राधिकारो नास्तीति प्राप्तेऽभिधीयते तदुपर्यपि बादरायणस्सम्भवादिति । तेषां मनुष्याणामुपरिष्टाद्ये देवादयस्तेषामपि ब्रह्मविद्यायामधिकारोऽस्तीति बादरायण आचार्यो मन्यते । कुतः ? सम्भवात् । देवादीनामपि विद्याधिकारकारणत्वयोः सामर्थ्यार्थित्वयोस्सम्भवात् । तत्र सामर्थ्यं देहेन्द्रियादिमतः सम्भवति । तच्च देहेन्द्रियादिमत्त्वं श्रुतिस्मृतीतिहासपुराणादिभिस्तेषामवगम्यते । तत्र "वज्रहस्तः पुरन्दरः" ( अष्टक २ प्र० ६ अ० ७ पं० ३४ ) "तेनेन्द्रो वज्रमुदयच्छत्" (का० २ प्र० ४ अ० १२) इत्यादिकर्मविधिशेषभूतमन्त्रार्थवादेषु स्पष्टमेव

---

* मर्त्यानामिव देवानां ब्रह्मविद्याऽधिकारिता ॥११॥ अस्ति वा नास्ति वा ? नास्ति देहाद्यभावहेतुतः । अस्त्येव विबुधानां सा सामर्थ्यार्थित्वसम्भवात् ॥१२॥

विग्रहादिमत्वं देवानां श्रूयते । स्तुतिर्हि स्तोतव्यनिष्ठासाधारणगुणाभिधानेन सम्पद्यते । तथाभूतगुणानामाधारश्च विग्रहादिमानेव स्यात् । नह्येतेषामन्यपरत्वमेष्टव्यम् । कर्मप्रवृत्तये स्तोतव्यार्थसद्भावस्यावश्यकत्वात् कर्मविनियुक्ताश्च मन्त्राः प्रयोगकाल अनुष्ठेयार्थस्मारकत्वेन द्रव्यदेवतास्वरूपमुपवर्ण्यं विशेषार्थमेव विदधते । न च "अम्यक्सात इन्द्र ऋष्टिः" (ऋ सं.) सृण्येव जर्फरी तुर्फरीतू" (ऋ० सं०) इत्यादिभिर्मन्त्रैः प्रामाणिकः कश्चिदर्थ एव न बोध्यते । "अधः स्विदासी३दुपरिस्विदासी३द्" (ऋ० स०) त्यादीनां बोधकत्वेऽपि स्थाणुर्वा पुरुषो वेति वाक्यवत्संदिग्धार्थबोधकत्वादप्रामाण्यमेव मन्त्राणाम् । तथा च कथं देवताविग्रहादिवर्णनस्य साधुत्वमिति वाच्यम् । यास्काचार्येण निरुक्ते तेषां मन्त्राणां सम्यगर्थं निरूप्य प्रामाण्यं दर्शितम् । तत्परिचयशून्यैरज्ञातत्व न मन्त्राणां दोषमावहति । नैष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधःस भवतीति लौकिकीयं गाथैवात्र प्रसरति । पूर्वतन्त्रेऽप्ययमर्थो वर्णित एव । "सतः परमविज्ञानम्" (जै० सू० १।२।५०) अस्फुट एवार्थो प्रमादादिभिर्न ज्ञायते अतो निरुक्तव्याकरणादिभिश्च धातुतोऽर्थः परिकल्पयितव्यः । तथा च "जर्फरी तुर्फरीतू" इत्येवमादीन्यश्विनोरभिधानानि । "आश्विनं चेदं सूक्तम्" (ऋ० सं०) "अश्विनोः काममप्रा" इति दर्शनात् । द्विवचनान्तञ्च तत्र लक्ष्यते । अत एव "जर्फरी भर्त्तारावित्यर्थः । तुर्फरी हन्तारावित्यर्थं इति निरुक्त उक्तम् । "एव मम्यक्सात" इत्यादावपि सङ्गमनीयम् । "अधः स्विदासी३त्" इत्येषो न संशयार्थकः । अपि तु जगत्कारणस्य परवस्तुनोऽतिगभीरत्वं सूचयितुमेव प्रवृत्तः । स्वाचार्यशास्त्रसम्प्रदायरहितैरगम्यत्वमधः स्विदित्यनया वचो भङ्ग्योपन्यस्यते । अयमेवाशयः "क अद्धा वेद" (ऋ० सं०) इत्युपरिष्टान्मन्त्रेषु प्रदर्शितः । प्रयोगकाले मन्त्रोच्चारणं नियमत एव कर्तव्यमित्यदृष्टप्रयोजनकत्वमेव मन्त्राणामित्यपि न, तदर्थप्रत्यायकत्वरूपं दृष्टमपि प्रयोजनमूरिकृतम् । न च दृष्टप्रयोजने न किमपि श्रौतं प्रमाणमुपलभ्यत इति वाच्यम् । "लिङ्गोपदेशश्च तदर्थवत्" (जै० सू०

१।२।५२) इत्यनेन निर्णीतमेव तत्। तथा हि "ऐन्द्रया गार्हपत्यमुपतिष्ठते" इन्द्रो देवता यस्या ऋचः सेयमैन्द्री तया गार्हपत्यमुपतिष्ठेति। अत्रैन्द्रीत्वलिङ्गेनैवोपदेशः। तस्यामृचीन्द्रः प्राधान्येन प्रतिपाद्यतेऽतस्तस्या ऋचः इन्द्रो देवतोपदिश्यते। अत एव चैन्द्रयेति देवतावाचितद्धितान्तनिर्देश उपपद्यते। ततश्चायमुपदेशस्तन्मन्त्रवाक्यमर्थवदिति ज्ञापयति। तस्माद्विवक्षितार्थप्रत्यायकत्वान्मन्त्राणां प्रयोगकालिकमुच्चारणम्भवतीति। एवञ्च मन्त्रेण देवतास्वरूपं स्पष्टमेवाभिधीयत इति नाविदितं वैदिकानामतः प्रकृतमनुसरामः। तथाच "यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन् (ऐ०ब्रा० ३।८।१) इति वचनं देवताविषयकं मनोध्यानमाविष्करोति। तच्च निर्विशेषायास्तस्या नोपपद्यते। तस्मात्सगुणदेवतायाः कर्मविधावावश्यकत्वम्। फलकामिनाऽनुष्ठीयमानस्य कर्मणः क्षणप्रध्वंसित्वात् कालान्तरभाविनः स्वर्गादिरूपस्य फलस्य च प्रयोजकः कश्चिदपेक्षितः। विधिवाक्यविचारे च कृत्स्नानि कर्माणि स्वोपास्यदेवताप्रधानान्येव। तस्माद्देवानां देहेन्द्रियादिमत्त्वं सम्यगुपपन्नम्।

तथोपनिषद्भागेऽपि सृष्टिप्रकरण उपासनाप्रकरणे च श्रूयते। सृष्टिप्रकरणे तावत् "सदेव सोम्येदमग्र आसीदि" त्यारभ्य "तदैक्षत बहुस्यां प्रजायेयेति" "तत्तेजोऽसृजत" (छा० ६।२।३।) इति सर्वमचेतनं तेजोवन्नादिकं सृष्ट्वा "हन्ताहमिमास्तिस्रोदेवताऽनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" (छा० ६।३।२।) इति संकल्प्य नामरूपाभिहितं ब्रह्मादिस्थावरपर्यन्तं भूतजातं चतुर्विधं तत्पूर्वकर्मोचितं तादृशं शरीरं व्याकरोदिति नामरूपव्याकरणश्रुत्यैव देवादीनां विग्रहवत्त्वं निष्पद्यते, देवादीनां देहेन्द्रियादिसम्बन्धकरणस्यैव नामरूपव्याकरणत्वम्। तथाष्टमप्रपाठकेऽपि छान्दोग्ये "तौ हसंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः" (छा० ८।७।२) इति श्रुत्या हस्तादीनामवगमाद् विग्रहादिमत्तया तेषां सामर्थ्यनिश्चयात्। तथा वाल्मीकीये श्रीरामं प्रति ब्रह्मणो वचनादपि ज्ञायते।

संक्षिप्य हि पुरा लोकान् मायया स्वयमेव हि ।
महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः ॥ वा. रा.उ.स. १०४।४
पद्मे दिव्यार्कसंकाशे नाभ्यामुत्पाद्य मामपि ।
प्राजापत्यं त्वया कर्म मयि सर्वं निवेशितम् । वा. रा. उ. स.१०४।७
सोऽहं संन्यस्तभारो हि त्वामुपासे जगद्गुरुम् ।
रक्षां विधत्स्व भूतेषु मम तेजस्करो भवान् ॥ वा. रा.उ.स. १०४।८
ततस्त्वमपि दुर्धर्षस्तस्माद्भावात्सनातनात् ।
रक्षां विधास्यन् भूतानां विष्णुत्वमुपजग्मिवान् । वा.रा उ.स.१०४।९

इति "नाभ्यामुत्पाद्य मामपि" "त्वामुपासे" "रक्षां विधत्स्वेति" च वाक्यैर्ब्रह्मणः शरीरवत्त्वं श्रीरामोपासकत्वञ्चावगम्यते ।

एवं देवादीनां सदा भोगशालित्वेऽपि भोग्यवस्तूनां क्षयातिशयदोषग्रस्तत्वेन तत्रानित्यत्वबुद्ध्युत्पादेन वैराग्याद्युत्पत्तिपूर्वकनिरतिशयानन्दस्य मोक्षस्यार्थित्वमपि सम्भवत्येव ।

तथा बृहदारण्यके 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्" (बृ० १।४।१०।) इति देवानां ब्रह्मविद्याफलान्तविद्यावत्त्वं श्रूयते । एवञ्च तेषां ब्रह्मविद्याफलवतां कैमुत्यन्यायेनैव ब्रह्मविद्याधिकारित्वोपपत्तेरिति ॥२६॥

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् १।३।२७।

ननु ब्रह्मविद्याधिकारत्वनिष्पत्तये देवादीनां विग्रहादिमत्त्वं सप्रमाणमभ्युपगतम् । तथा सति कर्मणि विरोधः सम्पद्यते । कुत ? विग्रहवत्त्वे तेषां यागादौ कर्मणि "इन्द्रागच्छ हरिव आगच्छ" (यजु० आर० प्र० १ अ. १२ ) इत्यादिनाऽऽहूतस्य तस्यैकस्य युगपदनेकयागेषु सन्निधानाऽनुपपत्तेरिति कर्मणि देवताया उपकारकत्वविरोध इति चेन्न । कुतः ? अनेकप्रतिपत्तेर्दर्शनात् । सौभर्यादीनां योगशक्तिभाजां युगपदनेकशरीरप्रतिपत्तिदर्शनात् देवादीनां प्रभूतशक्तिमतां युगपदनेकशरीरधारणस्योपपत्तेः ।

अथवा प्रतिपत्तिरङ्गभावस्तस्य लोके दर्शनात् । यथाऽनेकैश्छात्रैर्युगपन्नमस्कुर्वाणैरेकोऽपि गुरुर्नमस्क्रियमाणो दृश्यते । एवमेकां सविग्रहामेव देवतामुद्दिश्य युगपत्सर्वे हवींषित्यक्ष्यन्तीत्यतः कर्मणि देवताया उपकारकत्वे न कश्चिद्विरोधः ॥ २७ ॥

## शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् १।३।२८।

विरोध इत्यनुवर्तते । ननु निरुक्तहेतोर्देवादीनां विग्रहादिमत्त्वेऽभ्युपगम्यमाने न स्यात्कर्मणि कश्चिद्विरोधः । किन्तु देवादिवाचके शब्दे तु विरोधः स्यादेव । अर्थानामनित्यत्वेन तदसम्बन्धात् । अयम्भावः। "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानम्" ( जै. सू. १।१।५ ) इत्यादिसूत्रे "औत्पत्तिक इति नित्यं ब्रूम" इति शबरस्वामिन आहुस्तथा च शब्दस्यार्थेन सम्बन्धो नित्य एवेति मतम् । सम्बन्धस्य द्विष्ठत्वेन सम्बन्ध्यधीनमेव तस्य नित्यत्वं वाच्यम् । तथा च शब्दस्य तद्वाच्यस्य च प्राङ्नित्यत्वं स्थिरीकृत्यैवान्वयस्य तत्त्वं परिरक्षणीयं भवेन्नेतरथा । तदिदानीं देवादीनां विग्रहवत्त्वेन सावयवत्वादिन्द्रादिरूपार्थस्य घटादिवदनित्यत्वमवर्जनीयं स्यात् । तथा सत्यनित्येनार्थेन नित्यस्य तद्वाचकरूपस्य शब्दस्य सम्बद्धुमशक्यत्वादाम्नायशब्देऽन्वये च नित्यतया यत्प्रामाण्यं व्यवस्थितं तस्य विरोधः सुतरामापद्येतेति चेन्न । अतः प्रभवात् । त्रैकालिकसम्बन्धविशिष्टाद्वैदिकेन्द्रादिशब्दादेव पुनरिन्द्राद्यर्थसमूहस्योत्पत्तेः ।

अयमत्र निर्णयः । गवादिशब्दानां न केवलं व्यक्तिमात्रवाचकत्वम् । व्यक्तीनामानन्त्येनानन्तशक्तिकल्पने गौरवात्। एकत्र व्युत्पत्तिग्रहे तु व्यक्त्यन्तरबोधाऽसम्भवात् । न वा विशिष्टाभिधायित्वम् । अनन्यलभ्यस्यैव शब्दार्थत्वनियमात । अतोनागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामतीति न्यायादाकृतावेवशक्तिः । गोत्वस्य शक्यतावच्छेदकत्वापेक्षया शक्यत्वस्यैव तत्त्वे लाघवाच्च । तुल्यवित्तिवेद्यत्वादेव व्यक्तिबोधसम्भवः । तथा च जैमिनीयं सूत्रम् "आकृतिस्तु क्रियार्थत्वात्" (१।३।१७।३३) इति एवं स्थिते

चेन्द्रादिरूपार्थानामुत्पत्तिमत्त्वेऽपि न वैदिकेन्द्रादिशब्दानामनित्यत्वम् । अपि त्वाकृतीनां नित्यतया तदभिधायिनां तेषां नित्यत्वमेवेति न काप्यनुपपत्तिः । सर्गादौ हि परमात्मप्रसादात्प्रतिभासितवेदः प्रजापतिर्विनष्टास्विन्द्रादिव्यक्तिषु तत्तदाकृतिवाचकानविनाशिन एवेन्द्रादिवैदिकाञ्छब्दान्हृदिस्थानाकलयन् प्राक्कल्पीयांस्तदर्थांश्च मनस्याकूतयन् गतकल्पीयाकारा एवेन्द्रादि व्यक्तीः समुत्पादयती । जगतः प्रवाहपरम्परयानादित्वादिदमुपपद्यते । उक्तार्थे प्रमाणाकाङ्क्षायामाह–प्रत्यक्षानुमानाभ्यामिति । प्रामाण्ये स्वातन्त्र्यात्प्रत्यक्षं श्रुतिः श्रुत्यपेक्षप्रामाण्यकत्वाच्चानुमानं स्मृतिः । ताभ्यां श्रुतिस्मृतिभ्यामित्यर्थः ताभ्यां शब्दपूर्वा सृष्टिरवगम्यते । तथा हि "वेदेन नामरूपे व्याकरोत्सतासती प्रजापतिः" "स भूरिति व्याहरत्स भूमिमसृजत" (तै०ब्रा० २।२।४।२२) "एते असृग्रमिन्दवस्तिरः पवित्रमाशवः । विश्वान्यभिसौभगे"त्येतन्मन्त्रस्थपदैः स्मारं स्मारं ब्रह्मा देवादीनसृजत् । तथा चेयं श्रुतिः । 'एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्या निन्दव इति पितॄंस्तिरः पवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमभिसौभगेत्यन्याः प्रजा" इति तथा "स मनसा वाचं मिथुनं समभवत्" (बृ० १।२।४) उपरि निर्दिष्टायाः श्रुतेरर्थसंगतिः । "एत इत्यस्य पदस्यार्थाकारं स्मृत्वेन्द्रियाधिष्ठातृदेवानसृजत्" । "असृग्रशब्दार्थाकारं स्मृत्वाऽसृक्छब्दवाच्यरुधिरप्रधानदेहरमणान्मनुष्यानसृजदि" त्यादिप्रकारेणावगन्तव्या । तथा स्मृतिरपि––

अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥
सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ॥
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥ म. अ० १।२१।
नामरूपञ्च भूतानां कृत्यानाञ्च प्रवर्तनम् ।
वेद शब्देभ्य एवादौ देवादीनां चकार सः । वि०पु० १।५।६३
पूर्वं वैदिकानेव "सौर्यं चरु निर्वपेत्" "आग्नेयमष्टाकपालं निर्वपति"

"सारस्वतं चरुम्" "खादिरो यूपो भवति' इत्यादिशब्दान् संस्मृत्य नामरूपकृत्यानि कृतवान् प्रजापतिरित्यादिरर्थः। अतो वैदिकशब्देभ्य एव देवादिसृष्टिकरणाद्देवादिसृष्टिहेतुत्वेन तेषां सार्थक्याद्देवादीनां विग्रहवत्त्वेऽपि न वेदस्यानित्यत्वप्रयोजकः कश्चिच्छब्देऽपि विरोधः॥२८॥

## अत एव च नित्यत्वम्।१।३।२९।

यतो वैदिकेभ्य इन्द्रादिशब्देभ्यस्तदाकृतिं प्रजापतिर्मनसि सम्प्रधार्य तत्तदर्थांश्च संस्मृत्य सृष्टिं करोति। तत एव "नम ऋषिभ्यो मन्त्रकृद्भ्यः" (आरण्य० प्र० ७ अ० १) "अयं सो अग्निरिति विश्वामित्रस्य सूक्तं भवति" (यजु० का० ५ प्र० २ अ० ३) इत्यादौ विश्वामित्रादीनां प्रतीयमानानां नित्याकृतिमवगम्य तत्सम्पादने वेदस्य नित्यत्वमुपपद्यते अयम्भावः। प्रजापतिस्तावदादौ सम्प्रदायप्रवर्तकानामृषिणामाकृतिमवधार्य तच्छक्तियुक्तांस्तदाकारानेव समुत्पाद्य तत्तन्मन्त्रादिप्रवर्तने तानेवर्षीन् प्रेरयति। तेऽपि स्वाधिकारोचितं सामर्थ्यमवाप्य पूर्ववद्वेदांश्चाधीत्य तथैव स्वरवर्णानुपूर्वीयुक्तान्साम्प्रदायिकान्मन्त्रान् संस्थापयन्ति। अतस्तेषां मन्त्रकृत्त्वं वेदानाञ्च नित्यत्वं सम्यगुपपद्यते।

न च वेदानां पुरुषोच्चरितत्वाच्च पौरुषेयत्वम् "स तपोऽतप्यत्" "तेभ्यस्तपस्तेपानेभ्यस्त्रयो वेदा अजायन्त" इत्यादिश्रुतेश्च कार्यत्वमिति वाच्यम्। न केवलं पुरुषोच्चरितत्वमात्रेण पौरुषेयत्वम् श्वासप्रश्वासयोः सुषुप्तिकालयोः पौरुषेयत्वव्यवहाराभावात्। किन्तु प्रज्ञापूर्वकत्वेनैव तत्त्व वाच्यम्। वेदास्तु निश्वासवदेवास्य परमात्मनः सकाशात्प्रादुर्भवन्ति। तथा च श्रुतिः। "अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः" इत्यादिरिति। तथा चानायासादेव तेषां प्रादुर्भावान्न पौरुषेयत्वम् न वा कार्यत्वम्। "वाचा विरूप नित्यया" (तै० सं० २ ६।११) इति श्रुत्या च नित्यत्वस्य स्पष्टमभिधानादिति स्पष्टीकृतं चैतत्पूर्वतन्त्रे "उक्तन्तु शब्दपूर्वत्वम्" (जै० सू० १।१।२९) इति सूत्रे। एतच्च तत एवावगन्तव्यमतोऽत्र सङ्क्षेपः॥२९॥

## समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ।१।३।३०।

नन्वेवमवान्तरप्रलये सतीन्द्रादिव्यक्तीर्वेदशब्देभ्य एव प्रजापतिरसंस्मृत्य तत्तदर्थाश्चावगम्य विरचयेत् तथा सृष्टौ वेदनित्यत्वमप्युपपद्यते परं प्राकृतप्रलये तु भूराद्यखिललोकतत्कारणीभूतमहदहङ्कारादीनां समेषां विनष्टत्वात्तदानीं स्रष्टुरप्यभावात्कथं वेदशब्देभ्यो जगद्रचनावैचित्र्यम् ? कथन्तरां विनिष्टस्य वेदस्य नित्यत्वम् ? तथा च कथं वेदशब्दपूर्वकत्वं सृष्टेः स्यादिति शङ्कायामाह–समानेत्यादिकम् । प्राकृतप्रलयावसाने पुनर्जगत्सृष्ट्यावृत्तावपि न कश्चिद्विरोधः । कुतः ? सृज्यानां पूर्वोक्तसमाननामरूपत्वात् । आदिसर्गेऽपि परमात्मा स्वस्मिंल्लीनस्य जगतः पूर्वसंस्थानं स्मरन् "बहु स्याम् प्रजायेय" (छा० ६।२।३) इति सङ्कल्प्याखिलचिद्रूपं जगत्सूक्ष्मरूपेणावस्थितं यत्तन्महदादिब्रह्माण्डं चतुर्मुखान्तं यथापूर्वं सृष्ट्वा प्राक्कल्पीयस्वरवर्णानुपूर्विमतो वेदाननादिसिद्धानेव प्रकटीकृत्य हिरण्यगर्भायोपदिश्य देवाद्याकारजगत्सर्गं यथापूर्वं नियुज्य तदन्तर्यामिस्वरूपेण स्वयमवस्थायाखिलगन्मण्डले व्याप्नोति । सत्कार्यवादमभ्युगच्छतामयं वैदिकः पन्थाः । गतकल्पीयवेदस्य तादृशानुपूर्वीमत एवास्यां सृष्टावपि संस्मृत्योपदिष्टत्वादपौरुषेयत्वमप्यक्षतम् । अपरिमितानन्तशक्तिमतः परमात्मनः कारणत्वे सर्वमिदमुपपद्यते । एतत्सर्वं श्रुतिस्मृतिभिश्चावगम्यत इत्याह–दर्शनात्स्मृतेश्चेति दर्शनं श्रुतिः "तत्सृष्ट्वा तदेवानुप्राविशत्" (तै० २।६।) यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" (श्वे० ६।१८।) इति श्रुतिर्ब्रह्माणमुत्पाद्य तस्मैवेदानुपदिशतीत्यर्थं स्पष्टमाह । तथा "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" (ऋ० सं० १०।१९०।३) इति श्रुतिर्यथा पूर्वं प्रलयात्पूर्वं सृष्टौ यथा सूर्यचन्द्रमसादिसर्वं जगदासीत्तथैवोत्तरसृष्टौ तत्सर्वमकल्पयद्ब्रह्मेत्यभिधत्ते । तथा "तत्र सुप्तस्य देवस्य नाभौ पद्ममजायत । तस्मिन्पद्मे महाभाग ! वेदवेदाङ्गपारगः । ब्रह्मोत्पन्नस्स तेनोक्तः प्रजा सृज-

महामते !। इत्याद्याः स्मृतयः ।

एवं श्रीवाल्मीकीये-

"संक्षिप्य हि पुरा लोकान्मायया स्वयमेव हि ।

महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः । वा०रा०उ०स०१०४।४।

पद्मे दिव्यार्कसंकाशं नाभ्यामुत्पाद्य मामपि ।

प्राजापत्यं त्वया कर्म मयि सर्वं निवेदितम् । वा०रा०उ०स०१०४।७।

सोऽहं संन्यस्तभारो हि त्वामुपासे जगद्गुरुम् ।

रक्षां विधत्स्व भूतेषु मम तेजस्करो भवान् । वा०रा०उ०स० १०४।८।

ततस्त्वमपि दुर्धर्षात्तस्माद्भावात्सनातनात् ।

रक्षां विधास्यन् भूतानां विष्णुत्वमुपजग्मिवान्। वा०रा०उ०स०१०४।९।

अदित्यां वीर्यवान् गर्भः भ्रातॄणां हर्षवर्धनः ।

समुत्पन्नेषु कार्येषु तेषां साह्याय कल्पसे । वा०रा०उ०स० १०४।१०।

सत्वं वित्रास्यमानासु प्रजासु जगतां वर ।

रावणस्य वधाकांक्षी मानुषेषु मनो दधाः । वा०रा०स०उ०१०४।११

इत्येवं महता प्रकरणेनोक्तम् । तदर्थश्च प्राकृतप्रलयान्त आदिसर्गार्थं त्वं महार्णवे शयानस्सन् नारायणसंज्ञामवाप्य नाभ्यां मामुत्पाद्य प्राजापत्यं सर्वं कर्म मयि निवेद्य ततस्त्वदुपासकेन मया प्रजारक्षणार्थं प्रार्थितो विष्ण्वादिरूपेणाविर्भूय तद्रूपेणावध्यस्य रावणस्य वधाकांक्षी त्वं मानुषेषु मनो दधाः। स्वेनैव सनातनेन रूपेणाविर्भूतोसीति श्रीरामं प्रति ब्रह्मणो वचनाच्च परमात्मनियोगपूर्वक एव प्रजापतेर्व्यापारस्तत्कर्तृकञ्चेदमिन्द्रादिरूपं जगदित्यवगम्यते ।

एवमेवमन्याः स्मृतयोऽप्याहुः ।

ऋषीणां नामधेयानि यथा वेदश्रुतानि वै ।

तथा नियोगयोग्यानि ह्यन्येषामपि सोऽकरोत् । वि०पु० १।५।६४।

यथर्तुष्वृतुलिङ्गानि नामरूपाणि पर्य्यये ।

दृश्यन्ते तानि तान्येव तथा भावा युगादिषु । वि०पु० १।५।६५।

करोत्येवं विधां सृष्टिं कल्पादौ स पुनः पुनः ।
सिसृक्षाशक्तियुक्तोऽसौ सृज्यशक्तिप्रचोदितः । वि० पु० १।५।६६।

एवमनेकश्रुतिस्मृतिप्रमाणाद्देवादीनामप्यर्थित्वसामर्थ्ययोः सम्भवात्तेषामपि ब्रह्मविद्यायामधिकारोस्तीति सिद्धम् ॥३३॥

## * अथ मध्वधिकरणम् ॥८॥

## मध्वादिष्वसम्भवादनधिकारं जैमिनिः ।१।३।३१।

ब्रह्मविद्यायां देवादीनामप्यधिकार इति सामान्येन प्राक् चिन्तितम् । परं यत्र मध्वादिषु विद्यास्वेकस्या देवताया उपास्यत्वं तस्या एव चोपासकत्वमिति श्रूयते तत्र तासामनधिकार इति जैमिनिराचार्यो मन्यते । कुतः ? असम्भवात् ।

"असौ वा आदित्यो देवमधु" (छा० ३।१।१) इत्यादावादित्यादीनामेव देवमधुत्वादुपास्यत्वं तेषामेव च देवतात्वादुपासकत्वमित्येकस्यैवोभयरूपत्वं न सम्भवति । विरुद्धत्वात् न हि प्राप्यस्य प्रापकत्वं क्वचिदपि दृष्टचरम् । मनुष्यादीनान्तूपासकत्वं फलावाप्तये सम्भवतीति मध्वादिविद्यासु नास्ति देवादीनामधिकार इति जैमिनेराचार्यस्य मतम् । मध्वादिष्वित्यादिपदेन यासु विद्यासु देवानामुपास्यत्वं प्रतीयते "आदित्यो ब्रह्मेत्यादेशः" (छा० ३।१९।१) इत्येवमाद्यासु ताः सर्वा गृह्यन्त इति ॥३१॥

## ज्योतिषि भावाच्च ।१।३।३२।

"तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" (बृ० ६।४।१४) इति

---

* मध्वादिषु च विद्यासु सुराणामधिकारिता । अस्ति वा नास्ति वेत्यत्र पूर्वपक्षतयोच्यते ॥१३॥ आदित्यो देवमध्वादौ सूर्योपास्यत्वदर्शनात् । मध्वादिष्वधिकारो न देवानामिति जैमिनिः ॥१४॥ एकत्रासम्भवो यस्मादुपास्योपास्तृभावयोः । सूर्यान्तर्याम्युपासनेनास्तीति बादरायणः ॥१५॥

ज्योतिषां ज्योतिषि परस्मिन् ब्रह्मणि देवानामुपासनायाः सद्भावाच्च परब्रह्मोपासकानां सूर्याद्युपासनानुपपत्तेर्नास्ति देवानां मध्वादिविद्यास्वधिकार इति पूर्वोदितस्य जैमिनेर्मतम् ॥३२॥

## भावन्तु बादरायणोऽस्ति हि ।१।३।३३।

तु शब्दः पूर्वपक्षं व्यावर्तयति । मध्वादिविद्यास्वपि तदुपासकानामादित्यवस्वादीनां देवानामधिकारभावं भगवान् बादरादणाचार्यो मन्यते । हि यस्मादादित्यवस्वादीनामपि स्वान्तर्यामिपरमात्मोपासनजन्यादित्यादिप्राप्तिपूर्वकमस्त्येव परब्रह्मणः प्राप्तिकामना । "स यावदादित्यः पुरस्तादेता पश्चादस्तमेता वसूनामेव तावदाधिपत्य स्वाराज्यं पर्येता" (छा० ३।६।४) इति वस्वाद्याधिपत्यस्वाराज्यस्य सूर्योदयास्तप्रदेशपर्य्यन्तत्वश्रवणात् । वस्वादीनां भोग्यस्य परिमितत्वेन सातिशयत्वेन च ततोऽपि विरागपूर्वकं निरवधिकनिरतिशयानन्दावाप्तये ब्रह्मप्राप्तीच्छया तदुपासनेन कल्पान्तरे वस्वादित्यं प्राप्य तदन्ते परब्रह्मप्राप्त्यवगमात् । तस्मादत्र कार्यकारणोभयावस्थब्रह्मोपासनमेव विधीयते । 'अथ तत उर्ध्वं उदेत्य" (छा० ३।११।१) इत्यतः प्राक्कार्यावस्थस्य तद्वाक्येन च कारणावस्थस्य ब्रह्मण एवोपास्यत्वमुपदिश्यते । एवं "एतामेवं ब्रह्मोपनिषदं वेद" (छा० ३।११।३) इत्यनेन समग्राया मधुविद्याया ब्रह्मोपनिषत्त्वश्रवणाद् ब्रह्मप्राप्तिपर्यन्ततत्फलस्य श्रवणाच्चादित्यांशस्य विधीयमानमुपासनं ब्रह्मण एवेति निश्चीयते । तथा सति "तं देवा ज्योति" रित्यस्यापि सामञ्जस्यम् । तस्मादस्त्येव मध्वादिषु विद्यासु देवादीनामप्यधिकार इति सिद्धम् ॥३३॥

### * अथापशूद्राधिकरणम् ॥६॥

उक्तं ह्येतन्मनुष्याणां देवादीनाञ्च ब्रह्मविद्यायामधिकार इति ।

---

* ब्रह्मविद्याधिकारः किं शूद्रस्यास्त्युत नैव हि । अर्थित्वेनास्ति, नास्त्येव सामर्थ्यादिरभावतः ॥१६॥

इदानीं शूद्रस्यापि मनुष्यत्वाविशेषात्तस्याप्यधिकारः स्यान्न केवलं त्रैवर्णिकस्यैवेतीमां शंकामपाकर्तुमधिकरणमिदमारभ्यते ।

## शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ।१।३।३४

यथा किलार्थित्वसामर्थ्ययोः सत्वात्त्रैवर्णिकानां मनुष्याणां देवादीनाञ्चाधिकारस्तथैव शूद्रस्याप्यधिकारो ब्रह्मविद्यायां स्यात् तस्यापि तत्सम्भवात् । किञ्च "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" (तै० सं० ७।१।१।६) इति कर्मणि निषेधवत् 'शूद्रो ब्रह्मविद्यायामनवक्लृप्तः" इति विशेषेण निषेधस्याश्रुतत्वात् । वेदाध्ययनसाध्याहवनीयाद्यभावेनाग्निसाध्यकर्मानधिकारेऽपि ब्रह्मोपासनस्य मनोमात्रनिर्वर्त्यत्वेन शूद्रस्यापि देवादिवदेवाधिकारस्य सम्भवात् । न चानधीतवेदान्तस्यानवगतोपासनक्रियाकलापस्य कथमुपासनेऽपि प्रवृत्तिरिति वाच्यम् । वेदान्ताद्यध्ययनाभावेऽपीतिहासपुराणश्रवणादिभिरप्युपासनावगतेस्तत्सामर्थ्यस्य सम्भवात् । इतिहासादिश्रवणन्तु शूद्रस्यापि सम्भवति । तथा च भारते "श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः" (शा० मो०) इति । अर्थित्वन्तु परमपुरुषार्थलक्षणनिरतिशयानन्दे मोक्षे कस्य नाम चेतनावतो न भवेत् । दृश्यतेऽपि चेतिहासपुराणेषु विदुरादीनां ब्रह्मनिष्ठत्वम् । एवं छान्दोग्ये श्रुतावपि संवर्गविद्यायां ब्रह्मविद्याधिकारः शूद्रस्याप्यवगम्यते । "अह हारेत्वा शूद्र तवैव सह गोभिरस्तु" (छा० ४।२।३) इति जानश्रुतिं शूद्रशब्देनामन्त्र्य तम्प्रति ब्रह्मविद्योपदेशश्रवणाच्छूद्रस्यापि ब्रह्मविद्यायामधिकार इति प्राप्ते–

अभिधीयते । न हि शूद्रस्योपनयनाभावेनानधीतवेदस्य वेदवाक्यविचारसाध्यब्रह्मविद्यायामधिकारोऽस्ति । उपासनस्य मनोमात्रनिर्वर्त्यत्वेऽप्यनधीतवेदस्य शूद्रस्य वेदवाक्यविचारैकलभ्यब्रह्मस्वरूपतदुपासनोपाययाथार्थ्यज्ञानासम्भवेन शास्त्रीयसामर्थ्याभावात् । न चैवं सति देवानामप्यधिकार इति वाच्यम् । तेषां स्वयं प्रभातवेदत्वान्न दोष इति ब्रूमः । ब्रह्मविद्यायाश्च "तं त्वौपनिषदं पुरुषं पृच्छामि" (बृ० ३।६।२६) इत्युपनिषद्रूपवेदान्तनामैकगम्यत्वश्रवणात् । "नावेदविन्मनुते तम्बृहन्तम्" इत्या-

म्नायानधिगतवतो ब्रह्मयाथात्म्यज्ञाननिषेधाच्च । यत्तूक्तमितिहासपुराण-श्रवणादिभिः सामर्थ्यं ब्रह्मविद्यायां भविष्यति शूद्राणाम् । तदपि न । इति-हासादेः श्रवणस्य केवलं दुरितनिवर्तकत्वेन ब्रह्मविषयकयथार्थज्ञानाजनक-त्वात् । दुरधिगमवेदार्थविशदीकरणैकप्रयोजनप्रवृत्तयोरितिहासपुराणयो-रपि वैदिकाधिकारानुगुण्येनैव ब्रह्मोपासनसामर्थ्यं न तु स्वातन्त्र्येणेति । विदुरप्रभृतीनान्तु जन्मान्तरवासनया ज्ञानलाभाद् ब्रह्मनिष्ठत्वम् ।

श्रीभगवद्गीताया ब्रह्मविद्यात्वेऽपि "इदन्ते नातपस्काय नाभक्ताय कदाचन । न चाशुश्रूषवे वाच्यम्" (गी० १८।६७) इति तपोऽधिकार-रहितं शूद्रम्प्रति तदुपदेशवर्जनात् ।

य इदं परमं गुह्यं, मद्भक्तेष्वभिधास्यति ।
भक्ति मयि परां कृत्वा मामेवैति न संशयः । (गी. १८।६८)

इति भगवद्भक्तेषु तदभिधानस्योपदेशाच्च । श्रुतावपि "अह हारेत्वा शूद्र तवैव सह गोभिरस्तु" 'आजहारेमाश्शूद्रानेनैव मुखेनालापयिष्यथाः" (छा० ४।२।५) इतीदं गवादिरूपं धनं तवैवास्तु नापेक्षितमित्यर्थः । अने-नैव द्वारेण सेवनादिकमन्तरेण त्वद्वाञ्छितमिदं ब्रह्मोपदेशवाक्यमाला-पयिष्यसीतिभावः । अत्र शूद्रेत्यामन्त्रणमपि न चतुर्थवर्णाभिप्रायेण । किन्तु हंसोक्तात्मानादरश्रवणादस्य जानश्रुतेः शुग् संजाता । तदैव हंस-कृतात्मानादरकाले रैक्वम्प्रत्याद्रवणात् । स च रैक्वर्षिस्तस्याद्रवणं शोके-नाभूदिति स्वयोगबलेनावगम्य तदेव हेतूकृत्य स्वसर्वज्ञत्वज्ञापनाय शूद्रेत्या-मन्त्रितवान् न चातुर्थिकवर्णतयेति स्पष्टमेवावगम्यते । शूद्रशब्दश्च शोका-र्थकशुच्धातोरौणादिके "शुचेर्दश्च" ( उ० सू० सं० १८६ ) इति रकि चस्य दत्वे दीर्घे च शोचतीति शूद्र इति व्युत्पत्तिको निष्पद्यते । तस्मै "वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति" (छा० ४।३।१) इत्यादिकमुपदिदेश । यतः शोकेन जानश्रुतीरैक्वम्प्रति दुद्राव तत एव शूद्र इति तेनोक्त न चतुर्थवर्णापेक्षयेति ।।३४।।

## क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् १।३।३५।

इतश्च न जानश्रुतिर्जातिशूद्रः। कुतः ? उपक्रमवाक्य एव क्षत्रियत्वावगतेः। "जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस" (छा० ४।१।१) इत्युपक्रम एव श्रद्धादायित्वबहुपक्वान्नदायित्वरूपक्षत्रियधर्मप्रतीतेः। एवं "स ह सञ्जिहान एव क्षत्तारमुवाचे" ति क्षत्तृप्रेषणात् गोनिष्कारथकन्यादिदानाच्च क्षत्रियत्वमवगम्यते न शूद्रत्वम्। एवमुपक्रमवाक्यगतानि क्षत्रियत्वसाधकानि लिङ्गान्युक्त्वोपसंहारवाक्यस्थान्यपि तानि दर्शयति। उत्तरत्र चैत्ररथेनेत्यादिना। जानश्रुतिः क्षत्रिय एव। कुतः ? उत्तरत्र संवर्गविद्यावाक्यशेषे चैत्ररथेन प्रसिद्धक्षत्रियेणाभिप्रतारिसंज्ञकेन सह समभिव्याहारात्मकलिङ्गात्। प्रायेण सहचारः सजातीयानामेव भवतीति भावः। संवर्गविद्यावसाने श्रूयते–"अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे" (छा० ४।३।५) इति। अत्राभिप्रतारिणश्चैत्ररथत्वं कापेयसाहचर्य्यादवगम्यते। कापेययोगश्चोपात्तवाक्येऽभिलक्ष्यत एव। एवं "एतेन वै चित्ररथं कापेया अयाजयन्" (ताण्ड्यब्रा० २०।१२।५) इत्यस्याञ्च श्रुतौ कापेयानां चित्ररथपुरोहितत्वं प्रसिद्धम्। एतेन द्विरात्रेणेत्यर्थः। प्रायेण समानान्वया एव समानान्वयानां याजका भवन्तीति कापेयस्य चित्ररथपुरोहितस्य संयोगादभिप्रतारिणश्चैत्ररथत्वमवगम्यते। भवत्वभिप्रतारिणश्चैत्ररथत्वेऽपि कथं क्षत्रियत्वमितिचेत्तदुच्यते। "तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायत" (शतपथ. ११।५।३।१३) इति श्रुतौ तत्क्षत्रियत्वस्य प्रसिद्धत्वात्। तदेवमभिप्रतारिणः क्षत्रियत्वे निश्चिते तेन सह समानविद्यायां पठितत्वरूपलिङ्गाज्जानश्रुतेरपि क्षत्रियत्वं निर्विवादसिद्धम् ॥३५॥

इतोऽपि न जातिशूद्रस्य ब्रह्मविद्यायामधिकार इत्याह–

## संस्कारपरामर्शात्तदभावाभिलापाच्च ।१।३।३६।

पूर्वन्त्रासामर्थ्यान्नाधिकारो ब्रह्मविद्यायामिति युक्त्यादिभिस्समर्थितमिदानीन्तु ब्रह्मविद्याङ्गोपनयनाभावान्न तत्राधिकार इत्युच्यते। "त होपनिन्ये" (ग्रा० श्रो०) "उप त्वा नेष्ये न सत्यादगा इति तमुपनीय" (छा० ४।४।५) इत्येवमादिषु विद्याङ्गोपनयनादिसंस्कारपरामर्शात्। "न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति" (मनु० १०।१२६) "शूद्रश्चतुर्थो वर्ण एकजातिर्न च संस्कारमर्हति" (गौत० १० अ० ९ सू०) इत्यादिना तदभावाभिलापाच्चोपनयनादिसंस्काराभावाभिलापात्कथनाच्चेत्यर्थः ॥३६॥

## तदभावनिर्धारणे च प्रवृत्तेः ।१।३।३७।

"नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोपत्वा नेष्ये" (छा० ४।४।५) इति। तस्य शूद्रत्वस्याभावनिर्धारणे सत्येव जाबालम्प्रति गौतमस्य विद्योपदेशप्रवृत्तेश्च न शूद्रस्य विद्यायामधिकारः ॥३७॥

## श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ।१।३।३८।

इतोऽपि नाधिकारः शूद्रस्य। यतस्तस्य वेदश्रवणतदध्ययनतदर्थज्ञानतदनुष्ठानप्रतिषेधः स्मर्यते। तत्र श्रवणप्रतिषेधः-"अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वोच्छेदो धारणे शरीरभेदः" (गौतमस्मृ० २।१२।३) इति। अध्ययनप्रतिषेधोऽपि "पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यमि" ति। "न शूद्राय मतिं दद्यात्" "न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्" (मनुस्मृ० ४।८०) इत्यर्थज्ञानप्रतिषेधः। एवं "द्विजातीनामध्ययनमिज्यादान" मित्यनेन तदर्थानुष्ठानस्यापि प्रतिषेधात्। दानशब्दोत्र नित्यदानपरो नैमित्तिकदाने शूद्रस्याप्यधिकारात्। विदुरधर्मव्याधादीनान्तु पूर्वजन्मानुष्ठितश्रवणादिना स्वतो भगवदुपासनारूपज्ञानोत्पादान्न विरोधः। तस्मान्नाधिकारो शूद्रस्य ब्रह्मविद्यायामिति सिद्धम् ॥३८॥

## * अथ कम्पनाधिकरणम् ॥१०॥

## कम्पनात् ।१।३।३९।

एवं प्रासङ्गिकमधिकारविचारं परिसमाप्य प्रकृतमेव वाक्यार्थविचारं प्रवर्तयति । तत्र काठके श्रूयते-"यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति" (का० २।३।२) इति तत्र संशयः । किं प्राणशब्देन मुख्यः प्राण उच्यत आहोस्विज्जगत्कारणं ब्रह्मेति । किं युक्तम् ? प्राणश्रुतिबलान्मुख्य प्राण एव । कुतः ? एजृ कम्पन इत्यस्माद्धातोरेजतीति रूपम् । कम्पनधर्मश्च वायोरेव दृष्टः । वज्रमिति चाशनेः प्रसिद्धिः । तथा च वायुर्यदा पर्जन्यप्रापकतया तिष्ठति विद्युतः स्वभावादेव सम्भवन्ति । इति वायोर्महत्त्वमत्र प्रतिपाद्यमानत्वात्प्राण एवोक्त इति प्राप्तेऽभिधियते, अस्मिन्वाक्ये परमात्माऽसाधारणलिङ्गानां सर्वचेष्टाहेतुत्वसर्वोत्पादकत्ववाय्वादिभयजनकत्वमोक्षप्रदत्वादीनां श्रवणात्प्राणशब्दाभिहितः परमात्मैव । कुतः ? कम्पनात् । मुख्यप्राणादिसहितस्य कृत्स्नस्य जगतः कम्पनात् । जीवनादिचेष्टाहेतुत्वात् । "यस्य प्राणः शरीरम्" ( बृ० ३।७।१५ ) इति श्रुतिः शरीरिणः परमात्मन आयत्ताश्शरीररूपप्राणस्य स्वरूपस्थितिप्रवृत्तीराह । तथा "प्राणस्य प्राणम्" (बृ० ४।४।१८) इत्यनया श्रुत्या मुख्यप्राणस्यापि प्राणम्ब्रह्मोच्यते । एवं "न प्राणेन नापानेन मर्त्यो जीवति कश्चनः । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ" (का० २।४।५) इति प्राणापानयोः सर्वजगच्चेष्टाहेतुत्वम्प्रतिषिध्य परमात्मन एव तदिति स्पष्टमभिहितम् । किञ्चास्य वाक्यस्य पूर्वं "तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन एतद्वै तत्" (का० २।६।१)

* "प्राण एजति" वाक्ये च प्राणशब्देन किं मतम् । प्राणो वा ब्रह्म वा ? प्राणः प्राणश्रुतिबलान्मतः ॥१७॥ सर्वस्य कम्पनाद् ब्रह्म 'प्राणः प्राणस्य' दर्शनात् ।

इति मन्त्रे ब्रह्मपदश्रवणादत्र प्राणपदाभिहितः परमात्मैव। उत्तरत्रापि "भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" ( का० २।६।३ ) इति श्रूयते। अस्य ब्रह्मणो भयादग्न्यादयः स्वस्वव्यापारे नियमेनानुवर्तन्ते राज्ञो भयाद्भृत्यादयो यथा। तथा च कम्पनवाक्यपूर्वोत्तरवाक्ययोर्ब्रह्मपरत्वदर्शनात्तयोर्मध्यगतस्यापि संदंशपतितन्यायेन ब्रह्मपरत्वमभ्युपेयम्। तस्मादेतद्वाक्यं जगत्कारणोपास्यब्रह्मपरमिति सिद्धम् ॥३९॥

## * अथ ज्योतिर्दर्शनाधिकरणम् ॥११॥

## ज्योतिर्दर्शनात् ।१ ३।४०।

छान्दोग्ये प्रजापतिविद्यायां श्रूयते—"एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरूपं सम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" ( छा० ८।१२।३ ) इत्यादि। तत्र संशयः। किमत्र ज्योतिःशब्देन सूर्यादितेज उच्यत आहोस्विद्ब्रह्मेति। किं युक्तम्? सूर्यादितेज एव प्रसिद्धत्वात्। यथा "यदतः परो दिवो ज्योतिर्दीप्यते" (छा० ३।१३।७) इत्यादौ प्रकरणादिना ज्योतिः शब्दो ब्रह्मणि वर्तते तथाऽत्र प्रकरणादिकं किमपि ब्रह्माभिधायकं गमकं नास्तीति प्राप्तेऽभिधीयते।

परमात्मैव ज्योतिःशब्दाभिहितः। कुतः? दर्शनात्। उपक्रमवाक्ये "एष आत्माऽपहतपाप्मा" (छा० ८।७।१) इति ब्रह्मणः श्रवणात्। प्रकृत वाक्येऽपि "परं ज्योतिः" इति ज्योतिषः परत्वं "उत्तमः पुरुषः" इति च पुरुषोत्तमत्वं परमात्मन एव सम्भवति। "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य

---

* 'परं ज्योतिरुपेत्या' दौ ज्योतिषा किं निगद्यते ॥१८॥ भास्करादिकतेजो वा ब्रह्म वा? किं मतं शुभम्। आद्यं तथा प्रसिद्धत्वाद् ब्रह्मोपक्रमदर्शनात् ॥१९॥

भासा सर्वमिदं विभाति" (का० २।५।१५) इति श्रुत्या सूर्यचन्द्रादीनामपि स एव प्रकाशक इति तस्यैव परज्योतिःस्वरूपत्वम् । एवं "अथ यदतः परो दिवो ज्योतिर्दीप्यते" (छा० ३।१३।७) "तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" ( बृ० ६।४।१६ ) इत्येवमादिषु ब्रह्मण एव ज्योतिः शब्दवाच्यत्वदर्शनादिति । तस्मादत्र ज्योतिःपदेनाऽभिधेयम्ब्रह्मैवेति सिद्धम् ॥४०॥

* अथार्थान्तरत्वादव्यपदेशाधिकरणम् ॥१२॥

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ।१।३।४१।

"आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा" ( छा० ८।१०।१ ) इति छान्दोग्ये समाम्नायते । तत्र सन्देहः । किमत्राकाशपदाभिधेयो भूताकाश उत मुक्तात्मा आहोस्वित्परमात्मेति । किं युक्तम् ? रूढ्या भूताकाशः । नामरूपयोर्निर्वहणमपि तस्यावकाशदानेन सम्भवत्येव । मुक्तात्मा वा स्यात् । कुतः ? "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि" (छा० ८।१३।१) इति पूर्वं मुक्तात्मन एव प्रकृतत्वात् । तस्यैव च नामरूपविनिर्मुक्तस्य "ते यदन्तरा" इत्यभिहितत्वात् । पूर्वावस्थायां नामरूपनिर्वहणमपि तस्य सम्भवत्येवेति प्राप्तेऽभिधीयते ।

आकाशोऽर्थान्तरत्वादिव्यपदेशादिति । आकाशः परमात्मा कुतः ? 'आकाशो ह वै नामरूपयोर्निर्वहिता' (छा० ८।१४।१) "ते यदन्तरा" "तद्ब्रह्म" इत्यादिनिर्देशादस्याकाशस्य नामरूपभिन्नत्वार्थान्तरत्वव्यपदेशात् । नामरूपभिन्नत्वेन ब्रह्मत्वव्यपदेशाच्च । न हि नामरूपान्तःपातिनो

---

* 'आकाशो ह' श्रुतावत्र ह्याकाशेन पदेन किम् । मतं भूतोऽथवा मुक्तो ब्रह्म वा ? भूत एव हि ॥२०॥ रूढ्याऽवकाशदत्वेन निर्वाही नामरूपयोः । प्रकृतत्वात् स मुक्तात्मा, ब्रह्म ह्यर्थान्तरत्वतः ॥२१॥

भूताकाशस्य नामरूपार्थान्तरत्वमुपपद्यते । तथा "तन्नामरूपाभ्यां व्याक्रियत" (बृ० १।४।७) "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" (छा० ६।३।२) इत्यादिश्रुतिनिर्दिष्टस्य परमात्मनिष्ठनामरूपनिर्वोढृत्वरूपस्य जगद्व्यापारस्य "जगद्व्यापारवर्ज्जं" मिति मुक्तानां प्रतिषेधात । बद्धानान्तु स्वयं कर्मपरवशानां नामरूपभजमानत्वान्नात्रत्याकाशपदबोद्धयत्वमपि तु तन्निर्वोढृत्वं परमात्मन एव । यदुक्तं "अश्व इव रोमाणी" ति श्रुत्यनन्तरमस्य वाक्यस्योक्तत्वादत्र मुक्तात्मैवाकाशपदग्राह्य इति । तन्न, ब्रह्मलोकमभिसम्भवामीति ब्रह्मलोकपदवाच्यपरब्रह्मणोऽनन्तरमेवाभिहितत्वात् । आदिशब्देन "तद्ब्रह्म" "तदमृत" मित्याद्युक्तो ब्रह्मत्वादिव्यपदेशो ज्ञेय इति ॥४१॥

"नन्वयमात्मा ब्रह्म" "तत्त्वमसि" "नेह नानास्ति किञ्चने" त्येवमादिभिः श्रुतिभिर्जीवपरमात्मनोरैक्योपदेशान्नानात्वनिषेधेन द्वैतप्रतिपेधान्न जीवादर्थान्तरभूतः परमात्मेत्याशङ्क्याह ।

## सुषुप्त्युत्क्रान्त्योर्भेदेन ।१।३।४२।

व्यपदेशादित्येकदेशोऽनुवर्तते । सुषुप्त्युत्क्रान्त्योर्भेदेनार्थान्तरत्वेन परमात्मनो व्यपदेशाद् भिन्न एव प्रत्यगात्मनः परमात्मा । तथा चाम्नायते "कतम आत्मा योऽयं विज्ञानमयः प्राणेषु" ( बृ० ४।३।७ ) इत्युपक्रम्य "तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किंचन वेद नान्तरम्" (बृ० ४।३।२१) इत्यनेन वाक्येन सुषुप्तौ प्रत्यगात्मनः परमात्मना परिष्वक्तोऽभिधीयते । एवमुत्क्रान्तौ श्रूयते "एवमेवायं शारीर आत्मा प्राज्ञेनात्मनान्वारूढमुत्सर्जन्याति" (बृ० ४।३।३५) इति । अत्रापि प्रत्यगात्मनो व्यपदेशात् । तस्मात्प्रत्यगात्मनो भिन्नोऽर्थान्तरभूत एव परमात्मा ॥४२॥

## पत्यादिशब्देभ्यः ।१।३।४३।

इतः प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मा। यत उपसंहारवाक्ये "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपालः" (बृ० ४।४।२२) इति श्रूयते। एतेभ्यः पत्यादिशब्देभ्यश्चायं परमात्मा प्रत्यगात्मनोऽर्थान्तरभूत एव। न हि सर्वाधिपतित्वादयः परमात्मा साधारणधर्मा मुक्तावस्थेऽपि प्रत्यगात्मनि सम्भवन्ति। अतो मुक्तात्मनोप्यर्थान्तरभूतः परमात्माकाश इति सिद्धम् ॥४३॥

इति श्रीमगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये प्रथमाध्यायस्य तृतीयः पादः ॥३॥



श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये

# प्रथमाध्यायस्य चतुर्थः पादः ।

## * अथानुमानिकाधिकरणम् ॥१॥

एवं त्रैपादिकेन ग्रन्थेनाखिलहेयप्रत्यनीकं जगज्जन्मादिकारणमचिद्वस्तुनः प्रधानादेर्बद्धमुक्तादिरूपचेतनाच्च विलक्षणं सर्वज्ञं सर्वशक्ति सत्यसङ्कल्पं समस्तकल्याणगुणसागरं सर्वान्तरात्मभूत निरङ्कुशैश्वर्यं स्वाभिमतानुरूपैकरूपमचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयोज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तगुणनिधिदिव्यदेह पुण्डरीकदलामलायतेक्षणं पुंस्त्रीक्लीबलक्षणानामजडात्मकानां सर्वेषां चेतनानामविशेषेण दृष्टचित्तापहारक परमपुरुषं श्रीरामाख्यम्परंब्रह्म वोपेयं तदनुभवलक्षणविलक्षणमोक्षोपायतया तदेव जिज्ञास्यमित्यभिहितम् । ब्रह्मकारणवाद एव वेदान्तवाक्यानां सामञ्जस्यमित्यपि सुनिश्चितम् ।

इदानीं कासाञ्चिच्छाखानां केषुचिद्वाक्येषु ब्रह्मकारणत्वप्रतिपादनपरेष्वेव कापिलतन्त्राभ्युपगतप्रधानकारणत्वप्रतिपादकलिङ्गाभासोऽप्युपलभ्यत इति तन्निराकृत्य परस्य ब्रह्मणः कारणत्व एव तेषां सामञ्जस्यमिति तुरीयेण पादेन व्यवस्थाप्यते ।

तत्रानुमानिकपदबोधितस्य कापिलतन्त्रसिद्धस्य प्रधानस्य शब्दप्रतिपाद्यत्वमेव न सम्भवतीत्यनेनादिमेनाधिकरणेनाभिधीयते—

---

* 'इन्द्रियेभ्यः परा ह्यर्था' अत्रावयवेन कापिलम् । प्रधानमभिधेयं वा नाथवा ? किंवरं मतम् ? ॥१॥ 'महतः पर' मित्युक्तेराद्यमेव मनोहरम् । इतिचेदुच्यते मैवं कुतश्चेदभिधीयते ॥२॥ ततो रूपकविन्यस्ताया गृहीतेः श्रुतेश्च हि ।

## आनुमानिकमप्येकेषामितिचेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ।१।४।१।

काठके हि श्रूयते–इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः । का० १।३।१०।
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः । का० १।३।११।

इति । तत्र सांख्यस्मृतिप्रसिद्धं प्रधानमेवाव्यक्तपदेनेहाभिधीयते । कुतः ? "महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्" इत्यत्र तन्मतप्रक्रियोपन्यासात् । न व्यक्तमव्यक्तं शब्दादिरहितमेवाव्यक्तमिति तत्स्मृतिप्रसिद्धमेवोच्यते । पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधाच्चाव्यक्तमिह प्रधानमेव । तदेव चैकेषां शाखिनां शाखासु प्रतिपाद्यमानुमानिकं प्रधानमेव । जगत्कारणमभिधीयतेऽतः स्मृतिन्यायावप्यत्रैवानुग्राहकाविति चेत् । नैवम् । न तावदिहाब्रह्मात्मकं प्रधानमव्यक्तपदेनोच्यते । कस्मात् ? शरीररूपकविन्यस्तगृहीतेः । शरीरस्यैव रूपकेण विन्यस्तस्यात्राव्यक्तपदेन गृहीतेर्ग्रहणात् । प्रकरणेऽस्मिन्नात्मनो भोक्तृतया रथित्वेन शरीरेन्द्रियादीनाञ्च रथादिरूपेण रूपकम्परिकल्प्योपदेशो दृश्यते । तथाहि–

आत्मानं रथिनं विद्धि शरीरं रथमेव च ।
बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च । काठ० १।३।३
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः । का० १। ।४

यस्तु विज्ञानवान्भवति समनस्कः सदाऽशुचिः ।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते । का० १।३।८
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् । का० १।३।६

इत्यादि वचनैर्जितेन्द्रियस्य विष्णुपरमपदप्राप्तिमुक्त्वा तमेव जितेन्द्रियपुरुषप्राप्यभूतमिन्द्रियाद्यव्यक्तान्तेभ्यः परं सर्वान्तरात्मभूतं विष्णुपरमपदशब्दाभिहितं पुरुषं दर्शयति "इन्द्रियेभ्यः परा ह्यर्थाः" इत्यारम्य पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गति"रित्यन्तेन। आत्मानमित्यादेरर्थः। भोक्तृत्वेन प्राधान्यादात्मनो रथित्वं रथस्वामित्वमुक्तं स्थूलशरीरस्य च भोगस्थानतया गौणत्वेन रथसमत्वमुक्तं विवेकाविवेकवृत्तिभ्यां बुद्धिरेव शरीरेन्द्रियद्वारा भोक्तारमात्मनं सुखे दुःखे वोपनयतीति बुद्धेः सारथित्वम्। एवं मनसा प्रग्रहेणाश्वरशनास्थानीयेन युक्तानि हयरूपाणीन्द्रियाणि तेष्विति तेषामिन्द्रियाणां गोचरान् शब्दादिविषयान्प्रति धावन्ति तदन्ते मनोऽपि तान्धावति। "इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते। तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि" (गी० २।६७) इति स्मृतेः। एवमजितेन्द्रियस्य संसरणं 'यस्त्वविज्ञानवान्भवती' त्यभिधाय जितेन्द्रियस्य वैष्णवपदप्राप्तिर्विज्ञानसारथिर्यस्त्वित्यनेनाभिहिता। तथाभूतस्य वैष्णवपदस्य सर्वोत्कृष्टत्वद्योतनायेन्द्रियेभ्यः परा ह्यर्था इति च प्रोच्यते। तत्र यद्यप्यन्तरङ्गत्वादिन्द्रियाणामर्थापेक्षया परत्वं तथापीन्द्रियाणां ग्रहत्वं शब्दाद्यर्थानान्त्वतिग्रहत्वं बृहदारण्यके याज्ञवल्क्यार्तभागसंवादेऽभिहितम्। तस्मादतिग्रहत्वेनार्थानां प्राधान्यमुच्यते "परा ह्यर्था" इति। मनसः सर्वेन्द्रियार्थव्यवहारमूलत्वादर्थेभ्यः परत्वं ततोऽपि च निश्चयात्मकबुद्धिद्वारा विषया भोक्तुरुपकुर्वन्ति न तु संशयात्मकमनो द्वारा। तस्मान्मनसः बुद्धेः परत्वम्। तथा पूर्वं रथित्वेन भोक्तृत्वेन चोक्तस्यात्मनश्च भोगोपकरणभूताया बुद्धेः परत्वं भोगोपकरणस्य भोक्तृपारतन्त्र्याद्बुद्ध्यादेः स्वामित्वाच्चात्मन एव परत्वमुक्तम्। बुद्ध्यादेरध्यक्षत्वादेवात्मनो महत्त्वमुक्तम्। मह्यते पूज्यते बुद्ध्यादिभिः शब्दादिविषयप्रापणद्वारेति महानात्मा। नतु महत्परिमाणाश्रयतयेति बोद्धव्यम्। एवमात्मनोऽपि भोगसम्पादनाय भोगायतनस्याव्यक्तपदाभिधेयस्य शरीरस्य प्रयोजनमस्त्येवेति ततोऽपि परतया रथरूपितं शरीरमुक्तम्। ततोऽपि च सर्वान्तर्यामितया सर्वनियन्तृत्वेन

मुमुक्षूपायोपेयस्वरूपत्वेन चाध्वनः पारभूतस्य परमपुरुषस्य परत्वम् । एवञ्च परमपुरुषसङ्कल्पायत्तस्थितिप्रवृत्तित्वात्समस्तस्य यथोक्तस्येन्द्रियाद्यव्यक्तान्तस्येति तदपेक्षयाऽकिञ्चित्करत्वम् । अतः "सा काष्ठा सा परा गति" रित्युक्तम् । परमात्मन एव परत्वं श्रुत्यन्तरेऽप्यभिहितम् । "तमः परे देव एकीभवन्ति" (सुबाल०) इति । प्रलये तस्मिन्नेव परस्मिल्लय उक्तः । तथा सर्गादौ जगत्सिसृक्षया "तदैक्षत बहुस्याम्प्रजायेय"(छा० ६। २।३) इति संकल्प्य "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि"(छा० ६।३।२) इति च पुनः संकल्प्य सर्वस्य नामरूपे व्याकृत्य स एव सर्वान्पालयति संहरति चेत्यतः सृष्टिस्थितिप्रलयान्तर्गतस्य सर्वस्य चिदचिदात्मकस्य जगतः स्वरूपस्थितिप्रवृत्तीनां परमपुरुषाधीनत्वावगमात् । तथा च मुमुक्षुः सर्वेन्द्रियाणि संयम्य तमेवैकं स्वान्तर्यामिणं परमपुरुषं चिन्तयन्नध्वनः पारं विष्णोः परमपदपदाभिधेयं प्राप्नोतीत्यभिधीयते "सोध्वनः पारमाप्नोती" त्यन्तैर्वाक्यैरिति । दर्शयति च तदनन्तरम्-"एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्धया सूक्ष्मया सूक्ष्मदर्शिभिः" (का० १।३।१२) इति विशुद्धया सूक्ष्मया बुद्धया तस्य दृश्यत्वमुपदिश्य बुद्धेः सूक्ष्मत्वोपायभूतमिन्द्रियवशीकरण प्रकारमाह ।" "यच्छेद्वाङ्मनसीप्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि" । ( का० १।३।१३। ) इत्यादिना । वाक्छन्दे द्वितीयायाः सुपां सुलुगिति लुक् । मनसीति सप्तम्यैकवचनं दीर्घश्छान्दसः । तथा चायमर्थः । वाक्छन्दोपलक्षितानि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च मनसि नियच्छेत् । तन्मनो बुद्धौ । ज्ञानञ्चात्र बुद्धिः । "बुद्धिन्तु सारथिं विद्धि" इति पूर्वं बुद्धेः सारथित्वमुक्त्वा "विज्ञानसारथिर्यस्तु" इतिबुद्धेरेव विज्ञानपदेनोक्तत्वात् । ज्ञानं बुद्धिकर्तरि महत्यात्मनि नियच्छेत् तदिति लिङ्गव्यत्ययेन, तत्कर्तारं महान्तमात्मानं शान्त आत्मनि परस्मिन्पुरुषे प्रकरणोपात्त एव नियच्छेत् । एवंभूतया सारथिरूपया सूक्ष्मया बुद्धया परम पुरुषमन्तर्यामिणं गोचरी-

कृत्य तम्प्राप्नुयादिति भावः। तथा चात्र कपिलकल्पितं प्रधानं न प्रतिपाद्यते पूर्वापरसन्दर्भविरुद्धत्वादिति ॥१॥

## सूक्ष्मं तु तदर्हत्वात् ।१।४।२।

अव्यक्तपदेन प्रत्यक्षतोऽतिव्यक्तस्य शरीरस्य कथं ग्रहणमित्यत आह सूक्ष्मन्त्विति। तुशब्दः शंकानिवर्तकः। स्थूलशरीरारम्भकं मूलकारणं भूतसूक्ष्ममव्याकृतमेव शरीरावस्थमव्यक्तशब्देनाभिधीयते। एकस्यैवाव्यक्तशब्दस्य जन्यजनकोभयवाचकत्वेन भूतसूक्ष्मरूपकारणत्वापेक्षया स्थूलशरीरस्याप्यव्यक्तशब्दवाच्यत्वार्हत्वात् ॥२॥

## तदधीनत्वादर्थवत् ।१।४।३।

नन्वव्याकृतस्यैव सांख्यैः प्रधानत्वाङ्गीकारादव्यक्तशब्देन तस्यैव स्वीकारे प्रधानकारणत्वापत्तिः। "अव्यक्तात्पुरुषः परः। पुरुषान्न परं किञ्चिदि" ति पुरुषायत्तत्वमव्यक्तस्येति कथं सङ्गच्छेतेतिचेत्। नैवम्। "यस्य पृथिवी शरीरम्" "यस्य विज्ञानं शरीरम्" ( बृ० ३।७।३।३२ ) "यस्याव्यक्तं शरीरम्" (सुबाल० ७ खं) इत्येवमाद्याभिः श्रुतिभि व्यक्तादेः सर्वचराचरस्य जगतः परमपुरुषपरमकारणान्तर्यामिशरीरत्वतन्नियम्यत्वाभिधानात्। न परपरिकल्पितस्य स्वातन्त्र्येण कारणत्वम्। यतः "तदैक्षत बहुस्यामि" ति तदीक्षयैवाकाशादिजगदुत्पत्तेः श्रवणात्परमपुरुषशरीरत्वेन च तदधीनस्वरूपस्थितिप्रवृत्तयः प्रधानादयस्तदिच्छानुसारेणैव तत्तत्कार्यं कुर्वन्तीति न प्रधानस्य स्वातन्त्र्येण कारणत्वम्। अतस्तन्मतनिराकरणं वेदान्तदर्शने कृतम्। परमपुरुषायत्ताव्यक्तात्तु जगदुत्पत्तिरिष्यत एव। तथा च श्रुतिस्मृतयः। "अस्मान्मायी सृजते विश्वमेतत्"।

मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्।
मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम्।

गम्भवः सर्वभूतानां ततो भवति भारत । गी. १४। ।
भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा । गी. ७।४।
एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । गी. ७।६।
मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव । गी. ७।७
प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी । वि.पु. ६।४।३९.
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ।
परमात्मा च सर्वेषामाधारः परमेश्वरः । वि.पु. ६।४।४०।

इत्यादिवचनैः परमात्मानमेवाभिन्ननिमित्तोपादानकारणत्वमाहुः । अव्यक्तादीनां परमपुरुषाधीनत्वादेव जगत्कारणत्वेनार्थवत्त्वमिति ॥३॥

इतश्च नानुमानिकं प्रधानमव्यक्तशब्देनाभिधीयते ।

## ज्ञेयत्वावचनाच्च ।१।४ ४।

"व्यक्ताव्यक्तज्ञविज्ञानाद्धि कैवल्यमिति सांख्यमतम् । सत्वपुरुषान्यताख्यानिमन्तरेण न पुरुषस्य कैवल्यं शक्यं विज्ञातुमिति ज्ञेयत्वं तेषां सिद्धयति । अस्मिन् प्रकरणे तु ज्ञेयत्वमव्यक्तस्य नोक्तम् । अव्यक्तशब्दमात्रमत्र पठ्यते । तस्मान्न तान्त्रिकस्याव्यक्तस्येह ग्रहणमिति ॥४॥

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ।१।४।५।

ननु कापिलमेवाव्यक्तमत्र ज्ञेयत्वेन श्रुतिर्वदति "अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते" ( का० १।३।१५ ) इति । अत्र शब्दादिहीनमेव प्रधानं निचाय्यतया निरूपितं तथाचास्यैव ज्ञेयत्वेन कथनमिति चेन्न । प्राज्ञः परमपुरुषो ह्येवात्र निचाय्यत्वेनाभिधीयते । कुतः ? प्रकर-

णात् । प्राज्ञस्य परमात्मन एवेदं प्रकरणम् । "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" (का० १।३।९) "पुरुषान्न परं किञ्चित्" (का० १।३।११) इति परमात्मनः परत्वमुपपाद्य "एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते" ( का० १।३।१२ ) इति पूर्वार्धेन दुर्ज्ञेयत्वं विनिर्दिश्य "दृश्यते त्वग्र्यया बुद्धया सूक्ष्मया सूक्ष्मदर्शिभि" रित्युत्तरार्धेन प्रकृतस्य तस्यैव सूक्ष्मधीवेद्यत्वं प्रतिपादितम् । परमात्मनोऽपि "यत्तदद्रेश्यमग्राह्यम्" (मु० १।६) इत्यन्यत्राद्दश्यत्वादयो धर्मा ह्यभीक्ष्णोपासनानिर्मलीकृतान्तःकरणेन दृश्यतया प्रतिपादिता इति सर्वं समञ्जसम् ॥५॥

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ।१।४।६।

इतोऽपि न सांख्यतन्त्राभिमतं प्रधानमत्राव्यक्तशब्देन प्रतिपाद्यते । यस्मादत्र प्रकरणे पितृसुमनस्कत्वोपायोपेयानां त्रयाणामेवोपन्यासज्ञेयत्वेन श्रूयते तद्विषयकः प्रश्नश्च । न प्रधानादेः । अतो न सांख्यमतसिद्धं प्रधानमव्यक्तशब्दवाच्यम् ।

तत्र नचिकेता मृत्योः प्राप्तव्ये वरत्रये प्रथमवरेणात्मनः पुरुषार्थयोग्यतां पितुः सुमनस्कत्वादिरूपां द्वितीयेन मोक्षसाधनीभूतामग्निविद्यां तृतीयेन च मोक्षस्वरूपमुद्दिश्योपेयोपायस्वरूपमप्राक्षीत् । तथा हि—नचिकेता नामर्षिकुमारोऽतिथिरूपेणानश्नन्नेव तिस्रो रात्रीर्यावन्मृत्युगृहेऽवात्सीत् । ततस्तुष्टो मृत्युस्तमाह—"त्रीन्वरान् वृणीष्वे" ति । ततः "शान्तसंकल्पः सुमना यथा स्याद्वीतमन्युर्गौतमो माभिमृत्यो । त्वत्प्रसृष्टं माभिवदेत्प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे" (का० १।१।१०) इति पितुः परितोषणं प्रथमं वृत्वा द्वितीयेन वरेण मोक्षसाधनभूतां नाचिकेताग्निविद्यां वव्रे । "सत्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम् । स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण" (का० १।१।१३) इति । अत्र "स्वर्गे लोके न भयं किञ्च नास्ति न तत्र त्वं जरया बिभेति" (का० १।१।१२) इति स्वर्गस्थस्य भयजराशनापिपासरहितत्वविगतशोकत्वादि-

श्रवणात् स्वर्गशब्देन परमपुरुषार्थो मोक्षोभिधीयते, "अमृतत्वं भजन्त" इति तत्र स्थितस्यामृतत्वश्रवणाच्च। अस्यैव च प्रतिवचनम् "त्रिणाचिकेतस्त्रिभिरेत्य संधिं त्रिकर्मकृत्तरति जन्ममृत्यू" (का० १।१।१७) इत्यादिना कृतम्। "शान्तिमत्यन्तमेती" त्युक्ता त्यन्तशान्तिश्च मोक्षावस्थायामेवेति निश्चयः।

एवं तृतीयेण वरेण मोक्षस्वरूपावगमपूर्वकमुपेयोपेतृस्वरूपमुपायभूतोपासनास्वरूपञ्च वृतम् "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः" (का० १।१।२०) इति मोक्षस्वरूपे पृष्टे तज्जिज्ञासायां तस्य दार्ढ्यमवगत्यात एव तम्प्रशंस्योपदिदेश। "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" (का० १।२।१२) धीर उपासक आत्मानमधिकृत्य वर्तते यो योगः स अध्यात्मयोगः परमात्मैकचिन्तनरूपस्तदधिगमेन तल्लाभेनेत्युपासनमुक्तं तेन देवमुपास्यं प्राप्यं मत्वा हर्षशोकौ जहाति हर्षशोकरहितत्वेन मुक्तो भवतीत्यर्थः। तदेवं नचिकेता उपास्यमुपेयं देवं तत्प्राप्त्युपायं तदुपासनञ्च सामान्येन श्रुत्वा विशेषतस्तज्ज्ञानाय भूयः पृष्टवान् "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद" (का० १।२।१४) इति। एवं भूतभविष्यत्साध्यसाधनादिविलक्षणे पृष्टे प्रागुपायस्वरूपमेव पुनः कथयामास "सर्वे वेदा यत्पदमामनन्ती" त्यारभ्य "एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते" (का० १।२।१७) इत्यन्तेन श्लोकद्वयेन प्रणवोपासनस्याप्युपायत्वात्तत्प्रशस्यानन्तरमुपासकस्य प्रत्यगात्मन स्वरूपम् "न जायते म्रियते वा विपश्चिद्" त्यादि श्लोकद्वयेनोपदिष्टम्। इदञ्च श्लोकद्वयं जीवस्वरूपपरमेव "न हन्यते हन्यमाने शरीरे" इति तस्य हन्यमानप्राकृतशरीरसम्बन्धित्वनिर्देशात्। "उभौ तौ न विजानीत" इति तस्याज्ञेयत्वोक्तेश्च। अनन्तरं "अणोरणीयान्महतो महीयानि" त्यारभ्य "क इत्थावेद यत्र स" इत्यन्तेन प्राप्यस्य

परस्य ब्रह्मणः परमपुरुषस्य स्वरूपमुपदिशन् तदनन्यभक्त्यैवेदृशं स्वरूपं मुसाध्यमिति तस्या अनन्योपायताप्रदर्शनार्थं मध्य एवोपासनापरपर्यायभक्तेः स्वरूपमाह। ततश्च "आत्मानं रथिनं विद्धी" त्यारभ्य "दुर्गं पथस्तत्कवयो वदन्ती" त्यन्तेनोपासनप्रकारमभिदधत् "निचाय्य तं मृदुमुखात्प्रमुच्यते" का० ।३।१५) इत्यन्तवाक्येन फलनिर्देशपूर्वकमुपसञ्जहार। एवञ्चास्मिन् प्रकरणे त्रयाणामेव ज्ञेयत्वेनोपन्यासः प्रश्नश्चोपलभ्यते। न ह्यत्र सांख्यतन्त्राभिमतस्याव्यक्तस्य ग्रहणम् ॥६॥

## महद्वच्च ।१।४ ७।

अत्र सांख्यसिद्धं बुद्धितत्त्वमपृथक्कृत्य ततोप्यात्मनः परत्वमभिहितम् "बुद्धेरात्मा महान्परः" (का० १।३।१०) इत्यनेन तथा "ज्ञानमात्मनि महति" (का० १।३। ३) इत्यनेनापि ज्ञानपदाभिधेयबुद्धेरात्मनो महतः पृथङ्निर्देशः। तथा चेह श्रुतस्य महच्छब्दस्यात्मशब्दसामानाधिकरण्यादात्मपरत्वमेवेष्टव्यम्। न तान्त्रिकमहत्तत्त्वपरम्। तथाऽव्यक्तमपि नाऽप्रसक्तिकप्रधानपरमपि तु रथरूपकशरीरपरमेवेति नानुमानिकप्रधानस्य जगत्कारणत्वं किन्तु परमपुरुषस्यैव तदिति सिद्धम् ॥७॥

### * अथ चमसाधिकरणम् ॥२॥

## चमसवदविशेषात् ।१।४ ८।

श्वेताश्वतरोपनिषदि श्रूयते-"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" (श्वे० ४।५।) इति संशयः। किमत्राप्यजाशब्देन सांख्योक्तं स्वातन्त्र्येण प्रधानमुच्यत आहोस्विद् ब्रह्मात्मकमिति। किं युक्तम् ?

* 'अजामेकां' श्रुतावत्र त्वजाशब्देन किं मतम् ॥३॥ स्वतन्त्रञ्च प्रधानं वा ब्रह्मात्मक ? वरञ्च किम् ? अजत्वोक्त्या स्वतन्त्रं हि सरूपाणाञ्च सर्जनात् ॥४॥ ब्रह्मात्मकमजावाच्यं नाद्यमत्राविशेषतः।

सांख्याभिमतं केवलं प्रधानम् । कुतः ? अजामिति तस्याजात्तयाऽन्यकार्यत्वाऽनुपपत्तेः । लोहितशुक्लकृष्णामिति रजःसत्त्वतमोगुणात्मकस्य तस्य सरूपाः रजःसत्त्वतमोरूपाः प्रजाः सृजमानामिति स्वातन्त्र्येण स्वसमानरूपसर्वप्रजास्रष्टृत्वश्रवणाच्चेत्येवं प्राप्तेऽभिधीयते ।

चमसवदविशेषादिति । यथा "अर्वाग्बिलश्चमस उर्ध्वबुध्नः" (बृ० ४।२।३)इति मन्त्रोक्तश्चमसशब्दः कस्य पदार्थविशेषस्य वाचक इति न निश्चयो भवति । "यथेदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः" (बृ० ४।२।३) इति वाक्यशेषाच्चमसशब्दः शिरो वाचक इति निर्णयो भवति । तथा न जायत इत्यजेति यौगिकत्वेनाजेति सामान्यशब्दः सांख्याभिमतं प्रधानं वदति ब्रह्माधीनाम्प्रकृतिं वेति न निश्चीयते । परन्तु "देवात्मशक्तिं स्वगुणैर्निगूढाम्" (श्वे० ६।३) इत्युपक्रमवाक्यात् "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः" (श्वे ४।९) इत्यादिवाक्यशेषाच्चाजाशब्देन ब्रह्मशक्तिभूता ब्रह्मात्मिका प्रकृतिरभिधीयते । इत्येतच्च प्रकरणादिभ्य एवावगम्यते । तस्मादत्र मन्त्रेऽजाशब्देन न सांख्यमतसिद्धं प्रधानमभिधीयते ॥८॥

परमात्मशरीरभूता प्रकृतिरेव प्रकृतेऽजाशब्देन गृह्यत इति हेत्वन्तरेणापि द्रढयति--

## ज्योतिरुपक्रमा तु तथाह्यधीयत एके ।१।४।९।

तु शब्दोऽवधारणार्थकः । "सदेव सोम्येदमग्र आसीत्" (छा.६।२।१) इत्यत्र सच्छब्दवाच्यं ज्योतिः स्वप्रकाशं ब्रह्मैव "ज्योतिषां ज्योतिः" (बृ० ६।४।१६) "अथ यदतः परो दिवो ज्योतिर्दीप्यते" (छा.३।१३।७) इत्यादिश्रुतिप्रसिद्धेः । तदेव चोपक्रम आदिकारणं यस्या लोहितशुक्लकृष्णरूपाया अजायाः सा ज्योतिरुपक्रमा ब्रह्मशक्तिभूता "देवात्मशक्ति" मिति श्रुतेर्ब्रह्मकारणिका लोहितादिरूपैवेहाजा निर्द्धारणीया न सांख्याभिमतं स्वतन्त्रं प्रधानम् । तथा ह्यधीयत एके । हि यस्मादेके छन्दोगा

यथाऽजाया लोहितशुक्लकृष्णरूपत्वादिकं प्रकृते "अजामेकामि" ति मन्त्रेऽभिहितं तथा लोहितादिरूपत्वादिकं तस्याः ब्रह्मकारणिकाया मायाया अधीयन्ते। मायिना सदाख्येन ब्रह्मणा च तस्याः सकाशादेव सृष्टिर्वितन्यत। इत्यपि। तथा हि-"तदैक्षत बहु स्याम्प्रजायेय" इत्युपक्रम्य तेजोऽबन्नानां कारणभूतां भौतिककार्यप्रकृतिभूतां तामेव लोहितादिरूपां स्फुटमधीयन्ते। "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य" (छा० ६।४।१)इत्यत्र कार्येषु लोहितादिरूपावाप्तिः कारणावस्थायास्तथात्व एवेति ब्रह्मात्मिका शक्तिरेवात्र प्रतिपाद्यते। तथा प्रकृतेऽपि "किं कारणं ब्रह्म" (श्वे १।१) इत्युपक्रम्य "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्" (श्वे.१।३) इति जगदुत्पत्तौ किमुपकरणवद्ब्रह्मेति विमृश्य ते ब्रह्मवादिनो ध्यानाख्येन योगेनानुगताः परमात्मानमनुप्रविष्टास्सन्तस्तस्यैव देवस्यात्मभूतामैक्येन स्थितां मायाशक्तिं सत्वरजस्तमोगुणत्रयवर्तीं परमात्मनो जगन्निर्माणे सहकारिणीमपश्यन्निति परमात्मशक्तेरजाशब्दाभिहिताया जगत्कारणत्वेनोक्ताया परमात्मशक्तित्वेन तदात्मकत्वं तदधीनतत्स्वरूपस्थितिप्रवृत्तिकत्वञ्च निर्दिश्य वाक्यशेषे "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः" (श्वे.४।६) "मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्" (श्वे ४।१०) इति परमात्मनो मायित्वेन मायाधीशत्वावगमात्। अतस्तस्या एव मायायाः प्रकृतिशब्दाभिहिताया परमात्मशक्तेः "अजामेकामि" ति मन्त्रेणाभिधानात्। न हि परतन्त्रसिद्धं केवलं प्रधानमत्र जगत्कारणतया प्रतिपाद्यते ॥९॥

नन्वजाया ज्योतिरुपक्रमात्वे ब्रह्मकार्यत्वात्तस्या ह्यजात्वमेव न स्यादित्याह।

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ।१।४।१०।

चशब्दः शङ्कापरिहारार्थः। परमात्मयत्तप्रकृतेर्ज्योतिरुपक्रमात्वेऽप्यजात्वमस्त्येव। कुतः? कल्पनोपदेशात्। कल्पनस्य सर्गस्योपदेशात्। "धाता

यथा पूर्वमकल्पयत्" (शु० य०) 'सर्गादौ भगवान् धाता यथा पूर्वमकल्पयत्" इत्यादौ कल्पयतेः सृष्टावपि प्रयोगदर्शनात् । सर्गः सृष्टिः । तथाच "अस्मान्मायी सृजते विश्वमेतत्" (श्वे० ४।९) इत्यादिषु जगत्सर्गं उपदिश्यते । एतदुक्तम्भवति । परमपुरुषाधिष्ठितायाः प्रकृतेः कार्यकारणरूपेणावस्थाद्वयं वेदान्तेषूपदिश्यते । तत्र स्वाविभक्तनामरूपादस्मादव्याकृतात्कारणावस्थात्कारणान्मायी परमेश्वरो विश्वमुत्पादयति । तदनन्तरमुपचितसत्त्वरजस्तमोगुणतया सैवाव्यक्तशब्दवाच्या कार्यावस्थाम्प्राप्य विभक्तनामरूपतया तेजोबन्नादिलक्षणपरिणतिमवाप्य लोहितशुक्लकृष्णरूपा सम्पद्यते । एवञ्चास्या भगवदधिष्ठितप्रकृतेः कारणावस्थाया अजात्वेन व्यपदेशः कार्यावस्थायाश्च ज्योतिरुपक्रमात्वेनेति न कश्चिद्विरोधः । अस्मिन्नर्थे दृष्टान्तमाह–मध्वादिवदिति–यथा "असौ वा आदित्यो देव मधु" (छा० ३।१।१) इत्यादावादित्यादेः कारणावस्थायां मध्वादिव्यपदेशानर्हात्यन्तसूक्ष्मरूपेण स्थितस्य कार्यावस्थायां वस्वादिभोग्यरसाधारत्वेन मधुत्वं कार्यत्वञ्च न विरोधावहम् । एवमेकस्या एव प्रकृतेरवस्थाभेदादविरोधः । तस्मादस्मिन्मन्त्रे ब्रह्मकारणिकैवाजाभिधीयते न तन्त्रसिद्धेति सिद्धम् ॥१०॥

❀ अथ संख्योपसंग्रहाधिकरणम् ॥३॥

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ।१।४।११।

बृहदारण्यके 'तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इत्यस्यानन्तरं श्रूयते "यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः। तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्" ( बृ० ४।४।१७ ) "प्राणस्य प्राणम्" (बृ० ४।४।१८) इति । तत्र संशयः । किमत्र पञ्च पञ्चजना इति सांख्य-

* 'यस्मिन् पञ्चे'ति वाक्ये च पञ्च पञ्चजनाश्च के ।।५।। तत्त्वानि कापिलानां वा प्राणाद्योऽथवा मताः ? पञ्चविंशतिसंख्यातश्चाद्यः पक्षोऽस्ति सुन्दरः ।।६।। नानाभावातिरेकाभ्यां प्राणाद्यो मतास्त्विह ।

प्रसिद्धानि पञ्चविंशतितत्त्वानि ग्राह्याणि, आहोस्विद्वाक्यशेषे श्रुता वेदान्ताभिमताः प्राणादय इति। किं युक्तम्? तान्त्रिकाणि पञ्चविंशतितत्त्वानीति। कुतः? पञ्च पञ्चजना इति नियतसंख्यया पञ्चशब्दविशेषितपञ्चजनवाच्यघटकया पञ्चविंशतितत्त्वानामेव प्रतीतेः। कापिलाश्च "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" (सांख्यका० ३) इति तत्त्वानां परिगणनं स्वरूपञ्चाहुः। तत्राकार्यत्वे सति कारणत्वं प्रकृतित्वम्। कार्यत्वे सति कारणत्वं प्रकृतिविकृतित्वम्। प्रकृतिविकृत्योः साक्षात्कार्यत्वं विकृतित्वमकार्यत्वे सत्यकारणत्वञ्च पुरुषत्वमिति तल्लक्षणानि विनिर्दिश्य मूलप्रकृतिरेका प्रकृतिविकृतयः सप्त। कारिकायां तु शब्दोऽवधारणे भिन्नक्रमश्च तथा च विकृतय एव षोडश पुरुषश्चैक इति विभज्य पञ्चविंशतितत्त्वान्यभिदधुः। तत्र पञ्चपूल्य इतिवत्पञ्चानां जनानां समूहाः पञ्चजनाः। पुंन्निर्देशश्छान्दसः। कति संख्याकास्ते समूहा इति निर्णयाय पूर्वपठितपञ्चशब्दार्थेन ते विशेष्यन्ते। तथा च पञ्चजनशब्दबोधिताः पञ्चेत्यन्वये पञ्च पञ्चजना इति पञ्च पञ्चपूल्य इतिवत्पञ्चविंशतिसंख्याकानि तत्त्वानि सांख्याभिमतानि सिद्ध्यन्तीति प्राप्तेऽभिधीयते—

न संख्योपसंग्रहादपि नानाभावादतिरेकाच्चेति। अत्र पञ्च पञ्चजना इत्यनेन सांख्यतन्त्रानुसारेण पञ्चविंशतिसंख्योपसंग्रहादपि न तत्तन्त्राभिमततत्त्वानि प्रतीयन्ते अपि तु प्राणादय एव कुतः? नानाभावात्। कापिलतन्त्राभिमतेभ्यस्तत्त्वेभ्य एषां पञ्चविशेषितपञ्चजनानां पृथग्भावात्। तथा हि—"यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः। तमेवमन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्" इत्यत्र यत्तदोर्नित्यसम्बन्धाद् यस्मिन् पञ्च पञ्चजना प्रतिष्ठिता इति यच्छब्दावगतब्रह्माधारतयोक्तानां तेषां ब्रह्मात्मकत्वं निश्चीयते। "तमेवमन्य आत्मानं विद्वान् ब्रह्म" ति तच्छब्दपरामर्शेन यच्छब्दावगतं ब्रह्मैव। सांख्यमते तेषां ब्रह्माधारत्वाऽनङ्गीकारेण स्वाभिमततत्त्वानामत्र प्रतिपादकत्वासम्भवात्। एवं सर्वाधार-

ब्रह्माकाशयोः पञ्चविंशतितत्त्वभिन्नत्वेनाभिहितयोः पञ्चविंशतिसंख्यातिरेकाच्च न तन्त्रसिद्धतत्त्वप्रतिपादकत्वं तेषाम् ।

एतदुक्तम्भवति । ब्रह्माधारतयोक्तानां पञ्चानां पञ्चजनानां ब्रह्माधेयत्वेन तदाश्रितत्वात्तत्परतन्त्राणां प्रकृत्यादीनां सांख्यैरनङ्गीकारेणापसिद्धान्तात् । पुरुषशब्दाभिहितस्यात्मन आकाशस्य च पृथक्कथनवैयर्थ्याच्च । तयोरपि पञ्चविंशतितत्त्वान्तर्गतत्वेनाभ्युपगमात् । नास्मिन् मन्त्रे सांख्यतत्त्वप्रतिपादनमपि तूत्तरवाक्ये श्रूयमाणप्राणादीनामेव । यस्मिन्नित्युक्ते ब्रह्मण्यात्मनि प्राणादीनां सम्बन्धस्य सम्भवात् । "प्राणस्य प्राणम्" इत्यादि वाक्यैः परमात्मनः प्राणादिनियामकत्वाभिधानात् प्राणेश्वरयोर्नियम्यनियामकभावाद्ब्रह्माधारत्वं तेषां सुतरां सम्पद्यत इति ।

न संख्योपसङ्ग्रहादपीत्यपिशब्देन वस्तुतोऽत्र पञ्चविंशति संख्या प्रतिपत्तिरेव न सम्भवतीत्याशयः । तथा हि–प्रकृते पञ्चविंशति संख्या कथं निष्पद्यते ? पञ्चपञ्चेति तदवयवद्वारेण समुदायलक्षणाश्रयणेन पञ्चकद्वयाद्वा वीप्सावशाद्वाऽहोस्वित्समाहारसमासाश्रयणाद्वे तिचेन्न तत्राद्यः पक्षः पञ्चकद्वयोच्यमाने दशसंख्यैव सम्पद्येत । यथा "पञ्च सप्त च वर्षाणि नववर्षं शतक्रतुः" इत्यादौ द्वादश संख्यैव प्रतीयते तथा प्रकृतेऽपि । न द्वितीयः यदि जनानामधिकरणानि पञ्च स्युस्तदा प्रत्यधिकरणमपेक्षा जनाः पञ्चसंख्यया प्राप्नुयुस्तदा स्यादप्युक्तसंख्या परं न ह्यत्राधिकरणपञ्चकश्रवणमस्ति 'दशदशैकैकं चमसमनुप्रसर्पन्ति' इत्यादौ यथानुप्रसर्पकाणां पुरुषाणां शतसंख्या समाश्रीयते । न तृतीयोऽपि पञ्चभिरारब्धस्य समूहपञ्चकस्यैवाभावात् नहि कापिलतन्त्रसिद्धं पञ्चस्वनुगतं पञ्चसंख्याप्रवेशहेतुभूतं जात्यादिकं किमप्यत्रोपलभ्यते । आकाशस्य पृथङ्निर्देशात्पञ्चभूतानां पञ्चकस्यैवासिद्धेः । तस्मादत्र न समाहारः । किन्त्वत्र "दिक्संख्ये संज्ञायाम्" ( पा० सू० २।१।५० ) इति संज्ञाविषयः समासः ।

अतएव न लिङ्गव्यत्ययदोषोऽपि । पञ्चजनाः कतीत्यपेक्षायामुच्यते पञ्चेति सप्त सप्तर्षय इतिवत् । तस्मादत्र न सांख्यसिद्धानि पञ्चविंशति-तत्त्वानीति ॥११॥

## प्राणादयो वाक्यशेषात् ।१ ४।१२।

पञ्च पञ्चजना इत्यत्र समाहारविषयः समासो नोपपद्यते लिङ्गव्य-त्ययदोषग्रस्तत्वादपि तु "दिक्संख्ये संज्ञायामिति" संज्ञाविषयक एव समासस्तेन पञ्च पञ्चजना इत्यस्य पञ्चजनसंज्ञकाः पञ्च इत्यर्थं उप-पद्यते । ते के पञ्चजनसंज्ञिताः पञ्चेत्यपेक्षायामाह प्राणादय इति । पञ्च-जनसंज्ञिताः पञ्चपदार्थाः प्राणादयः एव । कुत इदमवगम्यते ? वाक्यशे-षात् । संदिग्धार्थनिर्णयस्य वाक्यशेषाधीनत्वात् । स च वाक्यशेपस्तावत् । प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम् (बृ० ४।४।१८) इति वाक्यशेषे ब्रह्माधारतया नियम्यतया श्रुताः प्राणादयः पञ्च पञ्चजन-शब्दस्यार्थो ज्ञेयः । नान्यः । माध्यन्दिनशाखायां पञ्चजनमन्त्रा नन्तरमन्त्रे "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमुतान्नस्यान्नं मनसो ये मनो विदुः" ( बृ० ४।४।१८ ) इति वाक्यशेषे श्रूयमाणानि प्राणचक्षुः श्रोत्रान्नमनांसीतीमानि पञ्चैव पञ्चजनशब्देनोक्तानि । तत्राद्यतेऽनेने-त्यन्नमित्यन्नशब्देन रसनेन्द्रियमुच्यते ॥१२॥

ननु काण्वानां माध्यन्दिनानां च शाखायां "यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इत्ययं मन्त्रः समानः श्रूयते । काण्वानां वाक्य-शेषे त्वन्नस्य पाठो न श्रूयतेऽतस्तेषां पक्षे चतुर्णां प्राणादीनां पञ्चजन-शब्दवाच्यत्वं नोपपद्यत इत्याशङ्क्याह ।

## ज्योतिषैकेषामसत्यन्ने ।१।४।१३।

एकेषां काण्वानां वाक्यशेषेऽसत्यन्ने शब्दे वाक्योपक्रमगतेन "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इति ज्योतिषा पञ्चसंख्या पूरणी-येति । तत्र वाय्वात्मकप्राणवाचकेन प्राणशब्देन वायुसम्बन्धिस्पर्शनेन्द्रिय-

मन्नशब्दाभिहितपृथिवी सम्बन्धित्वाद् घ्राणस्यान्नशब्देन घ्राणेन्द्रियञ्च गृह्यते । तन्त्रेणतु रसनेन्द्रियमद्यतेऽनेनेत्यन्नमिति व्युत्पत्त्या तद्ग्राह्यत्वोपपत्तेः । तदेवं स्पर्शनेन्द्रियस्य घ्राणरसनयोरन्यतरस्य च प्राणान्नयोरन्तर्गतत्वेन प्राणचक्षुः श्रोत्रमनांसीमानि वाक्यशेषे श्रूयमाणानि पञ्चजनसंज्ञितानि पञ्च ज्ञेयानीति "प्राणादयः वाक्यशेषादि"ति सूत्रेण दृढीकृतत्वादत्र तन्त्रसिद्धपञ्चविंशतितत्वप्रसङ्गाभावेन न तद्ग्रहणम् ॥१३॥

## * अथ कारणत्वाधिकरणम् ॥४॥

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ।१।४।१४।

अत्र कारणविधायिनां वाक्यानां प्रधानपरत्वनिरासे ब्रह्मणि समन्वयप्रदर्शनद्वारैकस्यैव ब्राह्मणः सर्वजगन्मूलकारणत्वमुपपादितं तन्न सम्भवति । कुतः ? तेषां वेदान्तवाक्यानामनेककारणत्वबोधकत्वेन परस्परविरुद्धार्थप्रतिपादनतया ब्रह्मणि समन्वयाऽनुपपत्त्या ब्रह्मणो जगन्मूलकारणत्वानुपपत्तेः । तथा हि-"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः । आकाशाद्वायुः" ( तै० २।१ ) इत्यत्रात्मनो जगत्सृष्ट्यादिकारणत्वं श्रूयते । "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं, तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत" (छा० ६।२।३) इत्यत्र सच्छब्दवाच्यस्य जगत्कारणत्वं श्रूयते । "ब्रह्म वा इदमग्र आसीत्" ( बृ० १।४।११ ) इत्यत्र ब्रह्मणः कारणत्वं श्रूयते । "असद्वा इदमग्र आसीत्" ( तै० २।७ ) इत्यत्रासतः कारणत्वं श्रूयते । क्वचिदाकाशाज्जगतः सृष्टिरभिधीयते क्वचित्प्राणात् । तथा

---

* सर्वकारणवाक्यानां समन्वयोऽथ कुत्र हि ॥७॥ असदात्मप्रकृत्यादौ ब्रह्मणि वाऽत्र किं शुभम् ? अनेककारणोक्त्याऽत्र चाद्यः पक्षः शुभो मतः ॥८॥ ब्रह्मणि तत्परत्वादेवाकाशादिकवाक्यवत् । सर्वेऽत्र पर्यवस्यन्ति सर्वशाखाप्रतीतितः ॥९॥

"तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियते" (बृ. १।४।७) इत्यत्र चाव्याकृतस्य प्रधानस्य जगत्कारणत्वं श्रूयते। अव्याकृतमव्यक्तमेव। नामरूपाभ्यां न व्याक्रियते न व्यज्यत इत्यव्याकृतम्। तस्मिंश्च "तद्धेदं तर्ह्यव्याकृतमासीदि"ति जगतः प्रलयमभिधाय 'तन्नामरूपाभ्यामेव व्याक्रियत' इति तस्मादेव सृष्टिरभिधीयते। इत्येवं तत्तत्कारणवाक्यगतस्य तस्य तस्य च शब्दस्य स्ववाच्यजगत्कारणत्वप्रतिपादकस्य स्वस्ववाच्ये समन्वयादेकस्मिन्नेव ब्रह्मणि सर्वेषां कारणवाक्यगतानां शब्दानां समन्वयस्यासम्भवान्न ब्रह्मणो मूलकारणत्वमुपपद्यत इति प्राप्त आह कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेरिति। "यतो वा इमानि भूतानि जायन्त" इत्याद्यनेकाभिः श्रुतिभिर्जगत्कारणत्वेन प्रतिपादितस्य ब्रह्मणो जगत्कारणपरेष्वाकाशादिवाक्येषु सृष्ट्याद्यसाधारणलिङ्गदर्शनेनाकाशप्राणादिशब्दानां ब्रह्मपरत्वं निश्चित्याकाशप्राणादिशब्दैस्तस्य ब्रह्मणो जगत्कारणत्वेन व्यपदिष्टत्ववदात्मसदादिकारणपरवाक्येष्वपि जगत्सृष्ट्यादिब्रह्मासाधारणलिङ्गदर्शनात्तद्गतात्मसदादिशब्दानामपि ब्रह्मपरत्वनिश्चयेन तेन तेन च शब्देन जगत्कारणत्वेन ब्रह्मणो व्यपदिष्टत्वोक्तेः। ब्रह्मणो व्यपदेशादित्यर्थः। तथा च सर्वेषां कारणपरशब्दानां ब्रह्मणि समन्वये ब्रह्मण एवादिकारणत्वमुपपद्यत इति तत्त्वम्।

एतदुक्तम्भवति। सर्वेषां कारणवाक्यानामेकवाक्यतासत्त्वात्कारणवाक्यगतकारणवाचकशब्दानां सर्वेषामप्रत्ययन्यायेनैकस्मिन्परमकारणे पर्य्यवसानत्वस्योचितत्वात्सर्वेऽपि कारणवाक्यगताः सदात्माकाशप्राणादिशब्दा एकस्मिन्नादिकारणे ब्रह्मणि संगत्य तस्यैव समस्तचिदचिज्जगत्कारणत्वमभिदधते। तथा च समेषां सदात्माकाशप्राणादिशब्दानां परस्मिन्ब्रह्मण्येव समन्वयस्य सत्त्वादादिकारणत्वमेकस्यैव ब्रह्मण इति निर्णयः।

एवं "मननात्त्राणनान्मन्त्रः सर्ववाच्यस्य वाचकः" (रामता० १।१२) इति श्रुतिरपि परस्य ब्रह्मणः श्रीरामस्य सर्वशब्दवाच्यत्वाभिधानेन तस्मिन्सर्वेषां शब्दानां समन्वयं ज्ञापयति। तथैव "विश्वरूपस्य ते राम विश्वे

शब्दाहि वाचकाः । तथापि रामनामेदं सर्वेषां बीजमक्षयम् । इति स्मृतिरपि श्रीरामस्यैव सर्वशब्दवाच्यत्वमभिधत्ते । एवञ्च रामनाम्नः सर्वशब्दकारणत्वाभिधानेन तद्वाच्यस्य श्रीरामस्य ब्रह्मणोऽन्यनिखिलशब्दवाच्यानां सर्वेषां बीजत्वोपपादनद्वारा तस्य सर्वशब्दवाच्यादिकारणत्वं बोधितम् ।

"तद्धेदं तर्ह्यव्याकृतमासीत्" दित्यादिकारणवाक्यप्रतिपाद्यत्वं ब्रह्मणः कथमिति चेदित्थम्। "अव्यक्तात्पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इति। तथा "महानव्यक्ते लीयते, अक्षरं तमसि लीयते तमः परे देव एकीभवन्ति" (सुबा०) इत्येवमादिषु पुरुषस्याव्यक्तात्परत्वश्रवणात् । महदव्यक्ताक्षरतमसां परे देवे परस्मिन्ब्रह्मणि लयस्याभिधानात्प्रलयावसाने च तत एव तदुत्पत्तावस्यैव ब्रह्मणस्तदुत्पादकत्वोपपत्तेः । एवं "सत्यं ज्ञानमनन्तं ब्रह्म यो वेदनिहितं गुहायाम्" (तै० २।१) इत्युपक्रम्य "तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः (तै० २।१) इत्येवमादिषु तस्यैव ब्रह्मणः सृष्टृत्वश्रवणात्। अत एव "अस्मान्मायी सृजते विश्वमेतत्" (श्वे० ४।९) इत्यादि श्रुतिभिः स्वोत्पन्नस्वशेषभूताव्यक्तादिद्वारा ब्रह्मणश्चराचरजगदुत्पादकत्वमभिधीयते ।

मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ॥ गी० ।
सर्वयोनिषु कौन्तेय ? मूर्तयः सम्भवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ गी० ।

इत्यादि स्मृतयोऽपि ब्रह्मणोऽव्यक्ताद्युत्पादकत्वेन तद्द्वारा चराचरजगदुत्पादकत्वमित्यव्यक्तादिकारणतयाऽव्यक्तादिपरवाक्यप्रतिपाद्यत्वं परब्रह्मण एवेति ॥ १४ ॥

तर्ह्यसदादिशब्दानां कथं ब्रह्मण्यन्वय इत्याशङ्कायामाह--

## समाकर्षात् ।१।४।१५।

"असन्न व स भवति । असन्नद्ब्रह्मेति वेद चेत्" (तै० २।६) इत्यसद्वादं

विनिन्द्य "अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुः" (तै. २।६) इत्यङ्गीकृतं सद्वादमुपवर्ण्य "सोऽकामयत बहु स्यां प्रजायेय" "इदं सर्वमसृजत। यदिदं किञ्च। तत्सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य। सच्च त्यच्चाभवत्" (तै० २।६) इति सतो ब्रह्मणः सकाशादेव सृष्टिरभिहिता। "असद्वा इदमग्र आसीत्" (तै० २।७) इत्यत्रापि सृष्टिकर्तुस्सत्पदवाच्यस्य ब्रह्मण एव समाकर्षादिति। कुतः? उक्त श्लोकस्यानन्तरं "तदात्मानं स्वयमकुरुते" त्यारभ्य "सैषाऽऽनन्दस्य मीमांसा भवति" (तै० २।८) इत्युत्तरस्थेन परमात्मपरानन्दशब्देन सत एव समाकर्षात्। तथा च पूर्वोत्तरपरमात्मपरवाक्यानां मध्ये पतितस्य "असद्वा इदमग्र आसी" दिति श्लोकस्य संदंशन्यायेन परमात्मपरत्वमुपपद्यते।

अयम्भावः। प्रलयदशायां परब्रह्मणि लीनानामव्यक्तादीनां नामरूपविभागाभावेन तत्सम्बन्धितयाऽस्तित्वाभावाद्ब्रह्मण्यप्यसच्छब्दस्य प्रयोग उपपद्यते। तथा चासच्छब्दवाच्यब्रह्मण एव कारणत्वमिति। अत एवान्यत्र "कथमसतः सज्जायतेति सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" (छा० ६।२।२) इत्यनेनासद्वादमपाकृत्य सतः समाकर्षात् सत एव ब्रह्मणः कारणत्वमिति सिद्धम् ॥१५॥

## * अथ जगद्वाचित्वाधिकरणम् ॥५॥

## जगद्वाचित्वात् ।१।४।१६।

कौषीतकिब्राह्मणे समाम्नायते--"यो वै बालाक एतेषां पुरुषाणां कर्त्ता यस्य वैतत्कर्म स वै वेदितव्य" (कौ.ब्रा. ४।१८) इति। अथ संशयः।

* 'यो वै बालाक' इत्यादौ वेदितव्यश्च को मतः ?। पुरुषोऽथो प्रधानं वा परमात्माऽथवा मतः ॥१०॥ कर्तृत्वात् पुण्यपापानां पुरुषस्यैव वेद्यता। कर्मणा जगदुक्तौ तु प्रधानस्यैव सा मता ॥११॥ जगत्कर्तुश्च वेद्यत्वात् पुंल्लिङ्गाच्चेश्वरो हि सः।

किं वेदितव्यत्वेनोपदिष्टः सांख्यतन्त्रसिद्धः पुरुषः प्रधानं वाऽहोस्वित्परमात्मेति। किं युक्तम् ? पुरुषः। यस्य वैतत्कर्म्मेति पुण्यपापरूपकर्मकर्तृत्वस्य पुरुषनिष्ठत्वात्। कर्मपदस्य जगद्वाचित्वपक्षे प्रधानं वेदितव्यत्वेनोक्तं तस्य जगत्कारणत्वादिति प्राप्त आह जगद्वाचित्वादिति। कर्मपदस्य जगद्वाचित्वात्। अस्मिन् वाक्ये यस्यैतत्कर्मेतिवेदितव्यस्य जगत्कर्तृत्वेन तत्कारणत्वाभिधानादस्य वाक्यस्य पुरुषस्य कार्यकारणत्वानभ्युपगच्छत्सांख्यतन्त्रविरोधित्वान्न तत्तन्त्राभिमतपुरुषस्यात्र वेदितव्यत्वं निष्पद्यते। न च प्रधानस्यापि तत्त्वम्। कुतः ? अत्र यः कर्ता स वेदितव्य इत्युभयत्र पुल्लिङ्गत्वदर्शनात् प्रधानप्रकृतिप्रतिपादकानां शब्दानां पुल्लिङ्गत्वादर्शनादचेतनत्वेन प्रधानस्य जगत्कर्तृत्वाऽसम्भवाच्च। कारणवादिषु वेदान्तवाक्येषु प्रधानस्य जगत्कारणत्वानभिधानाद् वेदितव्यत्वाश्रवणाच्च न तस्य तदुभयमुपपद्यते परमात्मनस्तु सर्वजगत्कर्तृत्वस्य तदन्तर्गतसर्वपुरुषकर्तृत्वस्य तद्वेदितव्यत्वस्य चानेकवाक्येषु प्रसिद्धत्वात्। तस्य "यः कर्ता स वेदितव्य" इति पुल्लिङ्गत्वेन निर्दिष्टयोर्यत्तच्छब्दयोर्वाच्यत्वोपपत्तेश्च परमात्मैवात्र वेदितव्यत्वेनोक्तो नान्यः॥ १६॥

## जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्। १।४।१७।

ननु "यस्य चैतत्कर्म स वै वेदितव्य" इत्यस्य वाक्यशेषे "तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा श्रेष्ठिनं स्वा" (कौ० ब्रा० ४।२०) एवमभिहितम्। अत्र भोक्तृत्वरूपजीवलिङ्गात् "अथास्मिन्प्राण एवैकधा भवति" (कौ० ब्रा० ४।) इति प्राणशब्दश्रवणाच्च "यस्य चैतत्कर्म" इति वाक्यस्य न परमात्मपरत्वमुपपद्यत इति चेत्तद्व्याख्यातम्। एतच्च प्रतर्दनविद्याप्रकरणे उक्तम्। "उपासा त्रैविध्यादाश्रितत्वादिह तद्योगा" दित्यत्र जीवमुख्यप्राणलिङ्गानां ब्रह्मपरत्वं व्याख्यातम्।

अयमभिप्रायः। यत्रोपक्रमाभ्यासादिलिङ्गैर्वाक्यस्य ब्रह्मपरत्वं निश्चीयते तत्रान्यलिङ्गानि ब्रह्मपरवाक्यानुरोधेन ब्रह्मपरत्वेन नेतव्यानि। प्रकृते

तु "ब्रह्म ते ब्रवाणि" (कौ० ब्रा० ४।१) इति ब्रह्मपदेनोपक्रमात् "एतेषां पुरुषाणां कर्त्ता" इति मध्येऽपि सर्वजगत्का.रणत्वेन ब्रह्मणोऽभ्यासात्। तथा "स्वाराज्यमाधिपत्यं पर्य्येति य एवं वेद" इति ब्रह्मविदस्तदुपासकस्य स्वाराज्यादिप्राप्तिरूपफलत्वेनोपसंहाराच्चास्य वाक्यस्य ब्रह्मपरत्वनिश्चयात्। तस्मादत्र "अस्मिन्प्राण एव एकधा भवती"ति सामानाधिकरण्यादस्मिन् शब्दस्य प्राणशब्दस्य चैकवस्तुपरत्वनिश्चयेन प्राणशब्दस्य ब्रह्मपरत्वावगमात्। प्राणशरीरब्रह्मोपासनार्थमत्र प्राणपदेन निर्देश उपपद्यते ॥१७॥

## अन्यार्थन्तु जैमिनि प्रश्नव्याख्यानाभ्यामपि चैवमेके ।१।४।१८।

तु शब्दः शंकाव्यावर्तकः। अस्मिन्प्रकरणे जीवपरामर्शोऽन्यार्थ जीवातिरिक्तजीवाधारभूतब्रह्मस्वरूपज्ञापनार्थमिति प्रश्नव्याख्यानाभ्यां जैमिनिराचार्यो मन्यते। बालाक्यजातशत्रू सुप्तपुरुषसमीपं गत्वा हे सोमराजन्निति सम्बोधनं कृत्वा तदश्रवणेन प्राणादीनामभोक्तृत्वम्प्रतिपाद्य यष्टिघातेन प्राणादिव्यतिरिक्तं जीवम्प्रतिबोध्य पुनर्जीवव्यतिरिक्ततदाधारभूतब्रह्मसम्बन्धिप्रश्नव्याख्याने चक्रतुः। तत्र प्रश्नः "क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतद्भूत कुत वा एतदागात्" इति। एतत्प्रश्नत्रयोत्तरानभिज्ञं बालाकिं ज्ञात्वा स्वयमेवोत्तरमाह "यथा सुप्तः स्वप्नं न कञ्चन पश्यति" इत्यादिभिः। अत्राधारत्वेनापादानत्वेन च निर्दिष्टः प्राणशब्दाभिहितः परमात्मैवेत्युत्तरवाक्यार्थः।

सुषुप्त्यवस्थायां जीवस्य परमात्मना परिष्वक्तत्वमाह श्रुतिः "सता सोम्य तदा सम्पन्नो भवति प्राज्ञेनात्मना सम्परिष्वक्तः" इति। तस्मात्सुषुप्तौ जीवस्याधारतया निर्दिष्टः प्राज्ञः परमात्मा जीवादर्थान्तरभूत एवेति।

अपि चैवमेके वाजसनेयिनो बालाकयजातशत्रुसंवादे स्पष्टमेवं विज्ञानमयाज्जीवाद्भेदेन तदाश्रयभूतं परमात्मानमामनन्ति "य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागात्" (बृ० २।१।१६। इति प्रश्नस्योत्तरं "य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते" इति। आकाशपदस्य "दहरोऽस्मिन्नन्तराकाश" इति दहरविद्यायां परमात्मपरत्वेन निर्णीतत्वादाकाशः परमात्मैवात्र वेदितव्यत्वेनोक्तः। जीवसंकीर्तनन्त्वत्र जीवस्य प्राणशब्दाभिहितपरमात्मनोऽर्थान्तरत्वज्ञापनार्थमिति नात्र सांख्योक्तपुरुषादिप्रतिपादनम्। परमात्मनो जगत्कारणभूतस्यैवात्र वेदितव्यत्वमिति सिद्धम्। ॥१८॥

## ❀ अथ वाक्यान्वयाधिकरणम् ॥६॥

## वाक्यान्वयात् ।१।४।१९।

मैत्रेयीब्राह्मणे श्रूयते-"सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्याम्" ( बृ० २।४।३ ) स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति" (बृ० २।४।५) इत्युपक्रम्य आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ० २। ४।५) इति श्रूयते। अत्र संशयः। किं प्रत्यगात्माऽत्र द्रष्टव्यत्वादिनोपदिष्ट आहोस्वित्परमात्मेति। किं युक्तम् ? जीवात्मा। कुतः ? परमात्मा द्रष्टव्य इत्यश्रवणात्। आत्मेति पदश्रवणाच्च। लोके आत्मपदस्य जीवपरत्वप्रसिद्धेः। पतिजायापुत्रपशुवित्तानां जीवभोग्यानां भोगोपकरणानाञ्चोपक्रमेण तद्भोक्तुर्जीवस्योपक्रमान्मध्येऽपि "एवं वा अरे इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति"

---

* 'आत्मा वारेऽ'त्र वाक्ये च प्रत्यगात्माऽथवा परः ॥१२॥ द्रष्टव्यत्वादिना प्रोक्तो जीव आत्मेति शब्दतः। परस्याश्रवणाच्चास्य षड्लिङ्गैरन्वयात् परः ॥१३॥

(बृ० २।४।१२) इति प्रकृतस्य जीवस्य विज्ञानघनस्य भूतेभ्यः समुत्थानं तदनुविनाशञ्च वदन् तस्यैव द्रष्टव्यत्वं दृढयतीति प्राप्तेऽभिधीयते वाक्यान्वयादिति। परमात्मैवास्मिन् वाक्ये द्रष्टव्यत्वेनोपदिष्टो भवति। कुतः? उपक्रमोपसंहाराभ्यासापूर्वताफलादिभिः शास्त्रतात्पर्यनिर्णायकैर्लिङ्गैरस्य वाक्यस्य ब्रह्मण्येव समन्वयदर्शनात्।

उपक्रमे तावद "अमृतत्वस्य तु नाशास्ति वित्तेने"ति याज्ञवल्क्यवचनं श्रुत्वा मैत्रेयी मोक्षसाधनं पृष्टवती "येनाहं नामृता स्यां किमहं तेन कुर्याम् यदेव भगवान् वेद तदेव मे ब्रूहि" इत्यमृतसाधनमेव मे ब्रूहीति यावत्। एवं पृष्टो याज्ञवल्क्य आत्मदर्शनस्यामृतसाधनत्वमुपदिष्टवान् 'आत्मा वारे द्रष्टव्य" इति। अत्र परमात्मदर्शनस्यैवामृतसाधनत्वमभिहितम्। एवं "आत्मनो वारे दर्शनेन श्रवणेन मत्या विज्ञानेनेद सर्वं विदितम्" (बृ० २। ४।५) इत्यात्मदर्शनेनादिभिः सर्वज्ञानं वदन् कारणविज्ञानेन तत्कार्यस्य सर्वस्य विज्ञेयत्वम्बोधयन्नात्मन एवाखिलकारणत्व साधयति। न हि परिच्छिन्नस्य जीवस्य दर्शनेन सर्वपदार्थस्य ज्ञानं सम्भवति। तदेव सर्वकारणत्व दुन्दुभ्यादिदृष्टान्तैः स्पष्टीकृतम्। तथा "एव वा अरे अस्य महतो निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गीरसः"। (बृ० २।४।) इत्यात्मन ऋग्वेदाद्युत्पत्तिकथनद्वारा सर्वचराचरजगदुत्पत्ति बोधयन्नस्य सर्वकारणत्वेन परमात्मत्वं द्रढयामास। तस्मादत्रात्मशब्देन परमात्मैव गृह्यते स एव द्रष्टव्यत्वेनोक्त इति। एवं "येनेदं सर्वं विजानाति तं केन विजानीयाद्विज्ञातरमरे केन विजानीयात्" (बृ० २।४।१४) इत्युपसंहारवाक्येऽपि परमात्मन एव द्रष्टव्यत्वं निष्पद्यते। एवमुपक्रमादिभिरस्य प्रकरणस्य परमात्मपरत्वमेवेति निर्णयः ॥१९॥

ननु पतिजायादिभोग्यजातस्य "विज्ञानघन एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" इत्यस्य च जीवलिङ्गस्य का गतिरित्यत आह–

**प्रतिज्ञासिद्धे र्लिङ्गमाश्मरथ्यः।१।४।२०।**

मैत्रेय्यात्मनो वारे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्" (बृ० २।४।५) इत्यात्मविज्ञानेन सर्वविज्ञानप्रतिज्ञाया जीवस्य परमात्मकार्यत्वेन तदनन्यत्वोपपत्या कारणविज्ञानेन तत्कार्यविज्ञानात्सिद्धेर्जीवस्य परमात्मकार्यत्वेन तदधीनस्वरूपस्थितिप्रवृत्तित्वज्ञापनार्थं जीवलिङ्गं निर्दिष्टमित्याश्मरथ्य आचार्यो मन्यते ॥२०॥

## उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ।१।४।२१।

"न प्रेत्य संज्ञास्तीत्यरे ब्रवीमी" ति मुक्तजीवस्य संसाररहितत्वोपदेशात् "तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इति श्रुत्या मुक्तस्य नामरूपाद्विमुक्तत्वावगमात्तन्मोक्षसाधनत्वेन श्रवणमननपूर्वकपरमात्मनिदिध्यासनस्योपदेशाच्च "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" (छा० ३।१२।३) इति शरीरादुत्क्रमिष्यतो जीवस्य ब्रह्मभावाद्ब्रह्मणो यो भावोऽपहतपाप्मत्वादिरूपस्तेनैव भावेन मुक्तस्य स्थितिश्रवणाज्जीव परमात्मानमुपसम्पद्याविर्भावस्वरूपः सन् ब्रह्मभाव प्राप्नुयादित्येतदर्थं तत्र जीवलिङ्गनिर्देश इत्यौडुलोमिराचार्यो मन्यते ॥२१॥

## अवस्थितेरिति काशकृत्स्नः ।१ ४।२२

"य आत्मनि तिष्ठन् यस्यात्मा शरीरं य आत्मानमन्तरो यमयति" (बृ. ३।७।२२) इत्येवमादिषु जीवस्यात्मभावेन परमात्मनोऽवस्थितेः श्रवणात् "शरीरवाचकानां शब्दानां शरीरिणि पर्यवसानत्वा" ज्जीववाचकस्य शब्दस्य तच्छरीरिणि परमात्मनि पर्यवसानात्तत्र जीवशब्देन परमात्मैवाभिहित इति काशकृत्स्न आचार्यो मन्यते । एतदेव सूत्रकारीयं मतम्। शरीरात्मभावस्यैव सर्वत्र श्रुतिपूपदिष्टत्वादिति ॥२२॥

## ॐ अथ प्रकृत्यधिकरणम् ॥७॥

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ।१।४ २३।

प्राग् "जन्माद्यस्य यत" इति शास्त्रेण ब्रह्मणो जगत्कारणत्वमभिहितम् । तत्किंतस्य निमित्तकारणत्वमुक्तमाहोस्विदुपादानत्वमपीति संशयः । तत्र निमित्तत्वमेवोक्तम् । कुतः ? "तदैक्षत बहुस्यां प्रजायेय" (छा० ६।२।२।) इतीक्षणमात्रेण जगत्कर्तृत्वश्रवणात्सत्यसंकल्पस्य ब्रह्मणः संकल्पमात्रेण जगत्सृष्ट्युपपत्तेरिति प्राप्तेऽभिधीयते प्रकृतिश्चेति ब्रह्म जगत प्रकृतिरुपादानकारणं चकारान्निमित्तकारणमप्युक्तम् । कुतः ? प्रतिज्ञादृष्टान्तानुपरोधात् । "येना श्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छा० ६।१।४) इति मृज्ज्ञानेन मृण्मयज्ञानस्य दृष्टान्तस्य चापनुरोधाद् ब्रह्मणो जगदुपादानत्वमप्युपपद्यते । यत्सूक्ष्मचिदचिद्विशिष्टं कारणावस्थं ब्रह्म तदेव सृष्टिकाले स्थूलचिदचिद्विशिष्टं भवतीत्युपादानत्वं निष्पन्नतरम् । तत्र प्रकृतिजीवयोर्जगदुपादानत्वे सत्यपि तत्र ब्रह्मणः प्रधानत्वाद् वैशेष्यात्तु तद्वादस्तद्वादः" (ब्र० सू० २।४।१६) इति न्यायाद् ब्रह्मोपादानं जगदिति वचनमुपपद्यते । न च मृण्मात्रज्ञानेन मृण्मयघटादिज्ञानदृष्टान्तासङ्गतिः । तत्रापि मृदो मृण्मयस्य च कार्यस्य त्रिवृत्कृतत्वेन त्रिभूतात्मकत्वे सत्यपि मृदः प्राधान्यान्मृण्मयमिति वचनमुपपद्यते यथाऽत्र त्रिवृत्कृते पृथिव्याः प्राधान्यं तत्पृथिवीत्युच्यते । यत्र जलस्य प्राधान्यं तज्जलमित्युच्यते ।

---

* 'जन्माद्यस्य यतो'ऽनेन कारणत्वं मुनिर्दिचतम् । ब्रह्मणस्तन्निमित्तत्वमेवोपादानताऽपि वा ? ॥१४॥ 'तदैक्षते'ति रामस्य सङ्कल्पादेव सृष्टितः । आद्य एवेति, नैवं स्यात् प्रतिज्ञादिविरोधतः ॥१५॥ प्रतिज्ञानुपरोधाच्च दृष्टान्तस्यानुरोधतः । अन्तिम एव पक्षो हि स्वीकृतो वेदवित्तमैः ॥१६॥

तथैव चिदचिद्ब्रह्मोपादानकत्वेऽपि जगतस्तत्र ब्रह्मण. प्राधान्याद् ब्रह्मोपादानं जगदित्युच्यते । विकारः कार्यं जगच्चराचरं तन्नामधेयञ्च वाचारम्भणं वागालम्बनमात्रं चिदचिद्ब्रह्मैव सत्यमिति दृष्टान्तदार्ष्टान्तयोः समानत्वान्मृण्मयस्य सर्वस्य मृदुपादानकत्ववत्सर्वस्य जगतो ब्रह्मोपादानकत्व निष्पन्नतरमेव ॥२३॥

## अभिध्योपदेशाच्च ।१ ४।२४।

"सोऽकामयत" (तै० २।६) इति ध्यानोपदेशाद्ब्रह्मणो जगत्कर्तृत्वं "बहु स्यां प्रजायेय" इति जगदाकारेण बहुभवनचिन्तनोपदेशाच्च तस्य जगदुपादानत्वञ्चेति निमित्तत्वमुपादानत्वञ्चैकस्यैव ब्रह्मणो निष्पद्यते ॥२४॥

## साक्षाच्चोभयाम्नानात् ।१·४ २५।

"ब्रह्म वनं ब्रह्म स वृक्ष आसीत्" "ब्रह्माध्यतिष्ठद्भुवनानि धारयन्" (ऋ० २।८।७।८) इति साक्षाद्ब्रह्मणो जगदुपादाननिमित्तत्वयोरुभयोराम्नानादुभयं चिदचिद्विशिष्टं ब्रह्मैव ॥ २५ ॥

## आत्मकृतेः ।१।४।२६।

"तदात्मानं स्वयमकुरुत" (तै० २।७) इति प्रलये सूक्ष्मचिदचिच्छरीरत्वेनावस्थितमात्मानं तदन्ते स्थूलचिदचिच्छरीरकं स्वयमकुरुत जीवानां भुक्तिमुक्त्यर्थमित्युपादाननिमित्तत्वमुभयमेकस्यैव ब्रह्मणः स्पष्टमुक्तम् । ये तु विशुद्धं ब्रह्म वात्मानं स्वयमकुरुत सुखदुःखादिभागभवदित्याहुस्तन्नोपपद्यते । ब्रह्मणि विकारित्वाद्यनेकदोषापत्तेस्तदपाकरणार्थं मायाशवलितस्यैव जगद्रूपत्वमङ्गीकरिष्यते चेदुपादानताभङ्गप्रसङ्गः । न च कल्पितत्वं जगत इत्युक्तावपि निस्तारः । केन किमर्थं कल्पितमिति प्रश्नस्योत्तरानुपपत्तेस्तस्मात्सूक्ष्मचिदचिच्छरीरकस्य कारणावस्थस्यैव ब्रह्मणः कर्तृत्वादिव्यपदेशादुपादाननिमित्तत्वमुभयमपि सङ्गतम् ॥२६॥

इतश्च जगत्प्रकृतिर्ब्रह्मैव ।

## परिणामात् । १।४।२७।

"निरुक्तञ्चानिरुक्तञ्च निलयनञ्चानिलयनञ्च विज्ञानञ्चाविज्ञानञ्च सत्यञ्चानृतञ्च सत्यमभवत् यदिदं किञ्च, तत्सत्यमित्याचक्षते" (तैं० २।६) इत्यविभक्तनामरूपातिसूक्ष्मचिदचिद्वस्तुशरीरकस्य कारणवस्थस्य ब्रह्मणो विभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरत्वेन परिणामाज्जगदुपादानं निमित्तञ्च ब्रह्मैव । सूक्ष्मावस्थस्य सर्वस्य चिदचिद्वस्तुनो ब्रह्मशरीरत्वं ब्रह्मणस्तदात्मत्वञ्च "यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" "यस्यात्मा शरीरम् य आत्मानमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत" (बृ० ३।७।२२) इत्येवमादिभिः श्रुतिभिः सिद्धमेव । मायिमतेऽस्य सूत्रस्यासङ्गतत्वं दुष्परिहरम् यतस्तैः शुद्धस्य ब्रह्मण एव परिणामोऽभ्युपेयस्तथा च विकारित्वेन निर्विकारश्रुतिव्याकोपोऽनिवार्यः । यच्चात्र व्याख्यातं परिणामो विवर्त इति तदपि न विचारसहम् । दुग्धस्य दध्याकारेण परिणामवद्रज्जोः सर्पाकारेण परिणामत्वासम्भवात् । तात्त्विकोऽन्यथाभावः परिणामोऽतात्त्विकोऽन्यथाभावस्तु विवर्त इति परिणामविवर्तयोर्विभिन्नार्थकत्वान्न विवर्तवादस्यात्र प्रसरः । एवमवच्छेदप्रतिबिम्बादिवादानामपि प्रकृतार्थविघातकत्वम् । अस्मन्मते तु "तत्सृष्ट्वा तदेवानुप्राविशत्" "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत" इत्येवमादिभिः श्रुतिभिः परिणामो विशेषणांश उपपद्यतेतराम् । विशेष्यांशे निर्विकारत्वमप्यक्षतम् । उभयोरपि ब्रह्मस्वरूपत्वमेवेत्येकस्यैवोपादानतापि सम्पन्नेति वस्तुतस्तु-अव्याकृतनामरूपयोर्व्याकरणमात्रमेव सृष्टिः सैव च परिणामशब्देनोच्यत इति सर्वं समञ्जसम् ॥२७॥

## योनिश्च हि गीयते ।१।४।२८।

"तद्भूतयोनिं परिपश्यन्ति धीराः" (मु० १।१।६) "कर्त्तारमीशं

पुरुषं ब्रह्मयोनिम्" (मु० ३।१।३) इति ब्रह्मैव सर्वभूतयोनिशब्देन गीयते। हि यस्मात्तस्मात्सर्वभूतयोनित्वाज्जगदुपादानं निमित्तञ्च ब्रह्मैवेति सिद्धम् ॥२८॥

* अथ सर्वव्याख्यानाधिकरणम् ॥८॥

## एतेन सर्वे व्याख्याता व्याख्याताः ।१।४।२९

"यतो वा इमानि भूतानि जायन्ते" इति सर्वज्ञसर्वशक्तिपरमपुरुषपरत्वेनोपक्रमान्मध्येऽपि जगत्कारणपरवाक्यानामभ्यासात् "तद्भूतयोनिम्" इत्यादिना ब्रह्मादिसर्वचराचरभूतकारणपरमात्मपरत्वेनोपसंहारात् सर्वेषां वेदान्तानां जगत्कारणे परमपुरुषे समन्वयत्वसिद्धेः। "सर्वे वेदा यत्पदमामनन्ति" (का० १।२।१५) इति समेषां वेदान्तानां तस्मैव ब्रह्मणि समन्वयस्य श्रुतत्वात् "जन्माद्यस्य यतः" (ब्र० सू० १।१।२) इत्यारभ्य "योनिश्च हि गीयते" (ब्र० सू० १।४।२८) इत्यन्तेनोक्तेन न्यायकलापेन सर्वे वेदान्ताः सर्वज्ञसर्वशक्त्याद्यनवधिकातिशयानन्तकल्याणगुणविशिष्टस्वानन्यचिन्तकभक्तोपायोपेयभूतजगदुत्पादकरक्षकपरमपुरुषश्रीरामाख्यपरब्रह्मपरत्वेन व्याख्याताः। पदाभ्यासोऽध्यायपरिसमाप्तिज्ञापनार्थः। अत्रानेन सूत्रेणैतदध्यायगतसूत्रश्रुतीनामर्थान् सम्यगवगत्यावशिष्टानि वेदान्तवाक्यान्येतदानुगुण्येनैव ज्ञेयानीत्यपि ज्ञापितम्भवतीति ॥२९॥

इति श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये प्रथमाध्यायस्य चतुर्थः पादः ॥४॥

## समाप्तश्चायं प्रथमोऽध्यायः ॥१॥

---

* एतेन न्यायवृन्देन वेदान्ता निखिला अपि। श्रीमद्रामपरत्वेन व्याख्याता इति बुध्यताम् ॥२९॥

इति पंडितसम्राटस्वामि श्रीवैष्णवाचार्य वेदान्तपीठाचार्य प्रणीताया अधिकरणरत्नमालायां प्रथमोध्यायः ॥१॥

## श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये

# द्वितीयाध्यायस्य प्रथमः पादः ।

### अथ स्मृत्यधिकरणम् ॥१॥

व्याख्याते समन्वयाख्ये प्रथमेऽध्याये समेषां वेदान्तानामखिलकल्याणगुणसागरे परमपुरुषे ब्रह्मणि समन्वयमभिधाय तन्त्राभिमतप्रधानादेः स्वातन्त्र्येण कारणस्यावैदिकत्वेनाप्रामाण्यमभिहितम् । राद्धान्तितञ्चैतस्य जगतोऽभिन्ननिमित्तोपादानकारणत्वम्परमात्मन एवेति । इदानीमस्मिन्नविरोधाख्ये द्वितीयेऽध्याये स्मृत्यादिविरोधमाशङ्क्य परिह्रियते । तत्र प्रथमे पादे सांख्यस्मृतिविरोधमाशङ्क्य श्रुतिमूलकस्मृतिविरोधेन वेदार्थप्रतिकूलतया सांख्यस्मृतेर्न वैदिकार्थनियमने प्रामाण्यमित्यनुगमय्य तत्तर्कोपतर्कितदुर्वादमपाकृत्य स्वमतं व्यवस्थाप्यते । तत्रानेनादिमेनाधिकरणेन सांख्यस्मृतिविरोधमेवोपन्यस्य समाधीयते ।

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ।२।१।१।**

अत्राय संशयः समुदेति । किं वेदान्तानां योऽयं ब्रह्मणि समन्वयः सम्पाद्यते तस्य च सांख्यादिस्मृतयो बाधिका आहोस्विन्नेति । किं युक्तम् ? बाधिका इति । कुतः ? अबाधकत्वे स्मृत्यनवकाशदोषप्रसङ्गात् । प्रमाणान्तरावेद्यस्य, शब्दमात्रैकगम्यस्य निरतिशयानन्दलक्षणमोक्षस्य च साधने

---

अथ द्वितीयोध्याय-

* रामे वेदान्तवाक्यानां पूर्वमुक्तः समन्वयः । सांख्यादिस्मृतयस्तस्य बाधिकाश्चाथवा न हि ॥१॥ आद्यः पक्षः शुभस्तासामन्यथाऽनवकाशता । अन्यासां श्रुतिमूलानां तत एव न बाधिकाः ॥२॥

प्रवृत्तानां तेषामनवकाशता स्यादिति दोषः । सांख्यादिस्मृत्यसम्मतवेदार्थोपवर्णने तथैव च मोक्षादिरूपप्रमेयस्वीकारे तासां नैरर्थक्यं स्पष्टमेव । उभयोरेकार्थप्रतिपादकत्वादेकस्या निरवकाशत्वमेव समापन्नमिति । तच्चायुक्तम् । "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्त्ति जायमानञ्च पश्येत्" (श्वे० ६।२) इति श्रुत्या सर्वज्ञत्वोक्तस्य कपिलर्षेः प्रणीतत्वेन तासां प्रामाणिकत्वात् । तस्मान्न ब्रह्मणो जगत्कारणत्वमास्थेयम् । कपिलर्षिप्रणीतप्रधानकारणवादिस्मृतीनामनवकाशरूपदोषप्रसङ्गादिति चेन्न । अन्यस्मृत्यनवकाशदोषप्रसङ्गात् । अन्यासां श्रुतिमूलकस्मृतीनां तथा सत्यनवकाशरूपदोषप्रसङ्गात् । तथा हि—"अस्मान्मायी सृजते विश्वमेतत्" (श्वे० ४।९) "मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्" (श्वे० ४।१०) "प्रधानक्षेत्रज्ञपतिर्गुणेशः" (श्वे० ६।१६) "स कारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः" (श्वे० ६।९) इत्यादिश्रुतिमूलानां परमात्मकारणवादिनीनामुपरोधात् । तत्र मानवस्मृतौ च "आसीदिदं तमोभूतम्" (म० १।५। इति प्रकृत्य "ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् । महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः" (म० १।६।) "सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः अप एव ससर्जादौ तासु वीर्यमवासृजत्" (म० १।८।) ।

"अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ।
सर्वयोनिषु कौन्तेय ! मूर्तयः सम्भवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता । गी०

इत्यादीनां चेतनब्रह्मकारणवादिनीनामाप्ततमप्रणीतानां स्मृतीनां तथा "अव्यक्तमक्षरे विलीयते अक्षरं तमसि विलीयते तमः परे देव एकी-

भवति" (मुवा० २) इति श्रुतिनिर्दिष्टस्य प्रलये परे देवे लीनस्याव्यक्तस्य प्रलयान्ते तस्मादुत्पत्त्युपपत्तेस्तन्मूलिकायाः "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" (भा० शा० मो०) "अव्यक्तं पुरुषे ब्रह्म निष्कले सम्प्रलीयते" (भा० शा० मो० इति स्मृतेश्चानवकाशदोपप्रसङ्गात् ।

अयम्भावः । द्वयोः स्मृत्योः परस्परं विरोधे सत्येकस्या अवकाशेऽपरस्या अनवकाशता च स्पष्टैव । न च प्रतिपाद्यविषयभेदान्नानवकाशता । मन्वादिस्मृतयो हि कर्मस्वरूपं दर्शयन्त्यः स्वांशे प्रसरतामुपलभन्ते । सांख्यादिस्मृतयश्च मोक्षमधिकृत्य प्रवर्तमानाः स्वकीयप्रतिपाद्यांशे सावकाशा इति कथमनवकाशत्वमिति वाच्यम् । कर्मणामपि परमपुरुषार्थसाधनत्वं भगवदाराधनौपयिकतयेति राद्धान्तः । "यतः प्रवृत्तिर्भूताना" मित्यादिभगवद्वचनमेवात्र प्रमाणम् । तथा च तदभिधायिनीनां स्मृतिनामस्त्येव समानविषयत्वम् । एवञ्चं तस्या अनवकाशत्वं सुतरामापन्नं । तदेवं परस्परविरोधे श्रुत्यविरुद्धा स्मृतिः प्रमाणमित्याह जैमिनिः "विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्" (जै० सू० १।३।३) प्रत्यक्षश्रुतिविरोधे सति स्मृतिवाक्यमुपेक्ष्यमनादरणीयमसति श्रुतिविरोधे स्मृतिमूलभूतं श्रुतिवाक्यमनुमेयमिति तदर्थः । एवञ्चापक्षीणसांख्यस्मृतिर्द्वयैव श्रुतिविरुद्धत्वात् "ऋषिं प्रसूत" मित्यादिश्रुतिर्हि सांख्यकर्तृकपिलान्यकपिलर्षिविषयाऽवगन्तव्येति न काचिदनुपपत्तिः । श्रुतिप्रतिपादितस्य भगवतः कपिलस्य श्रुतिविरुद्धार्थप्रतिपादकत्वानुपपत्तेरिति सर्वं समञ्जसम् ॥१॥

ननु योगेन साक्षात्कृततत्त्वस्वरूपैः कपिलादिभिर्योऽर्थो व्यवस्थापितः स एवार्थोऽन्यैर्मन्वादिभिरप्यङ्गीक्रियत इति कथं मन्वादिस्मृतीनामेव वेदानुसारित्वमित्याशङ्कायामाह–

## इतरेषाञ्चानुपलब्धेः ।२।१।२।

इतरेषां वेदार्थयाथात्म्यविदां "यद्वै मनुरवदत्तद्भेषजम्" (तै० सं० २।२।१०।२) इत्यादिश्रुत्या भेषजवज्जगद्धिताय प्रवचनकर्तॄणां मन्वादीनां

प्रधानकारणवादित्वाऽनुपलब्धेः। अतः श्रुतिविरुद्धत्वात्तदनुसारिमन्वादिस्मृतिविरुद्धत्वाच्च कपिलादिस्मृतेर्भ्रान्तिमूलकत्वनिश्चयेनाप्रामाण्यान्न ताभिर्वेदान्तसमन्वयश्शक्यो बाधयितुमिति ॥२॥

* अथ योगप्रत्युक्त्यधिकरणम् ॥२॥

## एतेन योगः प्रत्युक्तः ।२।१।३।

योगस्मृतिः किं वेदान्तानामुपबृंहणभूताऽहोस्विन्नेति संशयः। उपबृंहणभूतेति पूर्वः पक्षः। उपबृंहणं हि तत्समानार्थकैः पदैर्वाक्यैर्वा तदर्थप्रकाशनम्। श्रुतिसिद्धार्थस्य विशदीकरणं वेति वैदिकसिद्धान्तस्यैव योगशास्त्रेऽपि दर्शनात्। वेदान्तप्रवर्तकहिरण्यगर्भप्रणीतत्वात्सेश्वरत्वाच्च योगस्य वेदान्तोपबृंहणत्वं न्याय्यम्। तथा च तत्स्मृतेः प्रधानपरत्वेन वेदान्तानामपि प्रधानोपादानप्रतिपादकत्वमेष्टव्यमिति प्राप्तेऽभिधीयते।

एतेन योगः प्रत्युक्त इत्यतिदेशः। एतेन प्रधानकारणत्ववादिकपिलस्मृतिनिराकरणेन प्रधानपरा योगस्मृतिरपि प्रत्युक्ता निराकृता वेदितव्येत्यर्थः। अतिदेशस्तु वैदिकहिरण्यगर्भप्रणीतत्वेन सेश्वरत्वेन प्रमाणत्वशंकानिराकरणाय कृतः। योगस्मृतावीश्वरस्वीकारेऽपि तस्य निमित्तकारणत्वम्। उपादानत्वन्तु प्रधानस्यैवेति न तस्या वेदान्तोपबृंहणत्वं न्याय्यम्। ॥ ३ ॥

× अथ विलक्षणत्वाधिकरणम् ॥३॥

## न विलक्षणत्वादस्य तथात्वञ्च शब्दात् ।२।१।४।

स्मृतिविरोधे परिहृतेऽपि तर्कमाश्रित्य पुनराक्षेपः क्रियते। यदुक्तं

---

* स्यादुपबृंहणं योगो वेदान्तानामथो न वा ? वैदिकसेश्वरत्वाच्च ब्रह्मोक्त्या चोपबृंहणम् ॥३॥ नैतद् युक्तं विभेदचापि दोषजभ्रान्तिसम्भवात्। यन्नोपादानताऽस्मिन् केवलं तु निमित्तता ॥४॥

× कार्यता जगतश्चास्य प्रकृतेर्ब्रह्मणोऽथवा ? सादृश्यात् प्रकृतेरेव

सर्वैर्वेदान्तैर्ब्रह्मण उपादानत्वञ्जगतश्चोपादेयत्वमभिधीयत इति तन्नोपपद्यते । चित्स्वरूपान्निरतिशयानन्दादखिलहेयप्रत्यनीकात्स्वाभाविकनिरतिनिरतिशयनिरवधिकासंख्येयकल्याणगुणविशिष्टाद् ब्रह्मणोऽज्ञत्वेन दुःखभोक्तृत्वेन जन्ममरणादिभाक्त्वादिना दृश्यमानस्य चिदचिदात्मकस्य जगतो विलक्षणत्वाद् ब्रह्मोपादानकत्वाऽसम्भवात् । यद्यस्माद्विलक्षणं न तत्तत्कार्यमिति नियमः । यथा मृद्विलक्षणस्य पटस्य न मृत्कार्यत्वं यथा वा गोधूमविलक्षणस्य कोद्रवस्य न गोधूमकार्यत्वम् । तथा चैतन्यानन्दशालिब्रह्मणो विलक्षणत्वादचैतन्यासुखविशिष्टस्य जगत इति न जगतोऽपि ब्रह्मकार्यत्वम् ।

एतद्वैलक्षण्यञ्च कुतोऽवगतमित्यत आह तथात्वञ्च शब्दादिति । न केवलं प्रत्यक्षादिना वैलक्षण्यमवगम्यते किन्तु शब्दादप्यवगम्यते । तथा हि "ज्ञाज्ञौ द्वावजावीशानीशौ" "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।" (मु० ३।१।१) "अस्मान्मायी सृजते विश्वमेतत्" (श्वे० ४।९) "विज्ञानञ्चाविज्ञानञ्च" (तै० ३।६।३) भोक्ता भोग्यं प्रेरितारञ्च मत्वा" ( श्वे० १।१२ ) इत्येवमादिभ्यस्तयोर्वैलक्षण्यस्य स्पष्टमवगमात् ।

अतः प्रधानसालक्षण्यानुरोधेन जगतः प्रधानोपादानकत्वमेव । अयम्भावः । केषाञ्चित् प्रमाणानां तर्कप्रसादितानामेव कार्यप्रयोजकत्वेन तर्कोऽप्यङ्गीकरणीय एव भवति । अत एव "यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" ( मनु० १२ ) इति मानवं वचः । श्रुतिरपि "श्रोतव्यो मन्तव्यः" (बृ० ६।५।६) इत्यादिना तर्कस्य वस्तुनोऽध्यवसायजनकत्वमभिधत्ते । न च जगतश्चेतनस्य ब्रह्मण एव कार्यत्वं चैतन्योनुपलब्धिस्त्व-

---

वैलक्षण्याच्च चेन्नातुः ॥५॥ ईश्वरस्यैव तु सा चेष्टा वैलक्षण्यं न बाधकम् । विलक्षणाद्धि दध्यादेः कृम्यादिजन्मदर्शनात् ॥६॥

नुद्भूतत्वात् । सुषुप्तौ जीवेष्वनुपलम्भवदिति वाच्यम् । दृष्टान्ते स्वापापगमदशायामुपलम्भादसिद्धिः । नित्यानुपलम्भस्त्वसत्त्वमेव गमयति नरविषाणवदिति न सर्वस्य जगत्पदाभिधेयस्य चैतन्यसत्त्वं शक्यमातर्कितुमिति न विपरीततर्कावकाशस्तस्माद्विलक्षणत्वान्न ब्रह्मकार्यत्वञ्जगत इति ॥४॥

नन्वचेतनत्वेनावगतानामिन्द्रियादीनामपि चैतन्यमुपवर्ण्यते ते ह वाचमूचुस्त्वं न उद्गायेति (बृ० १।३।२)"ते हेमे प्राणा अहं श्रेयसे विवदमाना ब्रह्माणं जग्मुः" (　　　) "तं ह पृथिव्यब्रवीत्" (यजु० ५।५।२) "आपोऽब्रुवन्" (शत० प० ब्रा० ६।१।३।२४) इति । एवं सागरादिविशेषपदार्थानामपि चैतन्यं पुराणेषूपलक्ष्यत इति कथं वैलक्षण्यमित्यत आह–

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ।२।१।५।

तुशब्दः शङ्कानिवर्तकः । न पृथिव्यादिमात्रस्यायं व्यपदेशः । अपि तु पृथिव्याद्यभिमानिदेवतानाम् । कुत इदमवगम्यते । विशेषानुगतिभ्याम् । विशेषो विशेषणम् । "हन्ताहमिमास्तिस्रो देवताः" (छा० ६।३।१) इति देवतापदस्य पृथिव्यादिविशेषणत्वश्रवणात् । छान्दोग्ये बृहदारण्यके च प्राणानां विवादः श्रूयते कौषीतकिब्राह्मणे तु "एता ह वै देवता अहं श्रेयसे विवदमाना" (कौ० ब्रा०) इति प्राणानामेव देवतापदेन विशेषितत्वात् । एवं "अग्निर्वाग्भूत्वा मुखं प्राविशत्" (ऐ० १।२।४) "आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्" (ऐ० १।२।४) इत्यादावग्न्यादित्यादीनां मुखादिष्वनुगतेरनुप्रवेशस्य श्रवणात् । "पृथिव्यब्रवीदि"त्यादेस्तदभिमानिनी देवता ह्यब्रवीदित्यर्थस्तथा च जगतो ब्रह्मविलक्षणत्वमेवेति प्रधानकार्यत्वमेव वेदान्तनियतमिति ॥५॥

एवमातर्किते समाधानमाह–

## दृश्यते तु ।२।१।६।

तुना पक्षो व्यावर्त्यते । चेतनप्रसिद्धपुरुषाच्च विलक्षणानां केशनखा-

दीनामुत्पत्तिरचेतनाद्गोमयादेश्च क्रम्यादीनामुत्पत्तिर्गोमयाच्चेतनस्य वृश्चिकस्योत्पत्तिर्दृश्यते। तस्मान्नायं नियमो यस्य यत्कार्यं तत्तस्मादविलक्षणमिति। विलक्षणयोरपि कार्यकारणभावदर्शनात्। नहि केवलेन तर्केण कश्चिदपि वैदिकोऽर्थोऽवधारयितुं शक्यः श्रुतिनिषिद्धत्वात्। "नैषा तर्केण मतिरापनेया" (का० १।२।९।) इति। तर्कश्च स्वमनीषोपकल्पिता युक्तिः सा च न सर्वथा प्रामाणिकमेव प्रत्ययं जनयेत्। क्वचिद्विपरीतार्थप्रत्ययस्यापि सम्भवात्। परिमितत्वाद्दोषसहकृतत्वाच्च पुरुषबुद्धीनाम्। तस्माद् ब्रह्मविलक्षणस्यापि जगतो ब्रह्मकार्यत्वमुपपन्नतरम् ॥६॥

## असदिति चेन्न प्रतिषेधमात्रत्वात् ।२।१।७।

ननु पुरुषात्तदुत्पन्नकेशनखादीनां विलक्षणत्ववत् गोमयाच्चोत्पन्नस्य वृश्चिकादेर्वैलक्षण्यवत्कारणाद्ब्रह्मणः कार्यभूतं जगद्विलक्षणं चेत्तर्हि कारणात्कार्यस्य द्रव्यान्तरत्वेन कारणे ब्रह्मणि कार्यस्य जगतोऽविद्यमानत्वेनासत एव जगत उत्पत्तिः प्रसज्येतेति चेन्न, निरुक्तदृष्टान्तानां कार्यकारणयोः सालक्षण्यनियमस्य प्रतिषेधमात्रत्वात्। न तु तयोरनन्यत्वस्य सालक्षण्यस्य वा। मृद्घटसुवर्णकुण्डलादीनां कारणकार्याणां सालक्षण्यदर्शनात्।

अयम्भावः। यथा मृत्सुवर्णादीनां त्रिवृत्कृतत्वेन त्रिभूतात्मकत्वेऽपि मृदादीनामेव तत्र प्राधान्यात्तत्सर्वमेकेन मृच्छब्देनोच्यते एवं सूक्ष्मचिदचिद्विशिष्टस्य कारणावस्थस्य ब्रह्मणः तत्त्वत्रयात्मकत्वेऽपि तत्र ब्रह्मणः प्रधानत्वात् तत्त्वत्रयमप्येकेन ब्रह्मशब्देनोच्यते "ब्रह्म वा इदमग्र आसीत्" (बृ० १।४।१०) "सर्वं खल्विदं ब्रह्म" (छा० ३।१४।१) इत्येवमादिभिः। यथा च तत्र घट इति नामधेयं विकारो रचनाविशेषो वाचारम्भणं वागालम्बनमात्रं मृत्तिकैव सत्यम् तथा जगदिति नामधेयं जगदाकारो विकारो रचनाविशेषो वाचारम्भणं वागालम्बनमात्रं वस्तुतश्चिदचिच्छरीरकं ब्रह्मैव सत्यमिति सूक्ष्मचिदचिद्विशिष्टं ब्रह्मैव कारणम्। तदेव स्थूलचिद-

चिच्छरीरं कार्यमिति कारणकार्यावस्थञ्च सर्वं ब्रह्मैवेतीममेवार्थं "सर्वं ह्येतद् ब्रह्म" "सर्वं खल्विदं ब्रह्म" "अयमात्मा ब्रह्म" "तत्त्वमसि" ' सदा रामोऽहमित्येतत्तत्त्वतः प्रवदन्ति ये। न ते संसारिणो नूनं राम एव न संशयः" इत्येवमाद्याः श्रुतयो ज्ञापयन्ति। तदेवं ब्रह्मतत्कार्ययोः सालक्षण्यादेव ब्रह्मणः सर्वजगत्कारणत्वम्। तज्ज्ञानेन सर्वजगज्ज्ञानञ्चोपपद्यते न तयोर्वैलक्षण्येन। तथा स्वीकारे कारणज्ञानेन तत्कार्यज्ञानानुपपत्तेः। "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते सर्वमिदं विदितं भवति" इत्येकज्ञानेन सर्वज्ञानप्रतिज्ञायाः "यथा सोम्येकेन मृत्पिण्डेने"त्यादिदृष्टान्तानाञ्च वैयर्थ्यं स्यात्। एवञ्चासत्कार्यवादस्य न ब्रह्मकारणवादे प्रसरो वेदान्तेषु सत्कार्यवादस्यैवाभ्युपगमात्। तथा च नासदुत्पत्तिरिति ॥७॥

## अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ।२।१।८।

पुनराशङ्कते। ननु ज्ञानशक्त्यादिगुणकं ब्रह्मैव स्वस्माद्विलक्षणजगदाकारेण परिणमते तदेव चोपादानमस्य जगत इति यदुक्तं तदसमञ्जसम्। कुतः ? अपीतौ तद्वत्प्रसङ्गात्। अपीतिः प्रलयः सृष्ट्यादेरुपलक्षकः। जगतो ब्रह्मणि प्रलये तत उत्पत्तावपि जगद्वदज्ञत्वकर्मपरवशत्वदुःखित्वादिजगद्धर्माणां ब्रह्मणि प्रसङ्गात्। वेदान्तवाक्यानि च ब्रह्मणो दिव्यगुणवत्त्वमभिदधते। तस्माद्वेदान्तवाक्यानामसामञ्जस्यान्न ब्रह्मकारणवाद इति ॥८॥

अत्र समाधानमाह—

## न तु दृष्टान्तभावात् ।२।१।९।

तुशब्दः प्राप्ताशङ्काम्परिहरति। प्रदर्शितार्थे दृष्टान्तभावान्नास्त्यसामञ्जस्यम्। कार्यकारणभावेनावस्थितावप्येकस्यैव ब्रह्मणो न दोषसम्बन्धो दृष्टान्तस्यात्र सद्भावात्।

अयमभिप्रायः। "यथा सर्वगतः सौक्ष्म्यादाकाशो नोपलिप्यते। शरी-

रस्थोऽपि कौन्तेय तथात्मा नोपलिप्यते" (गी०) इति स्मृतेः । यथा बाल-स्वयुवत्वस्थाविरादयः शरीरस्यावस्थाविशेषास्तच्छरीरिण्यात्मनि न सम्बध्यन्ते । ज्ञानसुखादयश्चात्मधर्मा न शरीरे तथा ब्रह्मशरीरभूतचिदचिद्वस्तुगताः कर्मवश्यत्वाज्ञत्वादयो धर्मांश्चिदचिच्छरीरिणि कार्यकारणोभयावस्थान्वयिनि परस्मिन्ब्रह्मणि न सम्बध्यन्ते । ब्रह्मगताश्चापहतपाप्मत्वादयो ज्ञानशक्तिबलैश्वर्यवीर्यतेजस्त्वादयो धर्मा न तच्छरीरभूतचिदचिद्वस्तुनीति सुगमः पन्थाः । विशिष्टस्य च ब्रह्मणो धर्मित्वेन चिदचिद्रूपयोर्धर्मभूतयोः स्वरूपेण भिन्नत्वेऽपि नित्यविशेषणतयाऽपृथक्सिद्धतया ह्यभिन्नत्वमित्येकमेवोभयावस्थं ब्रह्म तिष्ठति । अत एव विशेषणानां व्यावर्तकत्वनियमाच्च परस्परं व्यावृत्तिरपि फलिता भवति । सर्वस्य चिदचिद्वस्तुनः परमात्मशरीरत्वं परमात्मनस्तदात्मत्वञ्चासकृच्छ्रुतिषूपदिष्टम् । "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः" (बृ० ३।७।३) इत्यारभ्य "यो विज्ञाने तिष्ठन्, यस्य विज्ञानं शरीरं, य आत्मनि तिष्ठन् यस्यात्मा शरीरम्" (बृ० ३।७।२२) इत्याद्यन्तर्यामिब्राह्मणादिषु प्रसिद्धम्। "जगत्सर्वं शरीरन्ते" (वा० रा० यु०) इति सर्वस्य चिदचिन्मयस्य जगतो रामाख्यपरब्रह्मशरीरत्वस्मरणान्नोक्तदोषावकाशः ॥९॥

## स्वपक्षदोषाच्च ।२।१।१०।

सांख्यादिपूर्वपक्षिभिर्ये दोषा ब्रह्मकारणवादे समुद्भावितास्तेषामदोषत्वाद्वेदान्तमतस्य स्वीकृतौ न काचिदनुपपत्तिः । पर सांख्यादिमते तु तेषां दुष्परिहरत्वात्तन्मतपरित्यागः । तथा हि-प्रधानस्याचेतनत्वान्न चिदचिन्मिश्रस्य जगतस्तत्र उत्पत्तिः सम्भवति । पुरुषसन्निहितप्रधानादपि न । असङ्गत्वात्पुरुषस्य । पुरुषोपरागादिति चेन्न निष्क्रियस्योपरञ्जकाभावात्। प्रकृतिपुरुषयोरनादिभूत एवोपराग इत्यपि नानिर्मोक्षप्रसङ्गात् । प्रलया-

भावप्रसङ्गाच्च । तस्मान्न सांख्याभिमतप्रधानकारणवादस्य प्रसर इति ब्रह्मकार्यत्वमेव जगत इति ॥१०॥

## तर्काप्रतिष्ठानादप्यन्यथानुमेयमितिचेदेवमप्यविमोक्षप्रसङ्गः ।२।१।११।

इतश्च ब्रह्मकारणवादस्यैवाभ्युपगम्यत्वात् । यतः परमवैदिकैर्न केवलं शुष्कतर्काणामवबोधकत्वम् । तेषामप्रतिष्ठानात् । स्वकीयबुद्धया हि तस्यार्थस्य परेण निराकृतत्वसम्भवात् न च कपिलादीनां विशेपदर्शित्वान्न तर्काणामप्रतिष्ठेतिवाच्यम् । विशेपदर्शित्वाविशेपेण कणादगौतमादिप्रयुक्ततर्काणामपि तथात्वावगमात् । तथा च तत्तदाचार्यो हि तत्तर्काणामन्योन्यविरोधिनामानन्त्यादनवस्थादीस्थ्यम् । अप्रतिष्ठितत्वञ्चानुमितिविघटनद्वारा । यथार्थज्ञानाजनकत्वेन चाप्रामाण्यं निष्पन्नतरमेव । नन्वन्यथानुमानेनाप्रतिष्ठितत्वदोषः । तर्काणां प्रतिष्ठितत्वाप्रतिष्ठितत्वे अपि तर्कव्यवस्थाप्ये इति शक्यत एव प्रतिष्ठितत्वं तर्कनिष्ठं कल्पयितुम्। तर्के प्रतिष्ठितत्वञ्च प्रतिज्ञाद्यन्यतमन्यायावयवसमन्वितत्वम् । सर्वथापि तर्काप्रतिष्ठायामुपरुन्ध्येत लौकिकोऽपि व्यवहारोऽतः सत्तर्काणान्तु प्रतिष्ठितत्वमन्येषामप्रतिष्ठितत्वमितिव्यवस्थाया जागरूकत्वान्नाखिलतर्कनिराकरणेनोपपादयितुमलं ब्रह्मकारणवाद इति चेत् । एवमप्यविमोक्षप्रसङ्गः । अनुमानस्य प्रत्यक्षसापेक्षत्वान्महानसादौ प्रत्यक्षेण धूमधूमध्वजयोर्नियतसम्बन्धमावलय्य तयोर्व्याप्यव्यापकभावञ्च विनिश्चित्य गिरिमूलादविच्छिन्नमूलां निस्सरन्तीं धूमलेखां साक्षात्कुर्वंस्तेन लिङ्गेन लिङ्गिनं वह्निमनुमिनोति कश्चित्तार्किकः । अत्र तु ब्रह्मतल्लिङ्गयोरप्रत्यक्षत्वेन तद्व्याप्तिज्ञानाभावात्परामर्शासम्भवेनानुमित्यसम्भवान्न ब्रह्मणस्तर्कगम्यत्वमुपपद्यते ।

अपि चान्यत्र प्रतिष्ठितस्यापि श्रुतिविरोधिनस्तर्कस्य प्रकृतेऽप्रतिष्ठानात् । श्रुत्यनुकूलस्य तर्कस्य तु श्रुत्यर्थनिश्चायकत्वादुपादेयत्वमेवेति हृदयम् । तथा च ।

प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता । मनु० १२।१०५।
आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः । मनु० १२।१०६।

इत्यादि वचनैर्वेदाविरोधितर्कस्यैव तत्त्वनिर्णयसहकारित्वमुक्तम् । प्रकृते तु केवलं तर्कवादमाश्रित्य प्रधानकारणतायां नाप्रतिष्ठितत्वरूपदोपान्मोक्ष इति शुष्कतर्कनिरासः । अत एव "अचिन्त्या खलु ये भावा न तांस्तर्केण योजयेत्" इत्येवं श्रौतार्थनिर्णये शुष्कतर्काणां पौराणिकनिषेधोऽपि दृश्यते । तस्माच्छ्रौतमार्गमवलम्ब्य ब्रह्मण एव जगत्कारणत्वमास्थेयमिति दिक् ॥११॥

* अथ शिष्टापरिग्रहाधिकरणम् ॥४॥

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ।२।१।१२।

एतेन तर्कमूलकपिलस्मृतिनिराकरणेन शिष्टैर्न परिगृह्यन्त इति शिष्टापरिग्रहाः शिष्टैरपरिग्रहीताः पतञ्जलिकणादगोतमादिस्मृतयोऽपि व्याख्याता निरस्ता इत्यर्थः ।वेदविरुद्धार्थपराणां सर्वेषां तर्काणां वेदबाधितत्वेनाप्रमाणत्वादिति भावः ॥१२॥

× अथ भोक्त्रापत्त्यधिकरणम् ॥५॥

## भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ।२।१।१३।

पुनरपि ब्रह्मकारणवादो यौक्तिकमतमास्थाय सांख्यैराक्षिप्यते । यदुक्तं

---

* शिष्टापरिग्रहा ये च तर्कमात्रावलम्बिनः । तेषां मतं प्रमाणं वा नो वा ? किं स्यादनुत्तमम् ॥७॥ पूर्वमेव यतस्तत्र तर्कमूलकता स्थिता । उच्यते चात्र मैवं, यद् वेदेन बाधितत्वतः ॥८॥ मताऽऽम्नायविरुद्धानां तर्काणामप्रमाणता । अचिन्त्येषु हि भावेषु तर्काणाञ्च निषेधनात् ॥९॥

× चिदचिद्देहिरामस्योपादानत्वं प्रकीर्तितम् । देहित्वात्तस्य भोक्तृत्वं

सूक्ष्मचिदचिच्छरीरकम्ब्रह्मकारणावस्थमुपादानं तदेव च स्थूलचिदचिच्छरीरं सदुपादेयमिति तन्नोपपद्यते। सशरीरत्वे तस्य जीवस्येव शरीरप्रयुक्तसुखदुःखभोक्तृत्वापत्तेः। ततश्च प्रत्यगात्मनोऽविभागो विभागाभावाद्ब्रह्मणोऽपि जीवभावापत्तिस्स्यात्। ननूक्तमेव बालत्वस्थविरत्वादयः शरीरधर्मा न प्रत्यगात्मनि न वाक्यत्वादयस्तद्धर्माः परमात्मनि सम्बन्ध्यन्त इति चेत्सत्यम्। शरीरगतबालत्वादिविकाराणामात्मन्यसम्भवेऽपि शरीरधातुसाम्यवैषम्यहेतुकस्यात्मनि सुखदुःखसंयोगस्यावश्यम्भावात्।

तथा चोक्तम्।

विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्।
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते। गी०।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते। गी०।

इति। तथा "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" (छा० ८।१२।१) इति श्रुतिः। तथा च परमात्मनोऽपि शरीरसामान्यात्तस्यापि जीवस्येव सुखदुःखभोक्तृत्वापत्तेर्जीवेश्वरयोरविभागापत्तिः स्यादिति प्राप्तेऽभिधीयते-स्याल्लोकवत्-कर्मपरवशतया भोक्तुर्जीवाद्दिव्यकल्याणगुणसागरस्य परमात्मनो विभागः स्यादेव। न हि शरीरसंयोगहेतुकः सुखदुःखोपभोगोऽपि तु पुण्यपापरूपकर्महेतुक इति न शरीरसंयोगनिबन्धनः सुखदुःखयोस्संसर्गः। श्रूयते चैकस्मिञ्छरीरे वसतोऽपि जीवेश्वरयोः कर्मफलभोक्तृत्वेन स्वरूपस्वभावयोर्विभागः "द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" (मु० ३।१।१) इति। यथा लोके समानाधिकरणयोरपि स्वस्वामिनोर्मध्य एको रोगी दरिद्रश्चापरस्तु धनी नीरोग इति स्पष्टमेव तयोर्विभागः।

एवञ्च ब्रह्मणो जगदुपादानत्वेऽपि न विकारित्वाशक्त्वादिदोषापत्तिः।

---

तस्माज्जीवाविभागता ॥१०॥ सम्भवेत् सा न वा? किं स्यात्? सम्भवेदुक्तहेतुतः। विभज्यतं स जीवात्तु कर्माभावेन लोकवत् ॥११॥

चिदचिच्छरीरकस्यैव तस्य जगदुपादानत्वस्वीकारात्। "विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्" (गी०) इति प्रामाण्याद्विकारित्वादीनां ब्रह्मशरीरभूताचित्पदार्थे पर्यवसानात्। अज्ञत्वसुखदुःखभोक्तृत्वादीनान्तु तच्छरीरभूतचित्पदार्थे जीवे पर्य्यवसानाद् ब्रह्मणः सर्वान्तर्यामितया सर्वात्मत्वाच्छरीरभूतप्रकृतिजीवगतानां विकारित्वाज्ञत्वादिदोषाणामाश्रयत्वस्याभावात्।

तर्हि "ब्रह्म वा इदमग्र आसी" दिति श्रुतिसिद्धं ब्रह्मोपादानं जगदिति वचनं कथमुपपद्यताम्, प्रकृतिजीवपरमात्मनां त्रयाणामपि जगदुपादानत्वादिति चेदुच्यते। यथा पृथिव्यास्त्रिवृत्कृतत्वेन त्रिभूतात्मत्वेऽपि तत्र पृथिव्या एव प्राधान्यात्सर्वं त्रिभूतात्मकमपि पृथिवीशब्देनोच्यते। तथा जगदुपादानत्वस्य तत्वत्रयनिष्ठत्वेऽपि तत्र ब्रह्मण एव प्राधान्यात्तत्वत्रयमपि ब्रह्मशब्देनैवोच्यते। यथा च "तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" (छा० ६।३।२) इति श्रुत्या पृथिव्यप्तेजसां त्रिवृत्करणत्वनिश्चयात् दृष्टान्तरूपस्य "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञात स्यात्" इत्यस्याप्तेजोविशिष्टं मृण्मयमस्तीति विज्ञातं स्यादित्यर्थस्य निष्पन्नत्वात्। तथा दार्ष्टान्तस्यापि चिदचिद्विशिष्टस्य कारणस्य ब्रह्मणो विज्ञानेन सर्वं तत्कार्यं जगत् चिदचिद्विशिष्टं ब्रह्म वास्तीति विज्ञेयमितिराद्धान्त इति सर्वमनवद्यम्। ॥१३॥

* अथारम्भणाधिकरणम् ॥६॥

## तदनन्यत्वमारम्भणशब्दादिभ्यः ।२।१।१४।

किं कारणाद्ब्रह्मणस्तत्कार्यं जगदन्यदाहोस्विदनन्यदिति संशये कार-

---

* कारणाद् ब्रह्मणोऽन्यत्वं कार्यस्य जगतो न वा ?। संमुख्याकारशब्दानां कार्याणां कालसंश्रयोः ॥१२॥ कार्यकारणयोर्भेदादन्यत्वञ्चोभयोर्मतम्। अन्यथा कारकाणां हि व्यापारो विफलो भवेत् ॥१३॥ आरम्भणादिशब्देभ्योऽनन्यत्वं तु तयोर्मतम्। उपलब्धेश्च भावे हि कार्यसत्वश्रुतेरपि ॥१४॥

णभूताद् ब्रह्मणोऽन्यदेव जगत्। कुतः ? ज्ञानशक्तिबलैश्वर्यतेजोवीर्यादिनिरवधिकनिरतिशयासंख्येयकल्याणगुणविशिष्टादानन्दमयाद्ब्रह्मणोऽज्ञत्वानीशत्वकर्मवश्यत्वदुःखित्वादिधर्मवतो जगतोऽन्यत्वावगमात्। कार्यकारणबुद्धेरेकरूपत्वाऽनुपपत्त्याऽनेकरूपत्वनिष्पत्तेः। न हि मृच्छब्देन घट उच्यते घटशब्देन मृद्वा तथा शब्दभेदादपि कार्यकारणयोर्भिन्नत्वमेव तस्मान्न ब्रह्मणोऽनन्यत्वञ्जगत इति प्राप्त आह तदनन्यत्वमारम्भणशब्दादिभ्य इति। तयोः कार्यकारणयोर्जगद्ब्रह्मणोरनन्यत्वमेव। यद्वा तस्मात्कारणाद् ब्रह्मणस्तत्कार्यभूतस्यजगतोऽनन्यत्वमेवकुतोऽवगम्यते तत्राह। आरम्भणशब्दादिभ्य इति। आरम्भणशब्द आदिर्येषां वाक्यानान्तेभ्य इति विग्रहः। यथा "सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छा० ६।१।४) "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" (छा० ६।८।४) "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" (छा० ६।८।७) इत्यादिभ्यो वाक्येभ्यः परस्माद् ब्रह्मणो जगतोऽनन्यत्वमवगम्यते। यथैकेन मृत्पिण्डेन समारब्धा घटशरावादयः कारणभूतात्तस्मान्मृत्पिण्डाद् द्रव्यान्तरत्वेन नातिरिच्यते।

"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य" मित्यत्रारभ्यते-आलभ्यते स्पृश्यत इत्यारम्भणम्। बाहुलकात्कर्मणि ल्युट्। वाचा-वाक्पूर्वकेण व्यवहारेण हेतुनेत्यर्थः। उदकाहरणादिव्यवहारार्थं मृदेव नामधेयान्तरसंस्थानान्तरभाग्भवति। तस्मादेवोक्तं मृत्तिकेत्येव सत्यम्। मृदेव प्रमाणेनोपलभ्यते। न तु द्रव्यान्तरम्। यथैकस्यैव देवदत्तस्यावस्थाभेदैर्बालो युवा स्थविर इति बुद्धिशब्दान्तरादयः कार्यविशेषाश्च दृश्यन्ते। तथैव प्रकृतेऽपि ज्ञेयम्। अतो न कार्यकारणविषयाया बुद्धेरेकरूपत्वानुपपत्त्यानेकरूपत्वसिद्धिः। अत एव न वाच्यवाचकशब्दभेदोऽपि।

"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"(छा० ६।२।२) इत्यत्र सदेवासीदिति सृष्टिप्राक्काले ब्रह्माभेदप्रतिपादनमुखेन सत्कार्यवादमुक्त्वा तद्वि-

रोध्यसत्कार्यवादं नैयायिकाभिमतं वाचारम्भणमित्यादिना प्रतिक्षिप्तमपि कण्ठतः प्रतिक्षेप्तुं तन्मतं "सद्धैक आहुरस देवेदमग्र आसीत्" (छा० ६।२।१) इत्यादिनोपन्यस्य "कथमसतः सज्जायत" (छा० १।२।२) इत्यादिना निराकृतम्। तदेतत्कार्यावस्थस्य कारणावस्थस्य च चिदचिद्वस्तुनः स्थूलस्य सूक्ष्मस्य च परब्रह्मशरीरत्वम्। परस्य च ब्रह्मण आत्मत्वमन्तर्यामिब्राह्मणादिषु सिद्धं स्मारितम्। अचिद्वस्तुनि सजीवे ब्रह्मण्यात्मतयावस्थिते नामरूपव्याकरणवचनाच्चिद्वस्तुशरीरकं ब्रह्मैव जगच्छब्दवाच्यम्। सदेवेदमग्र एकमेवासीदित्यादिसर्वमुपपन्नतरम्। शरीरभूतचिदचिद्वस्तुगतास्सर्वे विकाराश्चापुरुषार्था इति ब्रह्मणो निरवद्यत्वं कल्याणगुणाकरत्वञ्च सुस्थितम्।

अत्रेदं तत्वम्। चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्मैव सर्वदा सर्वशब्दाभिधेयम्। तत्कदाचित्स्वस्मात्स्वशरीरतयाऽपि पृथग्व्यपदेशानर्हसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरम्। तत्कारणावस्थं ब्रह्म। कदाचिच्च विभक्तनामरूपव्यवहारार्हस्थूलदशापन्नचिदचिद्वस्तुशरीरम्। तच्च कार्यावस्थमिति कारणात्परस्माद् ब्रह्मणः कार्यरूपं जगदनन्यच्छरीरभूतचिदचिद्वस्तुनः शरीरिणो ब्रह्मणश्च कारणावस्थायां कार्यावस्थायाञ्च श्रुतिशतसिद्धया स्वभावव्यवस्थया च गुणदोषव्यवस्था "न तु दृष्टान्तभावात्" (ब्र० सू० २।१।९) इत्यत्रोक्ता बोध्येति सर्वमवदातम्।

ये तु कार्यकारणयोरनन्यत्वं कार्यस्य मिथ्यात्वाश्रयणेन वर्णयन्ति न तेषां कार्यकारणयोरनन्यत्वं सिद्धयति। सत्यमिथ्यार्थयोरैक्यानुपपत्तेः। तथा सति ब्रह्मणो मिथ्यात्वं जगतः सत्यत्वं वा स्यात्। तस्मादस्मदुपवर्णितप्रकारेणैवानन्यत्वं जगद्ब्रह्मणोरिति सिद्धम् ॥१४॥

## भावे चोपलब्धेः।२।१।१५।

इतश्च कार्यस्य कारणादनन्यत्वमुपपद्यते। घटशरावादिरूपकार्यस्य सद्भावे कारणभूतमृदादेरुपलब्धेः। तथा च श्रुतिः। "सन्मूलाः सोम्येमाः

सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" (छा० ६।८।४) इति ॥१५॥

## सत्त्वाच्चावरस्य ।२।१।१६।

अवरस्य कार्यस्य घटादेर्ग्राह्युत्पत्तेः प्राङ्मृदादौ सत्त्वान्मृदोऽनन्यत्वं यथोपलभ्यते तथा कार्यस्य जगतः सृष्टेः पूर्वं ब्रह्मणि सत्त्वाच्च ब्रह्मानन्यत्वं निष्पद्यते । "सदेव सोम्येदमग्र आसी"दिति श्रुतेः ॥१६॥

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ।२।१।१७।

यच्च कार्योत्पत्तेः प्राक् कारणे सद्भावः कार्यस्याभिहितस्तदसत् "असदेवेदमग्र आसीत्" (छा० ६।२।१) "असद्वा इदमग्र आसीत्" (तै० ब्रा० ६।१।१) इत्यादिनोत्पत्तेः प्रागसत्त्वव्यपदेशादिति चेन्न । आसीदिति क्रियायास्तत्सत्त्वबोधकत्वेनासदिति पदस्य नामरूपरहितवस्तुपरत्वावगमात् शिखाया ध्वस्तत्वे 'शिखी ध्वस्त' इतिवन्नामरूपासत्त्वे वस्तुनोप्यसत्त्वव्यपदेशस्योपपत्तेः ।

एतदेव स्फुटयति । धर्मान्तरेणेति । व्याकृतनामरूपधर्मापेक्षया ह्यव्याकृतनामरूपत्वस्य धर्मान्तरत्वात् । तेन धर्मान्तरेणाव्याकृतनामरूपत्वेनास्यासदिति व्यपदेशो नह्यसदित्यत्यन्तासत्त्वस्य बोधकम् । अपि त्वव्याकृतनामरूपवस्तुपरत्वमेव । कुत इदमवगम्यते ? वाक्यशेषात् । "तस्मादसतः सज्जायत" (छा० ६।२।१।) "ततो वै सदजायत" "तदात्मानं स्वयमकुरुत" (तै० २।७।) इति वाक्यशेषेऽसच्छब्दाभिहितस्य वस्तुन एव सच्छब्देनाभिधानात् । तत एव च सृष्ट्यभिधानात् न ह्यत्यन्तासतः सत्त्वं शक्यं वक्तुम् । नवात्यन्ततुच्छादसतः सृष्टिः सम्भवतीति प्रकृतेऽसत्पदेनाव्याकृतनामरूपात्मिका व्यपदेशानर्हा सूक्ष्मावस्थैवाभिधीयते ॥१७॥

## युक्तेः शब्दान्तराच्च ।२।१।१८।

युक्तिस्तावद् "तस्मादसतः सज्जायत" (छा० ६।१।१।) इत्यसच्छ-

ब्दोऽव्याकृतनामरूपवस्तुपरः सत एव सदुत्पत्तेर्दर्शनात् । असतः सदुत्पत्तौ कोद्रवादिभ्यो गोधूमचणकादीनामपि कदाचिदुत्पत्तिः स्यात् । सर्वेषु सर्वाभावस्य सत्वात् । तस्मादसतः सदुत्पत्तेरसम्भवादसच्छब्दोऽसन्नामरूपसद्वस्तुपर एव । शब्दान्तराच्च "सदेव सोम्येदमग्र आसी"दिति सच्छब्देनोपक्रमाच्च सदेवासीत् । तत एव च जगदुत्पत्तेरिति ॥१८॥

## पटवच्च ।२।१।१९।

यथा कारणभूतास्तन्तव एवातानवितानवन्तो विलक्षण संयोगवन्तश्च पट इत्यभिधां लभन्ते । तत्र नामरूपावस्थाविशेषस्यैव भेदो न तु वस्तुतो भेदः । एवं सूक्ष्मचिदचिच्छरीरं ब्रह्मैव स्थूलचिदचिच्छरीरकं जगदित्युच्यते । अत्रापि नामरूपावस्थाविशेषस्यैव भेदो वस्तुतस्त्वभेद इति जगतो ब्रह्मानन्यत्वमेव ॥१९॥

## यथा च प्राणादिः ।२।१।२०।

यथा वायुरिति निवृत्कृतो वायुरेक एव स्थानविशेषमास्थाय प्राणापानादिसंज्ञां लभमानः कार्यान्तराणि विधत्ते । तथैव सूक्ष्मचिदचिच्छरीरं ब्रह्मापीह स्थूलचिदचिच्छरीर भवज्जगदित्याख्यां लभत इति जगतो ब्रह्मानन्यत्वं सिद्धम् ॥२०॥

❀ अथेतरव्यपदेशाधिकरणम् ॥७॥

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः २।१।२१।

इतरस्य जीवस्यारम्भणशब्देन "अयमात्मा ब्रह्म" "तत्वमसीत्यादिभिर्ब्रह्माभेदेन तदनन्यत्वव्यपदेशात् । ब्रह्मणश्च "यतो वा इमानि" (तै०

---

* जगतः कारणत्वञ्चानन्यत्वं ब्रह्मणो न वा ? जगतोऽनन्यता रामात् कारणात् प्राणिनां ततः ॥१५॥ हिताकरणेऽज्ञतादिभ्यो दोषेभ्यो तोभयं मतम् । अधिकं भेदनिर्देशादुभयं ब्रह्मणस्ततः ॥१६॥

।३।११) इति नामरूपव्याकरणपूर्विकायाः सृष्टेः श्रवणात् । तत्र जीवस्य जरामरणादिरूपक्लेशसंकुलत्वं ब्रह्मणश्च तद्रहितत्वमयुक्तम् । कुतः ? तस्य ब्रह्मानन्यत्वात् । तथा च हिताकरणादिदोषप्रसक्तिर्ब्रह्मणि सम्पद्यते । अयम्भावः । ब्रह्मणो जगत्कर्तृत्वे जीवहितस्याकरणात्तदहितस्य च करणाद् ब्रह्मणि पक्षपाताज्ञत्वादयो दोषा स्युरिति न ब्रह्मणो जगत्कारणत्वं जगतस्तदनन्यत्वमिति पूर्वपक्षे सिद्धान्तमाह–

## अधिकन्तु भेदनिर्देशात् ।२।१।२२।

तुशब्दः पूर्वपक्षव्यावर्तकः । जन्मजरामरणादिदुःखराशेर्जीवादधिकमर्थान्तरभूतम्ब्रह्म । कस्मात् ? भेदनिर्देशात् । "ज्ञाज्ञौ द्वावजावीशानीशौ" (श्वे० ६।१६) "स कारणं करणाधिपाधिपः" (श्वे० ६।१६) "प्रधानक्षेत्रज्ञपतिर्गुणेशः" (श्वे० ६।१) "पृथगात्मानं प्रेरितारञ्च मत्वा" ( श्वे० ) तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" ( मु० ३।१।१। ) "यस्यात्मा शरीरम्" (बृ० ३।७।२२) इत्येवमादिभिः सर्वज्ञत्वेशत्वतत्पतित्वतत्स्रष्टृत्वाकर्मवश्यत्वतत्सेव्यत्वादिधर्मैरज्ञत्वादिधर्मवतः प्रत्यगात्मनो ब्रह्मणो भेदेन निर्देशात् । व्याप्यत्वेनाल्पदेशवर्तिनः प्रत्यगात्मनो व्यापकत्वेनाधिकदेशवर्तिनः परमात्मन आधिक्यनिर्देशाच्च । तथा च तत्त्वमस्यादिश्रुतयो जीवस्य ब्रह्मव्याप्यत्वेन तदपृथक्सिद्धेस्तदभिन्नसत्ताकत्वादनन्यत्वं ज्ञापयन्ति । ज्ञाज्ञावित्येवमाद्याः श्रुतयो जीवब्रह्मणोः स्वरूपभेद बोधयन्ति ।

एवञ्च जीवपरयोर्भेदस्य श्रुतिशतसिद्धत्वाज्जीवानां प्राक्तनकर्मानुगुण्येन ब्रह्म तद्विलक्षणां सृष्टिं करोति । तथाविधकर्मानुसारेण सुखदुःखादिभाक्त्वं जीवानामिति न कथमपि ब्रह्मण्युक्तदोषप्रसक्तिः । न वा तस्य तदनन्यत्वविरोधो न च स्वरूपभेदबाधोऽपि सम्भवति ।

परंर्भेदश्रुतीनामौपाधिकत्वमभेदवादिनीनान्तु पारमार्थिकत्वमित्युच्यते । तदयुक्तम् । तथा सति हिताकरणादिदोषस्यानिवार्यत्वं स्यात् । अभेदश्रु-

तीनां पारमार्थिकत्वं भेदश्रुतीनान्त्वौपाधिकत्वमित्युक्तौ प्रमाणाभावश्च। विनिगमनाविरहात् विपरीतमेव किं न स्यात्तस्मादधिकबलवत्त्वाद्भेदश्रुतेरभ्यर्हितत्वाद् भेदस्यैव प्रामाणिकत्वमिति।

एवञ्च "तदनन्यत्वमारम्भणशब्दादिभ्य" (ब्र०सू० २।१।१४) इत्यनेन जगतो ब्रह्मोपादानत्वं तेन तदनन्यत्वमुपपाद्य तत्र केवलस्य ब्रह्मणो जगदुपादानत्वं चिदचिद्विशिष्टस्य वेत्याशङ्कानिवृत्तये केवलस्य ब्रह्मणो जगदुपादानत्वे जगद्धिताकरणादिदोषप्रसक्तिमभिधायाधिकन्तु भेदनिर्देशादितिचिदचिद्विशिष्टस्य ब्रह्मणो जगदुपादानत्वं स्फुटीकृतम्। ततश्च तत्त्वमस्यादिश्रुतीनां ब्रह्मणो जगदुपादानकारणत्वबोधनेन साफल्याद् भेदश्रुतीनां केवलस्य तस्य जगत्कारणत्वे दोषनिदर्शनेन चिदचिद्विशिष्टस्यैव ब्रह्मणो जगदुपादानत्वस्फुटीकरणत्वेन सार्थक्यादुभयविधश्रुतीनां सार्थक्यं निष्पद्यते। जीवब्रह्मणो भेदस्य वास्तविकत्वेन लौकिकवैदिकव्यवहाराणां कर्मज्ञानभक्तियोगप्रतिपादकश्रुतीनामर्थपञ्चकबोधकानां सर्वेषां वेदान्तानां वेदोपबृंहणीभूतस्मृतीतिहासपुराणादीनाञ्च सर्वेषां सार्थक्यमुपपद्यतेतराम्। जीवस्वरूपस्य काल्पनिकत्वे तु सर्वमिदमसङ्गतं स्यात्। तस्माद्वैदिकप्रमाणवद्भिः सर्वेषां वेदान्तानां सार्थक्यनिष्पत्तयेऽवश्यं ब्रह्मणो भिन्नस्य जीवस्वरूपस्य वास्तवत्वमङ्गीकर्तव्यमिति ॥ २१-२२ ॥

## अश्मादिवच्च तदनुपपत्तिः ।२।१।२३।

यथा पृथिवीविकाराणामश्मनां वज्रवैडूर्यन्द्रनीलपद्मरागादीनां पृथिव्यैक्यमुपपद्यते। यथा काष्ठभेदानां तृणादिनामचिद्विशेषाणामचिदैक्यञ्चोपपद्यते न तु निखिलहेयप्रत्यनीकानन्तकल्याणगुणसागरब्रह्मस्वरूपेणैक्यम्। तथा चेतनस्यापि कर्मपरतन्त्रत्वाज्ञत्वानीशत्वनियम्यत्वादिधर्मकस्यापहतपाप्मत्वसर्वज्ञत्वसर्वेश्वरत्वसर्वनियामकत्वादिधर्मविशिष्टेन ब्रह्मस्वरूपेणैक्यानुपपत्तिरवगन्तव्येति। "अयमात्मा ब्रह्म" तत्त्वमसीत्यादिसामानाधिकरण्य-

निर्देशस्तु "यस्यात्मा शरीरम्" इत्यादिश्रुतिभिर्जीवस्य ब्रह्मशरीरत्वेन ब्रह्मप्रकारत्वावगमार्थ इति सर्वं समञ्जसम् ॥ २३ ॥

## * अथोपसंहारदर्शनाधिकरणम् ॥८॥

## उपसंहारदर्शनान्नेतिचेन्न क्षीरवद्धि ।२।१।२४।

सत्यसङ्कल्पस्य परमात्मनोऽखिलचिदचिद्वर्गकारणत्वं सर्वावस्थस्य जगतो नियाम्यत्वेन ब्रह्मणश्च नियामकत्वेन तद्वैलक्षण्यमभिधायेदानीं सत्यसंकल्पस्य तस्य संकल्पमात्रेणैव जगत्सर्गो युज्यत न सहायान्तरप्रयोजनमित्युच्यते-

लोके कुलालादेर्दण्डचक्राद्युपसंहारदर्शनादुपादानस्य मृदः स्वभिन्नकुलालाद्युपसंहर्तृदर्शनाद्वाऽसहायस्य ब्रह्मणो न जगत्कर्तृत्वं तदुपादानत्वञ्चोपपद्यत इतिप्राप्त आह इति चेन्न, "क्षीरवद्धी"ति । यथा क्षीरमसहायं दध्याकारेण परिणमते तद्वच्चिदचिच्छरीरं ब्रह्मापि जगदाकारेण परिणमते । दृष्टान्तभूतस्य क्षीरस्य त्रिवृत्कृतत्वेन श्यात्मकत्वान्न दृष्टान्तदार्ष्टान्तिकयोर्विरोधः । श्रुतिरपि जगत्सृष्टौ निरपेक्षत्वमेव ब्रह्मणोऽभिधत्ते "सकारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" (श्वे० ६।९) इति । अत्र यथा क्षीरादेर्दध्याकारेण परिणामेऽधिश्रयणातञ्चनादियोगोऽपेक्षितस्तथा ब्रह्मापि प्रकृतियोगमाश्रित्य जगज्जनयतीति दृष्टान्तसाम्यम् । परमत्र सूक्ष्मचिदचिच्छरीरकमेव ब्रह्म जगज्जनयति तस्य च विशेषणविशिष्टस्यैव ब्रह्मपदवाच्यत्वमिति तु न विस्मर्तव्यम् । ततोऽतिरिक्तं किञ्चिदपि नापेक्ष्यत इत्यत्र तात्पर्यम् । अधिश्रयणातञ्चनादीनां पुनर्न परिणामे कारणत्वमपितु रसविशेषोत्पादकत्वमेवेति तत्त्वम् ॥ २४ ॥

---

* ब्रह्मणो विश्वहेतुत्वं सम्भवेदथवा न हि ? । नासहायस्य हेतुत्वमुपसंहारदर्शनात् ॥१७॥ 'सदेवे' त्यादिना तस्य बोधिता निःसहायता । ततश्च विश्वहेतुत्वं ब्रह्मणो नैव सम्भवेत् ॥१८॥ सम्भवेदसहायेऽपि क्षीरं तत्र निदर्शनम् ।

## देवादिवदपि लोके ।२ १ २५।

यथा देवादयः स्वे स्वे लोके स्वसंकल्पमात्रेणैव वस्तूनि सृजन्ति । तथा परमात्मापि स्वसंकल्पमात्रेण सर्वं जगदुत्पादयतीति ॥२५॥

### * अथ कृत्स्नप्रसक्त्यधिकरणम् ॥९॥

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ।२।१।२६।

ननु ब्रह्मणो जगत्कारणत्वं न सम्भवति । कुतः ? तस्य सावयवत्वे कृत्स्नस्य दुग्धस्य दध्याकारेण परिणामवत्कृत्स्नस्य ब्रह्मणो जगदाकारेण परिणामप्रसक्तेः । ततश्च तस्य कार्यातिरिक्तत्वानुपपत्तेः । चिदचिच्छरीरकस्य ब्रह्मणः कारणत्वपक्षेऽपि शरीरांशस्यापि तस्य कार्यत्वप्रसङ्गः । तस्य निरवयवत्वपक्षे चिदंशो जीवविभागयुक्तोऽचिदंशश्चाकाशादिविभागविभक्त इत्युक्तौ निष्कलमित्यादिनिरवयवत्वशब्दकोपप्रसक्तेरिति न ब्रह्मणो जगत्कारणत्वमिति पूर्वः पक्षः ॥२३॥

सिद्धान्तयति ।

## श्रुतेस्तु शब्दमूलत्वात् २ १।२७।

तु शब्दः पूर्वपक्षव्यावर्तकः । नैव कृत्स्नप्रसक्तिरस्ति । कुतोऽवगम्यते ? श्रुतेः । "एतावानस्य महिमा ततोज्यायांश्च पूरुषः" (यजु०) "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" स भूमिं सर्वतस्पृत्वाऽत्यतिष्ठद्दशांगुलम्" (यजु०) इत्येवं कृत्स्नस्य जगतस्तत्पादमात्रत्वश्रवणात् । ब्रह्मणो जगदनतिरिक्तत्रिपादत्वेनाधिक्यश्रवणाच्च । 'विष्टभ्याहमिदं कृत्स्नमेकां-

* ब्रह्मणो विश्वहेतुत्वं सम्भवेदथवा न हि ? ॥१९॥ विकल्पस्यासहत्वाद्धि नैव तत्तस्य सम्भवेत् । कृत्स्नस्य ब्रह्मणश्चाथो त्वंशतः परिणामिता ? ॥२०॥ शुद्धाभावान्न चाद्यः स्यादंशाभावान्न चान्तिमः । श्रुतेस्तु शब्दमूलत्वात् सम्भवेद् विश्वहेतुता ॥२१

शेन स्थितो जगदि" ति गीतास्मृतेश्च । ननु दुग्धदध्यादिन्यायेन श्रुतेर्बाधितत्वान्न तदुक्तमुपपद्यत इत्याशंक्याह शब्दमूलत्वादिति । "नैषा तर्केण मतिरापनेया" (का० १।२।६।) इति श्रुतेस्तर्काप्रतिष्ठानादित्यादिन्यायाच्च "तं त्वौपनिषदं पुरुषं पृच्छामि" (बृ० ३।६।२६।) इति तस्योपनिषन्मात्रगम्यत्वस्यैवाभिधानात् । "नावेदविन्मनुते तम्बृहन्तम्" (तै० ब्रा० ३।१२।६।७।) इति च ब्रह्मणो वेदमनधिगतवतोऽज्ञेयत्वबोधनेन तस्य वैदिकप्रमाणकत्वं निष्पद्यते । एवञ्चोभयविधवचनबलाद् ब्रह्मणो जगदुपादानत्वमवश्यमस्त्येव । तथा सावयवनिरवयवत्ववादिभिर्वचनैरपि न विरोध इति । ॥२७॥

## आत्मनि चैवं विचित्राश्च हि ।२।१।२८।

विचित्राश्च यथाग्न्येकदेशस्यानेकप्रकारवस्तुकरणेनानेकधा शक्तिर्दृश्यते । यथा जलैकदेशस्यानेकप्रकारवस्तुपिण्डीकरणेनानेकधा शक्तिरवगम्यते । एवं ब्रह्मण्यपि विचित्रसृष्टिरचनाहेतुभूता विचित्राः शक्तयः सन्ति । तथा च "शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः । यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः । भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता"(वि० पु० अ० १ अ० ३।२।३) इतिविष्णुपुराणवचनादवगम्यते । एवञ्च सूक्ष्मचिदचिच्छरीरकस्य ब्रह्मणोऽपि विचित्रजगद्रचनाचातुर्यमपाक्षानत्वञ्चोपपद्यते ॥ १८ ॥

इतश्च ब्रह्मण एव जगत्कर्तृत्वम्-

## स्वपक्षदोषाच्च २।१।२९।

सांख्यानां स्वपक्ष एवायं दोषो दुरुद्धरः । तथा हि-शब्दादिहीनं निरवयवमेव प्रधानं तैरभ्युपगम्यते । ततः सावयवस्य जगत उत्पत्तिरसम्भवदुक्तिका । प्रधानस्य सावयवत्वे तु निरवयवशब्दकोप एव समापन्नः । अथ सत्वरजस्तमसां साम्यवस्थैव प्रधानं तच्च न निरवयवं सावयवं वेति न

कृत्स्नप्रसक्तिदोष इति चेत्तदप्ययुक्तम् नैवंविधं कञ्चिदपि पदार्थं पश्यामो यश्च निरवयवः सावयवो वा न स्यात् । व्याहतत्वात् । किञ्च सत्त्वरजस्तमसां साम्यावस्थैव न स्यात् । स्यादपि सार्वदिकं साम्यमेव भवेन्न जात्वपि वैषम्यम् । वैषम्यप्रयोजकस्य कारणस्याभावात् । प्रधानस्य तत्त्वे शश्वद्वैषम्यप्रसङ्गः । एवं परमाण्वादिपक्षेप्ययं दोषः समान इति ब्रह्मकारणकपक्ष एव ज्यायान्निर्दोषश्चेति ॥ २९ ॥

## सर्वोपेता च तद्दर्शनात् ।२।१।३०।

पूर्वं परादेवता सर्वशक्तियुक्तेत्यभिहितम् । तस्याश्च सर्वशक्तियुक्तत्वमिदानीमनेन दर्शयति । सर्वोपेता सर्वशक्तियुक्ता परादेवता कुतः ? तद्दर्शनात् । "सर्वकर्मा सर्वगन्धः" "परास्य शक्तिर्विविधैव श्रूयते" ( श्वे० ६।८। ) इत्येवमादिश्रुतिषु तस्याः सर्वशक्तियोगः स्पष्टमभिधीयते ॥ ३० ॥

## विकरणत्वान्नेति चेत्तदुक्तम् २।१।३१।

"न तस्य कार्यं करणञ्च विद्यते" (श्वे० ६।८।) इति ब्रह्मणः करणरहितत्वश्रवणान्न जगत्कारणत्वमुपपद्यत इति चेत्तदुक्तम् । यदत्रोत्तरं वक्तव्यं तत्पूर्वमेवोक्तम् "विलक्षणत्वात्" "देवादिवदपि लोके" "श्रुतेश्च शब्दमूलत्वात्" ( ब्र० सू० ) इत्यादिषु । "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" (श्वे० ६।९।) "प्रधानक्षेत्रज्ञनियामकस्य च स कारण" मिति सर्वकारणत्वश्रवणात् । "न तस्य कार्यं करणञ्च विद्यत" इति तु विलक्षणविविधशक्तेस्तस्य करणाधीना जगद्रचना नास्तीति ज्ञाप्यते । अन्यथा "स कारणं करणाधिपाधिप इति श्रौतवाक्येन समं विरोधस्यादेकस्याऽप्रामाण्यं वेति यथोक्तमेव मन्तव्यमिति ॥३१॥

### ❀ अथ प्रयोजनवत्वाधिकरणम् ॥१०॥

## न प्रयोजनवत्त्वात् ।२।१।३२।

स्वत एवावाप्तसमस्तकामस्य ब्रह्मणो जगत्सृष्ट्यादिव्यापारो न सम्भवति। कुतः ? सृष्ट्यादिव्यापारस्य प्रयोजनवत्वात् । प्रयोजनमन्तरेण प्रेक्षावत्प्रवृत्यनुपपत्तेस्तस्मान्न जगत्कारणत्वमिति पूर्वपक्षिते–

सिद्धान्तमाह–

## लोकवत्तु लीलाकैवल्यम् ।२।१।३३।

यथा राजादेर्लोके कंदुकादिक्रीडाविशेषाः केवलं लीलारूपा एवोपलभ्यन्ते तथाऽवाप्तसमस्तकामस्यापि ब्रह्मणो जगत्सृष्टयादयो व्यापारा लीलामात्रमिति भावः ॥३२-३३॥

ब्रह्मणो लीलार्थमपि जगत्सृष्टयादिकं न सम्भवति देवमनुष्यपशुपक्षिकृमिकीटादिविषमसृष्टया तत्रैव वैषम्यप्रसक्तेः। सर्वसंहर्तृत्वेन च नैर्घृण्यप्रसक्तेरित्याशङ्कयाह –

## वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ।२।१।३४।

ब्रह्मणो विषमसृष्टिजगत्संहारप्रयोजके वैषम्यनैर्घृण्ये न स्याताम्। कुतः ? सापेक्षत्वात् । जीवानां पूर्वकर्मसापेक्षत्वात् । परमेश्वरो जीवकृतपूर्वशुभाशुभकर्मानुसारेण देवमनुष्यादिरूपां विषमां सृष्टिं तत्संहारञ्च

---

* स्रष्टृत्वञ्जगतो रामस्योपपद्येत वा न हि ?। प्रयोजनविहीनस्य तस्य तन्नोपपद्यते ॥२२॥ नावाप्ताखिलकामस्य रामस्यास्ति प्रयोजनम्। तथाभूतेऽपि रामे तु स्रष्टृत्वं लीलया मतम् ॥२३॥ न च वैषम्यनैर्घृण्ये कर्मापेक्षणदर्शनात् । जगतोऽनादिभावाद्धि कर्मणामप्यनादिता ॥२४॥

करोति । अतस्तत्तत्कर्मैव तत्तद्वैषम्ये तत्संहारे च हेतुर्न परमेश्वरः । तथा हि दर्शयति । पूर्वार्जितकर्मानुसारेण शुभामशुभाञ्च सृष्टिं दर्शयति श्रुतिः । "पुण्यः पुण्येन कर्मणा भवति पापः पापेन" (बृ० ४।४।५) इति न चात्र कर्मैव देवमनुष्यादिसृष्टेर्हेतुश्चेत्तर्हि किमीश्वरेणेति वाच्यम् । बीजे सत्यपि पर्जन्यमन्तरेणांकुरोत्पत्तिर्यथा न भवति तथा कर्मसु सत्स्वपि परमात्मानमन्तरेण न देवमनुष्याद्याकारा जगत्सृष्टिरुपपद्यत इति ॥ ३४ ॥

## न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च ।२।१।३५।

"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" (छा० ६।२।१) इत्यादिना सृष्टेः पूर्वं कर्माविभागनिश्चयान्न तदानीं कर्मास्तीत्यतस्तत्सापेक्षा विषमा सृष्टिर्नोपपद्यते । अथेश्वरस्यैव तत्तत्कर्मणोऽपि कर्तृत्वमभ्युपेयत इतिचेत्तत्तत्कर्मोत्पादनहेतुका तत्र वैषम्यनैर्घृण्यापत्तिस्तदवस्थैवेति चेन्न, जीवानां कर्मणाञ्चानादित्वाद्बीजवृक्षवत् कर्मणां देवामनुष्यादीनाञ्च हेतुहेतुमद्भावस्यानादित्वावगमात् । कुतः संसारस्यानादित्वमित्यत आह उपपद्यते चेप्युपलभ्यते चेति । अकस्मादेव सृष्टिस्वीकारे पूर्वं सृष्टिसादृश्यानुपपत्तिः । मुक्तस्यापि पुनः सृष्टिप्रसङ्गो दुर्निवारः । तस्माज्जगतोऽनादित्वमभ्युपेयम् । श्रुतिस्मृत्योरप्यस्यानादित्वमुपलभ्यते । अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते" (श्वे० ४।५।) इति प्रकृतिपुरुषयोरजत्वश्रुतेः । "धाता यथा पूर्वमकल्पयत्" (यजु०) इत्युत्तरसृष्टेः पूर्वसृष्टिसादृश्यश्रवणाच्च जगतोऽनादित्वं सिद्धम् । "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।" (गी०) इति प्रकृति पुरुषयोस्तत्संसर्गरूपसंसारस्यानादित्वस्मरणात् ॥ ३५ ॥

## सर्वधर्मोपपत्तेश्च ।२।१।३६।

प्रधानकारणतायां येषां धर्माणामनुपपत्तिरुक्ता तेषां कारणत्वोपपादकानां धर्माणां समेषामेव पूर्वोक्तानामनुक्तानामप्यनवधिकनिरतिशयासंख्येयज्ञानशक्त्यादिगुणविशिष्टे ब्रह्मण्युपपत्तेश्च ब्रह्मैव जगत्कारणमिति निरवद्यम् ॥ ३६ ॥

इति श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये
द्वितीयाध्यायस्य प्रथमः पादः ॥१॥



## श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये

# द्वितीयाध्यायस्य द्वितीयः पादः ।

### अथ रचनानुपपत्त्यधिकरणम् ॥१॥

समतीतेन ग्रन्थेन सांख्यादिकल्पितानर्थनिरासेन वेदान्तवाक्यानां परमपुरुषे ब्रह्मणि समन्वयः प्रदर्शितः । समभिहितञ्चास्य जगतोऽभिन्ननिमित्तोपादानकारणमपि ब्रह्मैवेति अथैवं स्वमतव्यवस्थाप्यमाने परपक्षनिराकरणमत्यावश्यकमापद्यते न हि पराभिमतमतमनपाकृत्यानपवाद्य च पराम्भूहिततर्कजालं शक्यं ग्राहयितुं स्वमतस्य सामञ्जस्यमतो मुमुक्षूणां सम्यग्ब्रह्मस्वरूपावगमाय सांख्यादिमतदूषणप्रधानो द्वितीयपाद आरभ्यते ।

### रचनानुपपत्तेश्च नानुमानम् ।२।२।१।

पूर्वं वेदान्तानां प्रधानपरत्वनिरासेन ब्रह्मपरत्वमेव दृढीकृतमिह तु वेदविरुद्धानां प्रधानसाधकयुक्तीनां मृषात्वमुच्यत इति न पौनरुक्त्यम् । तत्र सांख्याभिमतः केवलमचेतनं प्रधानं जगतः कारणमिति वादः किं सद्युक्तिमूल आहोस्विदसद्युक्तिक इति संशयः । किं युक्तम् ? सद्युक्तिमूल इति । तथा हि गुणत्रयात्मकं जगत्प्रधानोपादानकमेव स्यात् । जगतः सुखदुःखमोहमयत्वात् सुखादीनाञ्च सत्वादिगुणानां कार्यत्वात् । यद्यन्मयं तत्तदुपादानकमेव लोके दृष्टम् । यथा मृण्मयो घटो मृदुपादानक एवेति निश्चीयते ।

---

* अचेतनं प्रधानं हि कारणञ्जगतो मतम् । सांख्यानां किमयं वादः सद्युक्तिकोऽथवा न हि ॥१॥ आद्यः स्यात् त्रिगुणत्वेन चोभयोस्तुल्यता यतः । प्रकृतेस्तु स्वतन्त्रायाः प्रवृत्तिः स्यात् पयोम्बुवत् ॥२॥ रचनायाः प्रवृत्तेश्चानुपपत्तेर्न युक्तता । दृष्टान्तेऽप्यखिलेशस्य प्रेरकता मता श्रुतौ ॥३॥

एवञ्च सुखदुःखमोहात्मकत्वेन दृश्यमानं सर्वं जगत्सत्त्वादिगुणत्रयात्मकमेवेति सद्युक्तिकः प्रधानकारणवाद इति प्राप्त आह । रचनानुपपत्तेश्च नानुमानमिति । अनुमानमनुमानगम्यं प्रधान न जगतः कारणम् । कुतः ? रचनानुपपत्तेः । अचेतनस्य प्रधानस्य सर्वज्ञत्वसर्वशक्तित्वाभावेन स्रष्टव्यज्ञानतद्रचनाशक्त्यसिद्ध्या विचित्रजगद्रचनानुपपत्तेः । चकारात्प्रधानस्याचेतनत्वेन जीवैर्जन्मान्तरानुष्ठितयोः पुण्यपापयोस्तद्गतबहुत्वाल्पत्वयोर्ज्ञानमेव न स्यात् । तदभावे च सृष्टिवैषम्यमपि दुःशकम् । आकस्मिकविषमसृष्टौ च सम्पन्नयो वैषम्यनैर्घृण्ययोः प्रधान एव समन्वयः स्यात् । किञ्च सुखदुःखमोहात्मकस्य हेतोरसिद्धिरपि चकारेण समुच्चीयते । सुखदुःखमोहविषादादीनामान्तरिकत्वेन न वस्तुधर्मत्वम् । अन्यथा यदेकस्य सुखरूपं तदन्यस्यापि स्यात् । न हि क्रमेलकप्रेयसः कण्टकादेरितरेष्वपि प्रेयस्त्वं दृष्टचरम् ।

तस्मादयं समन्वयोऽसिद्ध एव भावेष्विति न प्रधानस्य कारणत्वं जगतः शक्यमनुमातुम् ॥ १ ॥

## प्रवृत्तेश्च ।२।२।२।

अनुपपत्तेरित्यनुवर्तते । सत्त्वादीनां साम्यावस्था प्रधानमित्युच्यते । तत्साम्यावस्थास्पन्दनानन्तरमेव गुणैरङ्गाङ्गिभावमासाद्य कार्यं जन्यत इति सांख्यसमयः । स चानुपपन्नः । लोके चेतनानधिष्ठितस्याचेतनस्य प्रवृत्त्यदर्शनात् । चेतनानधिष्ठितस्य प्रधानस्य विचित्रजगद्रचनाचातुर्यमेव न स्यात् । तच्च वैषम्यमाकांक्षते । वैषम्यञ्च साम्यावस्थायाः प्रच्युतिः । सा चाचेतनस्य प्रधानस्य स्वतो न स्यात् । प्रवृत्तेश्चेतनाधिष्ठितिनियतत्वात् ॥ २ ॥

## पयोऽम्बुवच्चेत्तत्रापि ।२।२।३।

अथ पयसः स्वयमेव दध्यादिरूपेण परिणतिरम्बुनोऽप्यङ्कुरादिषु तत्तद्रूपेण स्वत एव परिणाम इति कथमुच्यते चेतनाधिष्ठितानामेवाचेतनानाम्प्रवृत्तिरिति तत्राह-तत्रापीति । तत्रापि परमात्मन एव प्रेरकत्वश्रवणात् ।

"योऽप्सु तिष्ठन् यस्यापः शरीरम् योऽपोऽन्तरो यमयति" (बृ० ३।८।४) "यस्य सर्वाणि भूतानि शरीरम् यः सर्वाणि भूतान्यन्तरो यमयति" (बृ० ३।७।१५) इत्यादिश्रुतयः परमपुरुषस्यैव तत्र तत्र नियामकत्वमभिदधते। तथाच क्षीरादिके यद्दृष्टान्ततयाभिहितम् तत्रापि चेतनानधिष्ठितेषु प्रवृत्त्यदर्शनात्। 'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' (ब्र० सू० २।१।२४) इत्यत्रापि न चेतनानधिष्ठितत्वमुच्यतेऽपि तु बाह्यनिमित्तानपेक्षमेव स्वाश्रयपरिणतिरूपं कार्यमभिधीयत इति न विरोधः ॥ ३ ॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ।२।२।४।

"व्यक्ताव्यक्तज्ञविज्ञानादिति" सांख्यवचनात् "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत" इतिश्रुतेश्चाव्याकृतनामरूपस्य कृत्स्नस्य प्रधानस्य व्याकृतनामरूपात्मकव्यक्तशब्दवाच्यजगद्रूपत्वावगमात्स्वतन्त्रस्य प्रधानस्य कारणत्वे तस्य कार्यव्यतिरेकेणानवस्थितेरवस्थितेरभावप्रसङ्गात्। ननु ज्ञशब्दवाच्यस्य पुरुषस्य कार्यव्यतिरेकेण कारणतयाऽवस्थितिरस्त्वित्याशङ्क्याह "अनपेक्षत्वात्" "न प्रकृतिर्न विकृतिः पुरुष" (सां० का०) इति सांख्यैः पुरुषस्य कारणत्वकार्यत्वयोरुभयोर्निषेधेन तस्य कार्यरचनानपेक्षत्वात्तदनभ्युपगमादित्यर्थः। तस्मान्न प्रधानस्य स्वातन्त्र्येण जगत्कारणत्वमुपपद्यते। ब्रह्मणः कारणत्वे तु "पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि" (यजु०) "अत्यतिष्ठद्दशांगुलम्" (यजु०) इत्येवमादिश्रुतिभ्यः "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" (गी०) इति स्मृतेश्च ब्रह्मणः पादांशमात्रेण जगदुपादानत्वावगमादवशिष्टस्य कार्यव्यतिरेकेणावस्थितेर्नोक्तदोषावकाश इति बोध्यम् ॥४॥

## अन्यत्राभावाच्च न तृणादिवत् ।२।२।५।

यथा धेन्वादिभक्षितं तृणादिकं स्वयमेव क्षीराकारेण परिणमते तथा प्रधानमपि स्वयं जगदाकारेण परिणमते इति चेन्न। तत्र तृणादेः क्षीराकारपरिणामे परमेश्वरस्य हेतुत्वात्। अन्यथा बलीवर्दादिभुक्तस्यापि

तृणादेः क्षीराकारेण परिणामः स्यादित्याह अन्यत्राभावाच्चेति । अन्यत्रा-नडुहादौ भुक्तस्य तृणादेः क्षीराकारेण परिणामाभावात् गोमयाद्याकारेण परिणामस्य दर्शनाच्च ॥५॥

## अङ्गित्वानुपपत्तेश्च ।२।२।६।

गुणत्रयसाम्यावस्था हि प्रकृतिस्तस्याः कूटस्थत्वपक्षे गुणानामङ्गाङ्गि-भावानुपपत्तेः सृष्टिप्रवृत्यभावः । कुतः ? गुणानामचेतनत्वेन कूटस्थत-याऽन्योन्यनिरपेक्षत्वेन तत्साम्यावस्थाप्रच्युतेरभावात् । कथञ्चित् तेषां प्रच्युतिस्वीकारे कौटस्थ्यहानिः । प्रकृतेर्विकारित्वे तु स्वतः साम्यावस्थाया प्रच्यवस्वीकारेण सर्वदा सृष्टिप्रसङ्गः । न च पुरुषसन्निधानादेव साम्या-वस्थाभङ्ग इति वाच्यम् । तस्यौदासीन्यादकर्तृत्वाच्च । सन्निधिमात्रेण कार्यसत्वे तु प्रकृतिपुरुषयोरुभयोरपि नित्यत्वात्सर्वदा सान्निध्ये शश्वत्सृष्टि-प्रसङ्गः । तस्मादङ्गाङ्गिभावानुपपत्तेः सृष्ट्यभावाद्यनेकदोषापत्त्या न प्रधा-नस्य जगत्कारणत्वमुपपद्यते ॥६॥

## पुरुषाश्मवदिति चेत्तथापि ।२।२।७।

अचेतनमपि प्रधानं चेतनः पुरुषो निष्क्रियोऽपि स्वसन्निधानमात्रेण सर्गादौ प्रवर्तयति यथा सचक्षुः पङ्गुः पुरुषोऽन्धमपङ्गुम्प्रवर्तयति । यथा वायस्कान्ताश्म स्वसन्निधानमात्रेणायः प्रवर्तयति तद्वदिति चेत् परिहरति । तथापीति । तथापि दोषसद्भावात् । तथा हि प्रधानस्य पुरुषप्रवर्त्यत्वे तत्स्वातन्त्र्यहानिः पुरुषस्य प्रवर्तकत्वे तस्यौदासीन्याकर्तृत्वयोर्भङ्गः । स्व-व्यापारमन्तरेण प्रवर्तकानुपपत्तेः अयस्कान्तस्यायः सान्निध्यव्यापारस्तु कादाचित्कत्वेनानित्य इति दृष्टान्तासिद्धेः । प्रकृतिपुरुषयोर्नित्यत्वेन तत्सं-सर्गस्यापि नित्यत्वात्सृष्टेः सार्वदिकत्वेन मोक्षाभावप्रसङ्गः । एकस्य जड-त्वादपरस्य चौदासीन्यान्निर्व्यापारित्वे तु पुनः स एव सर्गाभावप्रसङ्ग इति न तथापि दोषनिर्मुक्तिः ॥७॥

## अन्यथानुमितौ च ज्ञशक्तिवियोगात् ।२।२।८।

एवमपि वयमन्यथानुमानं करिष्यामः । गुणानां चलत्वादेव प्रवृत्तिरप्युपपत्स्यते । कार्यमालक्ष्य गुणस्वभाववैषम्यमवगमिष्याम इति न जगत्सृष्टौ काचिदनुपपत्तिरिति चेत् । तदपि न । ज्ञशक्तिवियोगात् । गुणानां ज्ञानशक्तिसंयोगरहितत्वात् । एतदुक्तम्भवति । गुणानां स्वतः साम्यावस्थातः प्रच्यवो निमित्तान्तरेण वा । न तत्राद्यः । सर्वथा वैषम्यप्रसङ्गात् साम्यावस्थाया एवाभावप्रसङ्गात् । न द्वितीयः । निमित्तान्तरस्य तदानीमसत्वात् । सत्त्वेतु तस्यापि निमित्तं तस्यापीत्यनवस्थादोस्थ्यम् । प्रकृतिपुरुषव्यतिरेकेण पदार्थान्तरस्वीकारे स्वपसिद्धान्तस्तस्मान्न प्रधानस्य कारणत्वम् ॥८॥

अथ कथञ्चिदचेतनेऽपि प्रधाने 'तुष्यतु पर' इति न्यायमाश्रित्य स्वीक्रियमाणायाम्प्रवृत्तौ दोषमाह–

## अभ्युपगमेऽप्यर्थाभावः ।२।२।९।

प्रधानस्य स्वतः प्रवृत्यभ्युपगमेऽपि प्रयोजनाभावान्नोपपद्यते सेत्यर्थः । तथाहि येयं प्रधानप्रवृत्तिः सा च स्वार्था पुरुषभोगार्था उभयार्थावेति विचारणीयम् । तत्र न प्रथमः पक्षः । प्रधानस्याचेतनत्वेनापेक्षाभावात् । न द्वितीयः । पुरुषस्याकर्तृत्वादौदासीन्याच्च प्रयोजनाभावात् । अत एव न तृतीयः । नापि तुरीयः कश्चित्पक्षः । स्वपरप्रयोजनाभावेन कस्य मोक्षः स्यात् । किञ्च प्रयोजनाभावादेव प्रवृत्तिरपि न स्यात् । तदभावे च पुरुषस्य स्वत एव कैवल्यम्फलति । कैवल्यार्थमस्ति प्रवृत्तेः प्रयोजनमिति न प्रधानस्य कारणत्वम् ॥९॥

## विप्रतिषेधाच्चासमञ्जसम् ।२।२।१०।

सांख्या हि प्रधानस्य पारार्थ्यमभिधाय पुरुषभोगार्थमेव प्रवृत्तिमाहुः । पुरुषस्य चैतन्यमात्रवपुषो नित्यत्वं निर्विकारत्वञ्चाहुरिति विप्रतिषिद्धमि-

दम् । नित्यनिर्विकारस्याध्यासादेव भोगस्तद्विवेकात्पो मोक्षश्चेति परस्परं विरोधः । नह्येकस्यैव पुरुषस्य सर्वस्मादौदासीन्यं तस्यैव च पुनर्भोगमोक्षाधिकारित्वं सम्भवतीति तथाभिधानाद्विप्रतिषेधः परस्परम् । तथा क्वचिन्महतस्तन्मात्रासर्गं क्वचिच्चाहंकारात् । क्वचिदेकादशेन्द्रियाणि क्वचित्त्वगिन्द्रिये ज्ञानेन्द्रियाण्यन्तर्भाव्यैकं त्वगिन्द्रियं पञ्चकर्मेन्द्रियाणि मनश्चेति सप्तेन्द्रियाण्याहुरित्येवमन्योन्यप्रतिषेधात्तेषां दर्शनमसमञ्जसम् । एतेन मायिमतमप्यपाकृतं वेदितव्यम् । न हि निःसंगस्य निर्विकारस्यागुणस्य ब्रह्मणो जगत्सर्गो युज्यते न वा नित्यमुक्तस्य तस्यैव मोक्षः । सर्वस्यासङ्गे ब्रह्मण्यध्यस्तत्वात्स्वाप्नप्रत्ययवदुपनिषदादीनामपि भ्रान्तिप्रयुक्तत्वात्तदुपदिष्टस्याभेदस्यापि मिथ्यात्वमित्यनेकदोषसमन्वितत्वेन विरोधादसमञ्जसमिति दिक् ॥१०॥

* अथ महद्दीर्घाधिकरणम् ॥२॥

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ।२।२।११।

एवं प्रधानकारणवादं समालोच्य परमाणुकारणवादः समालोच्यते । तत्रायं संशयः । किम्परमाणुकारणवादस्य सामञ्जस्यमाहोस्विदसामञ्जस्यम् ? तत्र सामञ्जस्यमिति पूर्वः पक्षः । कुतः ? अवयवेभ्योऽवयव्युत्पत्त्यङ्गीकारात् । सर्षपमेरुपर्वतादिवैषम्यस्याल्पावयवबह्ववयवकृतत्वदर्शनाच्चावयवाल्पत्वकाष्ठा परमाणुरिति परमाणुसिद्धिः ।

---

* क्षित्यादिपरमाणुभ्यश्चोत्पत्तिर्जगतो मता । अस्य तार्किकवादस्य सामञ्जस्यं न चाथवा ॥४॥ अवयविन उत्पत्तिर्यतोऽवयवसङ्गतः । तत आद्यो न चैवं स्यादवयवा यथा च यत् ॥५॥ महद्भूत्पादयन्तीह कार्यं दीर्घञ्च वै तथा । तत्स्थे च परिमाणेऽपि परिमाणे कुतो न हि ? ॥६॥ संख्यायास्तु हि तत्स्थायास्तद्धेतुत्वं न चोचितम् । सृष्टिवाक्ये श्रुतोत्पत्तिरात्मनो जगतोऽस्य च ॥७॥

ते च परमाणवो द्व्यणुकाद्युत्पादनक्रमेणाखिलं ब्रह्माण्डं जनयन्तीति प्राप्ते सिद्धान्तमाह महद्दीर्घवदिति । असमञ्जसमित्यनुवर्तते । वाशब्दश्चार्थकः । ह्रस्वपरिमण्डलाभ्यां द्व्यणुकपरमाणुभ्यां महद्दीर्घवत् त्र्यणुकद्व्यणुकोत्पत्तिवदन्यत्सर्वं च तदभ्युपगतमसमञ्जसम् । तत्र काणादा द्वयोः परमाण्वोः संयोगात् द्व्यणुकं जायते त्रयाणां द्व्यणुकानां संयोगात् त्र्यणुकमुत्पद्यते । एवं चतुरणुकादिकमपि ज्ञेयम् । तत्र परिमण्डलात् द्व्यणुकमणुजायते परिमण्डलगतं पारिमाण्डल्यन्तु न द्व्यणुके पारिमाण्डल्यपरिमाणञ्जनयति । किन्तु परमाणुसमवेतद्वित्वसंख्यैव द्व्यणुकेऽणुत्वमारभते । एवं द्व्यणुकगतह्रस्वाणुत्वे परिमाणे त्र्यणुके स्वसमानजातीये ह्रस्वाणुत्वे नारभेतेऽपि तु द्व्यणुकगतत्रित्वसंख्यैव महत्त्वदीर्घत्वे आरभत इतिवदन्ति ।

तदेतदसमञ्जसम् । यथा कारणभूता अवयवाः संयुज्यमाना अवयविनं कार्यरूपं महान्तं जनयन्ति तथाऽवयवगते ह्रस्वत्वाणुत्वपरिमाणे संयुज्यमाने अवयविनि महत्त्वदीर्घत्वपरिमाणे किन्नजनयतः । यथा वावयवानां बहुत्वे तदवयवि कार्यं बृहज्जायते तथा वयवपरिमाणबहुत्वेऽवयविपरिमाणमपि महद्दीर्घं वा जायताम् । त्रित्वसंख्यायास्त्र्यणुकगतमहत्परिमाणकारणत्वकल्पनस्यान्याय्यत्वाच्च । किञ्च जगत्कारणत्वेन स्वीकृतानां परमाणूनामपि जडत्वेन चेतनाधिष्ठितिमन्तरेण कार्योत्पादकत्वानुपपत्तेः । परमाणुसमूहभूतानां पृथिव्यादीनाञ्च "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" ( तै० २।१ ) इत्येवमादिसृष्टिवाक्येषु परमात्मनः एवोत्पत्तेः श्रवणाच्च परमाणुकारणवादस्य स्पष्टमसामञ्जस्यं श्रुत्यमूलकत्वञ्च ॥११॥

## उभयथापि न कर्मातस्तदभावः ।२।२।१२।

यच्च सृष्टेः पूर्वं निश्चलेषु परमाणुष्वाद्यं कर्म जायते तच्च स्वाश्रयभूतं परमाणुमपरेण परमाणुना संयुनक्ति तदेव द्व्यणुकम् । एवं क्रमेण

चतुर्णां महाभूतानामुत्पत्तिरिति वैशेषिकसमयः। स चासम्भवः। कुतः ? परमाणुगताद्यकर्मणोऽभावात्। कर्मणश्च कार्यतया निमित्तमन्तरेण तस्यानिष्पत्तेः न हि तदानीमात्मगुणभूत प्रयत्नादिकं निमित्तं सम्भवति। शरीरनिबन्धनः प्रयत्नस्तदभावान्नोत्पत्तुमीष्टे। अत एव नाभिघातादिक-मपि कारणान्तरम्। अतो न केवलकर्मपूर्वकत्वञ्जगदुत्पत्तेः सम्भवति। न चादृष्टमेव सर्गादौ कर्मणो निमित्तं भविष्यतीति वाच्यम्। तस्य पर-माणुनिष्ठत्वे जीवनिष्ठत्वे वोभयथाप्यचेतनस्यादृष्टस्य कर्मप्रेरकत्वाभा-वान्नाद्यं कर्म समुत्पद्येत। प्रलयजीवस्य मनःसंयोगं विना ज्ञानवत्त्वाभावे नादृष्टप्रेरकत्वानुपपत्तेश्च न सर्गाद्यकालिकं कर्म सम्भवति। तस्मात् संयोगविभागहेतुकर्माभावात् संयोगविभागहेतुकयो सृष्टिप्रलययोरभावः। ॥ १२ ॥

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ।२।२।१३।

तदभाव इत्यनुवर्तते। परमाणुकारणवादस्याभावोऽसम्भव इति या-वत्। कुतः ? समवायस्य द्रव्यगुणकर्मसामान्यविशेषाभावेभ्यः पार्थक्येन पदार्थान्तरत्वेन स्वीकारात्। वैशेषिका ह्यवयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योर्नित्यद्रव्यविशेषयोश्च यः सम्बन्धः स एव सम-वायः सम्बन्धिभ्यां भिन्नः सन् स्वरूपेण सम्बद्धयत इत्यभ्युपयन्ति। तद-समञ्जसम्। कुतः ? यथा गुणगुणिनौ भिन्नावेव समवायेन सम्बद्धयेते तथा समवायस्यापि भिन्नत्वाविशेषात्सम्बन्धान्तरं वाच्यम्। तथा च सम-वायस्य समवायान्तरेण सम्बद्धत्वे तस्यापि समवायान्तरेणेत्यनवस्थिति। न च स्वरूप एव सम्बन्धः समवायस्येति साम्प्रतम् तस्य तान्त्रिकैः सम्ब-न्धानङ्गीकारात्। किञ्च समवायतत्सम्बन्धिनोर्यदि स्वरूपसम्बन्धस्तर्हि गुणगुणिनावेव स्वरूपेणान्वियातां किमन्तर्गडुना समवायेन। नच सम-वायिभ्यो भिन्नः समवायः स च नित्य एवेति वाच्यम्। तथा सति संयो-गस्यापि संयोगिभ्यां भिन्नत्वान्नित्यत्वं स्यात्। तथा च न तस्यापि सम्ब-

न्धान्तरापेक्षा स्यात्। स्याच्च घटाभाववति भूतले घटवत्ता प्रतीतिर्दुर्वार तयोः सम्बन्धस्य नित्यत्वात् तस्मान्न संयोगस्य नित्यत्वं शक्यमभ्युपगन्तुम्। ततश्च समवायासिद्धचा समवायित्वासिद्धौ द्वयणुकाद्युत्पत्त्यभावेन जगद्रचनासिद्धेः परमाणुकारणवादस्यासिद्धिः ॥१३॥

## नित्यमेव च भावात् ।२।२।१४।

समवायो नित्य इति चेत्तर्हि समवायिनोः परमाणुद्व्यणुकयोर्नित्यत्वं विना समवायस्य नित्यत्वानुपपत्तेः। समवायिनोः परमाणुद्वयणुकयोर्द्वयोरपि नित्यमेव भावात्तयोः कार्यकारणभावासिद्धेः परमाणुकारणवादाऽसिद्धिः ॥१४॥

## रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ।२।२।१५।

वैशेषिका हि परमाणूनामणुत्वं नित्यत्वं रूपस्पर्शादिमत्त्वञ्च मन्यन्ते तेषाञ्च परस्परविरुद्धत्वात्तन्मतमसङ्गतम्। कुतः ? रूपस्पर्शादिमत्त्वविरोधेन परमाणूनामणुत्वयोर्विपर्ययः। अणुत्वस्य नित्यत्वस्य विपर्ययः स्थूलत्वमनित्यत्वञ्चेति बोध्यम्। तथा हि जगत्कारणत्वेन स्वीकृतानां परमाणूनामणुत्वनित्यत्वविपर्ययः स्थूलत्वमनित्यत्वञ्च भवितुमर्हति। तेषां रूपादिमत्त्वाच्च। यद्यद्रूपादिमत् तत्तत्स्थूलमनित्यञ्च लोके दृष्टम्। रूपादिमतः पटादेः स्थूलत्वानित्यत्वयोर्दर्शनात्। तस्मान्न परमाणुकारणवादस्य सामञ्जस्यम् ॥१५॥

## उभयथा च दोषात् ।२।२।१६।

परमाणूनां रूपादिमत्त्वपक्षे तत्र स्थूलत्वानित्यत्वप्रसक्तिः। तेषां रूपादिरहितत्वपक्षे रूपादिमतां द्व्यणुकादीनां पृथिव्यादीनाञ्च तत्कार्यत्वासिद्धिः। कार्यगुणस्य कारणगुणपूर्वकत्वमिति हि नयस्तथा चोभयथा दोषादनुपपन्नः परमाणुकारणवादः ॥१६॥

## अपरिग्रहाच्चात्यन्तमनपेक्षा ।२।२।१७।

सांख्यतन्त्रस्य सत्कार्यत्वाद्यंशेन शिष्टैर्मन्वादिभिः परिगृहीतत्वात् परमाणुकारणवादस्यतु केनचिदप्यंशेन कैश्चिदपि शिष्टैरपरिगृहीतत्वादनुपपन्नत्वाच्चात्यन्तमनपेक्षा कार्या परमाणुकारणवादे मुमुक्षुभिरिति ॥१७॥

* अथ समुदायाधिकरणम् ॥३॥

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ।२।२।१८।

अर्धवैनाशिकवैशेषिकमतनिरसनानन्तरं सर्ववैनाशिकबौद्धमतं बुद्धिस्थम्भवतीति तन्निरस्यति ते च बौद्धाश्चत्वारो वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकाख्याः सुगतोपदिष्टमतं स्वानुभवरूपेण परिणमय्य पार्थक्येन जगृहुः। तत्र प्रथमः सर्वार्थान् प्रत्यक्षानुमानगम्यान् क्षणिकान् मन्यते। द्वितीयस्त्वर्थजातं बाह्यमाभ्यन्तरञ्च क्षणिकमनुमेयमेवावगच्छति नाध्यक्षम्। तृतीयस्तु प्रमेयप्रमाणादिसर्वमप्यर्थजातं आन्तरिकविज्ञाने कल्पितं न वास्तविकम्। स्वाप्निकप्रत्ययवदिति समाचष्टे। तुरीयस्तु स्वात्मसमाराधनीं सर्वशून्यतामेवोरीकरोति। चतुर्भिरपि स्थिरःकश्चिज्ज्ञाता भोक्तात्मा चेतनो धर्मीनाङ्गीक्रियते। निरन्वयविनाशस्तु परमाभिमतश्चतुर्णाम्। उपदेष्टुरेकस्यापि बुद्धस्य ग्रहितृशिष्यमतिवैचित्र्यान्मतवैलक्षण्यम्।

तत्रायं सौगतः सिद्धान्तो युक्तो न वा? युक्त इति पूर्वः पक्षः। अयञ्च तदभिप्रायः। समुदायद्वयात्मकमेवेदं जगत्। तच्च समुदायद्वयं बाह्यान्तररूपम् तत्र बाह्यः समुदायो भूतभौतिकरूपः। आन्तरश्च चित्तचैत्तिकरूपः। बाह्यसमुदायस्य परमाणवः कारणम्। पुञ्जीभूतेभ्यस्तेभ्य

---

* युक्तः किं वा न बौद्धानां सिद्धान्तः किं भवेदिह?। युक्तो यतो जगच्चैतत् समुदायद्वयात्मकम् ॥८॥ पुञ्जेभ्यः परमाणूनां बाह्यञ्जगद्धि जायते। आन्तरः समुदायस्तु रूपादिस्कन्धपञ्चकाद् ॥९॥ मैवं तदुभयासिद्धे र्हेतूनां क्षणिकत्वतः। पूर्वक्षणे विनष्टत्वात्तेषां कार्यं न सम्भवेत् ।१०॥

एव बाह्यञ्जगज्जायते । आन्तरस्य समुदायस्य तु रूपविज्ञानवेदनासंज्ञासंस्काररूपं स्कन्धपञ्चकं कारणम् ।

समुदितेभ्यः पञ्चस्कन्धेभ्य आन्तरं चित्तचैत्तिकरूपं जगदुत्पद्यते । तस्मात्समुदायद्वयकारणवादप्रसादपरिपुष्टः सौगतः समयो युक्त इति प्राप्तेऽभिधीयते । समुदाय उभयहेतुकेऽपि तदप्राप्तिरिति–समुदायद्वयकारणवादो न युक्तः । कुतः ? तदुभयहेतुकेऽपि समुदाये स्वीक्रियमाणे तदप्राप्तिर्न समुदायसिद्धिः । तत्कारणभूतानां परमाण्वादीनां क्षणिकत्वाभ्युपगमात् । कार्योत्पत्तेः प्राक्क्षणावच्छेदेनैव कारणस्य विनष्टत्वादिति ॥१८॥

## इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावानिमित्तत्वात् ।२।२।१९।

ननु क्षणिकेष्वपि सर्वेषु भावेषु येयमविद्याऽस्थिरेषु स्थिरत्वबुद्धिरूपा तया नैतदुपपन्नं स्यादेवेति चेन्न, नह्यविद्यया समुदायः शक्यते समुत्पादयितुम् । तस्याः संघातभावस्यानिमित्तत्वात् । विपरीतार्थग्राहिकयाऽविद्यया नहि वास्तविकं कार्यं शक्यते जनयितुम् । शुक्तिरजतादिषु तथाऽदर्शनात् ॥१९॥

## उत्तरोत्पादे च पूर्वनिरोधात् ।२।२।२०।

नैतोऽपि क्षणिकत्वपक्षे समुदायसिद्धिः । उत्तरकार्यक्षणोत्पत्तिसमये पूर्वतनस्य कारणक्षणस्य नष्टत्वान्नोत्तरक्षणोत्पत्तौ तस्य हेतुत्वम् । अभावस्योत्पादकत्वे तु सर्वं सर्वत्र सर्वदा समुत्पद्येत । निष्कारणोत्पत्तिस्वीकारे स्वसिद्धान्तहानिश्च ॥२०॥

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ।२।२।२१।

अथासति कारणे कार्योत्पत्तौ सर्वत्र सर्वदा विलक्षणकार्योत्पत्तिःस्यात् । एवञ्च प्रतिज्ञोपरोधः समापन्नः । विषयकरणसहकारिसंस्काररूपान् हेतून्

प्रतीत्य चित्तं रूपादिविज्ञानं चैत्तिकाः सुखादयश्च जायन्त इति प्रतिज्ञातस्याश्चोपरोधः समापद्यते। अत एव निर्हेतुकोत्पत्तिरित्यपि निराकृतम्। न च कार्योत्पत्तिकालं यावत् कारणमवतिष्ठत इतिवाच्यम्। कारणकार्ययोर्यौगपद्यप्रसङ्गात् क्षणिकत्वहानिप्रसङ्गात् प्रतिज्ञाहानिरित्युभयतः पाशारज्जुः ॥२१॥

## प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्।२।२।२२

किञ्च बुद्धिबोध्यं त्रयादन्यत्संस्कृतं क्षणिकञ्चेति वैनाशिकसमयः। तच्च त्रयं प्रतिसंख्याऽप्रतिसंख्यानिरोधावाकाशञ्चेति। त्रयमप्यवस्तुभूतं निरुपाख्यम् तत्र प्रतिसंख्यानिरोधो नाम बुद्धिपूर्वको भावविनाशः। तद्विपरीतश्चाप्रतिसंख्यानिरोधः। आकाशश्चावरणाभावरूपमेवेति तन्मतम्। तत्र निरोधद्वयमिदानीमनेन सूत्रेण निराक्रियते। उक्तनिरोधयोरप्राप्तिरसम्भवः। कुतः? अविच्छेदात्। भावानां हेतुफलभावेन योऽयं सन्तानस्तस्याविच्छेदात्। निरन्वयविनाशश्च न कस्यापि भावस्य शक्यं प्रतिपत्तुम्। धर्मिणः कार्यस्यावस्थान्तरेण व्यवहितत्वमेव प्रत्यभिज्ञया चान्वयिनोऽविच्छेददर्शनात्। सत्कार्यवादस्यैवोपनिषत्प्रतिपाद्यत्वात्। अतो न निरोधद्वयस्वीकारस्य सामञ्जस्यम् ॥२२॥

## उभयथा च दोषात् २।२।२३।

अपिच प्रतिसंख्यानिरोधान्तर्निविष्टोऽविद्यानिरोधस्तत्सत्वे मुक्तिरित्यपि निस्सारम्। तस्य निरोधस्य सकारणकत्वे निर्हेतुकविनाशसिद्धान्तहानिः। निष्कारणकनिरोधाभ्युपगमे तु तदुपायोपदेशवैयर्थ्यम्। तस्मादसङ्गतोऽयं क्षणिकमतीनां क्षणिकवादः ॥२३॥

## आकाशे चाविशेषात् २।२।२४।

त्रयाणां निरुपाख्यत्वमिति सौगतः समयस्तत्र द्वयोर्निरुपाख्यत्वं पूर्वं निराकृतमिदानीमाकाशस्य तुच्छत्वमिति मतमाक्षिप्यते। न ह्याकाशस्य

निरुपाख्यत्वम् । पृथिव्यादिवदाकाशस्याप्यबाधितप्रतीतिसिद्धत्वात् । अत्र श्येनः पततीत्यादिप्रतीतिरेवाकाशस्य वस्तुसत्वे मानम् ॥२४॥

## अनुस्मृतेश्च ।२।२।२५।

पुनः क्षणिकत्वनिरास एव युक्त्यन्तरं दर्शयति । अनुदर्शनादनन्तरं स्मृतिरनुस्मृतिस्तस्या अनुस्मृतेश्चबलात्स्मर्तु रात्मनः क्षणिकत्वं नोपपद्यते । अनुभवस्मरणयोस्समानकर्तृकत्वेनान्यदृष्टस्यान्येन स्मरणानुपपत्तेः ।२५॥

## नासतोऽदृष्टत्वात् ।२।२।२६।

पूर्वस्य क्षणिकत्वेन विनष्टत्वात्तदभावान्निरुपाख्यात्कार्योत्पत्तिर्न सम्भवति । कुतः ? असतः शशविषाणादेः कार्योत्पत्तेरदृष्टत्वात् । अथवा दृष्टत्वादितिच्छेदः । सत एव मृदादेः घटादिकार्योत्पत्तेर्दृष्टत्वादित्यर्थः ॥ २६ ॥

## उदासीनानामपि चैवं सिद्धिः २ २।२७।

एवमसतोऽभावाद् भावोत्पत्त्यङ्गीकारे केषाञ्चिदुदासीनानां तूष्णीमुपविष्टानां लौकिकवैदिकव्यापारेषु कृषियज्ञादिषु प्रवृत्तिरहितानामपि स्वभीष्टस्यैहिकामुष्मिकस्य सर्वार्थस्य सिद्धिः स्यात्तस्माद्बाह्यार्थस्य क्षणिकत्वानुमेयत्ववादिनोर्वैभाषिकसौत्रान्तिकयोर्मतस्य भ्रान्त्यैकमूलत्वादसामञ्जस्यमिति ॥२७॥

### * अथोपलब्ध्यधिकरणम् ॥४॥

## नाभाव उपलब्धेः ।२ २।२८।

निरुक्तेनाधिकरणेन बाह्यार्थक्षणिकत्ववादिमतं निरस्य विज्ञानाति-

---

* योगाचारमतं किं सद्युक्तिमूलमथो न हि ? । बाह्यार्थवादिनाञ्चापि ज्ञानेनैवार्थसिद्धितः ॥११॥ कृतं बाह्यार्थसम्मत्या तस्मात् सद्यु-

रिक्तं किञ्चिन्नास्तीति विज्ञानवादिनो योगाचारस्य मतमपाक्रियते तद्यो-गाचारमतं समीचीनयुक्तिमूलमाहोस्विद्भ्रान्तिमूलमिति संशये समीचीनयु-क्तिमूलमिति पूर्वः पक्षः। कुतः ? बाह्यार्थास्तित्ववादिनापि तत्तद्ज्ञानेनैव विषयव्यवस्था तत्पार्थक्यञ्चाभ्युपेयम्। तथा चावश्यस्वीकरणीयविज्ञा-नेनैवेष्टसिद्धावर्थाङ्गीकारस्यायुक्तत्वात्। घटपटादयोऽर्थाश्च विज्ञानस्यैवा-कारभेदाः। वासनावशाज्ज्ञानस्यैव तथा सन्तानः। नीलपीताद्याकाराणा-मपोहरूपत्वाद्विज्ञान एवाहितसंस्कारत्वेनाखिलविषयकवित्त्युपपत्तेस्तदति-रिक्तपदार्थसद्भावस्यानुपपत्तेः। इति प्राप्तेऽभिधीयते। नाभाव उपलब्धे-रिति। विज्ञानातिरिक्तानामर्थानामभावो नोपपद्यते। कुतः ? उपलब्धेः। ज्ञानातिरेकेण पदार्थोपलब्धिः सर्वथीसाध्येणात्मानमाराधयन्ती कथमप-वाच्या स्याद्। "घटमहं जानामी"ति प्रतीतिरेव समुपस्थापयति घटं कर्मतया कर्तृतया च पार्थक्येन ज्ञानाश्रयम्। न च स्वाप्नप्रत्ययवन्नीलाद्य-र्थमन्तरेणैव ज्ञानस्य निरालम्बनत्वमिति वाच्यम्। न स्वप्नप्रत्ययानां निरालम्बनत्वं प्रबुद्धावस्थानुभूतार्थसंस्कारस्यैव तत्र कारणत्वात्। न हि स्वन्मते संस्कारोऽपि युज्यते। तदुपधायकार्थानामभावात्।

किञ्च यदि विज्ञानातिरिक्तः कश्चित्पदार्थ एव न स्यात्तर्हि कस्य किमर्थं विज्ञानं नीलाद्याकारतामुपयातीति वक्तव्यम्। नहि विज्ञानमेव स्वयं स्वार्थं तत्तद्रूपतामुपैति प्रयोजनाभावात् ॥२८॥

## वैधर्म्याच्च न स्वप्नादिवत् ।२।२.२९।

स्वप्नज्ञानदृष्टान्तेन जागरितज्ञानस्य निरालम्बनत्वं न शक्यते वक्तुम्। कुतः ? वैधर्म्यात्। स्वप्नादिज्ञानस्य मनः कल्पनामात्रत्वेन बाधितविषय-त्वाज्जागरितज्ञानस्य तु प्रत्यक्षप्रमाणजन्यत्वेनाबाधितविषयत्वात्। इत्यु-

---

क्तिमूलता। नैवं ज्ञानातिरिक्तानां नाभाव उपलब्धितः।।१२।। विज्ञाना-दतिरिक्तो हि यदि चार्थो न विद्यते। किमर्थं कस्य विज्ञानं नीलाद्या-कारतामियात् ? ।।१३।।

भयोर्ज्ञानयोर्वैधर्म्यात् । चकाराद्दृष्टान्तभूतस्वप्नप्रत्ययोऽपि न सर्वथा मिथ्याभूतः क्वचित्तस्यापि साफल्यदर्शनात् ॥२९॥

## न भावोऽनुपलब्धेः ।२।२ ३०।

बाह्यार्थानां घटादीनामभावे केवलस्यार्थविहीनस्य ज्ञानस्य भावो नोपपद्यते । कुतः ? अनुपलब्धेः । प्रत्यक्षसिद्धस्य विषयस्याभावेऽप्रत्यक्षस्य विषयिणो ज्ञानस्याप्यनुपलब्धेः । विषयिणो विषयपदार्थनिरूपितत्वेनैक-स्याभावेऽपरस्याप्यभावत्वनिष्पत्तेर्न ज्ञानोपलब्धिः स्यादिति ॥३०॥

## क्षणिकत्वाच्च ।२।२।३१।

योगाचारमतेऽपि क्षणिकत्वमेव सर्वेषाम् । तथा च यदभिहितं पूर्वं वासनातः सर्वं सम्पत्स्यत इति तदपि दुरुपपादम् । तस्या आधारमन्तरेण स्थातुमुत्पत्तुञ्चाशक्यत्वात् । आलयविज्ञानस्यापि तन्मते क्षणिकत्वात् । न च कारणीभूतज्ञानक्षण एव कार्यज्ञानमुत्पत्स्यत इति वाच्यम् । असम्भ-वात् । न हि कारणमनासादयत्स्वकीयमात्मानमपरं प्रति शक्नोति निर्वा-हयितुं कारणतामिति विज्ञानवादिमतमप्यसङ्गतम् ॥३१॥

* अथ सर्वथानुपपत्त्यधिकरणम् ॥५॥

## सर्वथानुपपत्तेश्च ।२।२।३२।

अथ शून्यवादिनो माध्यमिकस्य मतं सद्युक्तिमूलं नवेति संशये सद्यु-

---

* माध्यमिकमतं किं स्याद् युक्तियुक्तमथो न वा ? सर्वस्य वस्तु-जातस्य सत्त्वमसत्त्वमस्ति वा ? ॥१४॥ उभयत्वं मतं किम्वानुभयत्वं मतं तु वा ? । बाधितत्वान्न चाद्यः स्यादुपलब्धेर्न चापरः ॥१५॥ परस्पर-विरोधाच्च न तृतीयोऽपि सम्मतः । असम्भवात्तुरीयो न व्याहतेश्चास्ति शून्यता ॥१६॥ तस्माद्दाद्यं न चैवं स्याच्छून्यत्वानुपपत्तितः । तुच्छतया प्रमाणानां शून्यत्वं केन सिध्यति ? ॥१७॥

वितमूलमिति पूर्वः पक्षः। तथा हि—उत्तममध्यमाधमाधिकारिभेदेन तत्तदर्थानां विज्ञानरूपत्वानुमेयत्वप्रत्यक्षत्वादिकं बोध्यम्। तदपि च क्षणिकतयातिदिष्टम्। वस्तुतस्तु शून्यमेव तत्वमित्येव सौगतोऽभिप्रायः। सर्वस्य पदार्थजातस्य सत्त्वमसत्त्वं सदसद्रूपत्वमनुभयरूपत्वं वेति विवेचनीयम्। तत्र नाद्यः पक्षः क्षेमतां लभते बाधितत्वात्। न द्वितीयोऽस्तीत्येवोपलभ्यमानत्वात्। न तृतीयः परस्परविरोधात्। नापि तुरीयोऽसम्भवात् व्याहतत्वाच्च। तस्माच्छून्यमेव तत्वमिति मतं युक्तम्।

इति प्राप्तेऽभिधीयते। सर्वथानुपपत्तेश्चेति। सर्वप्रकारेण सर्वशून्यस्वरूपं तुच्छत्वं नोपपद्यते। किन्तुप्रमाणप्रमेयादिपदार्थास्सततमुपलभ्यमानास्सन्त्येव। अयमभिप्रायः। शून्यवादिना सर्वस्य शून्यत्वं व्यवस्थाप्यते। तत्केनचित्प्रमाणेन तदतिरिक्तेन वा ?। तत्र नाद्यः। कृत्स्नानां प्रमाणानां तन्मते तुच्छत्वाभ्युपगमात् वस्तुव्यवस्थापनासामर्थ्यात्। नान्तिमः। प्रमाणातिरिक्तेन व्यवस्थाप्यमाने गगनकुसुमायिते वस्तुनि प्रेक्षावत्प्रवृत्त्यनुपपत्तेः। न च शून्यव्यवस्थापकस्य प्रमाणस्य सत्त्वमभ्युपेयत इति साम्प्रतम्। प्रतिज्ञाविरोधाद् व्याघाताच्च। नास्ति चेन्न शून्यत्वसंस्थितिर्जगति। अपि चाबालगोपालमनुभूयमानस्य महीमहीधरमहार्णवादिविचित्रसंस्थानसंस्थितस्य जगतः केन शून्यत्वमभिधीयेत शून्यवादिनः। यश्च सर्वस्य शून्यत्वमपि प्रतिजानाति प्रलपति च स्वयमिति स्ववचसां व्याहतिमपि नावधारयति। किञ्चैतस्मिन्दर्शने दर्शनस्थानादिपदानां स्थाने पश्यनातिष्ठनेत्यादिशब्दानां प्रयोगोऽप्यशुद्ध एव। तस्मादिदं मतं सर्वथानुपपन्नमिति सिद्धम् ॥३२॥

## * अथैकस्मिन्नसम्भवाधिकरणम् ॥६॥

## नैकस्मिन्नसम्भवात् ।२।२।३३।

युक्तवच्छसौगतसमयनिरासानन्तरं विवसनानामार्हतानां मतमपा-

* जैनानां किमनेकान्तवादो युक्तोऽथवा न हि ?। अवस्थादेशभे-

क्रियते। तत्र जिनमतं सद्युक्तिमूलमाहोस्विदसद्युक्तिकमिति संशये सद्युक्तिकमिति पूर्वः पक्षः। तथा हि जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षाख्याः सप्त पदार्था आर्हतमतसिद्धाः। तत्र जीवः कायपरिमाणकश्चेतनः। अजीवो भोग्यवर्गः। विषयेष्विन्द्रियप्रवृत्तिरास्रवः। संवृणोतीन्द्रियधावनमिति संवरो यमनियमादिः। निर्जरस्तपस्तप्तशिलारोहणादिरूपम्। बन्धपदेन तद्धेतुभूतं कर्मोच्यते। मोक्षः कर्मोच्छित्त्या सततोर्ध्वगमनम्। एवमणुव्यतिरिक्तद्रव्याणामस्तिकायपदेन ग्रहणम्। तेषां च पञ्चभेदाः जीवधर्माधर्मपुद्गलाकाशास्तिकाया इत्येतेषामवान्तरानन्तभेदा आर्हतदर्शने प्रदर्शिताः। तेषां सर्वेषां सप्तभङ्गीन्यायेन व्यवस्थितिः क्रियते। स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यं, स्यादस्ति चावक्तव्यम्, स्यान्नास्ति चावक्तव्यं, स्यादस्ति नास्ति चावक्तव्यमिति तत्स्वरूपम्। एकस्यैव पदार्थस्य कथञ्चिदवस्थाभेदेन देशादिभेदेन च सत्त्वं तस्यैव च प्रकारान्तरेणासत्त्वम्। एवमेव सर्वत्रानैकान्त्येन पर्यवस्थानमिति।

अत्रोच्यते–नैकस्मिन्नसम्भवादिति। न युक्तोऽनेकान्तवादो जैनानामिति। कुतः? एकस्मिन् वस्तुनि नित्यत्वानित्यत्वसत्त्वा सत्त्ववक्तव्यत्वावक्तव्यत्वादीनां परस्परविरुद्धानां धर्माणामसम्भवात्। न हि समेषां पदार्थानां विरुद्धधर्माक्रान्तत्वं सम्भवति। तद्धि यौगपद्येन देशकालावस्थाभेदेन वा? आद्येऽसम्भवात्। द्वितीये सिद्धसाधनात्। नित्यपदार्थानाञ्च प्रकारद्वयेनापि नानैकान्त्यम्। तस्मादसङ्गतमयुक्तञ्च जैनदर्शनम् ॥३३॥

---

दाभ्यां सत्त्वासत्त्वे उभे यतः ॥१८॥ एकस्यैव ततो युक्त इति प्राप्तेऽभिधीयते। अनैकान्त्यं पदार्थानां युगपन्नैव सम्भवेत् ॥१९॥ देशादिभेदतश्चापि सिद्धसाधनतो न तत्। नित्यानाञ्च पदार्थानामुभयथा न तद्भवेत् ॥२०॥ आत्मनो देहमानत्वे कारस्न्यभावोऽपि तन्मते। अनित्यत्वं विकारित्वात् पर्यायस्वीकृतावपि ॥२१॥

## एवं चात्माकार्त्स्न्यम् ।२।२।३४।

यथैषां मते विरुद्धधर्मावस्थानमेकस्मिन् वस्तुनि न सम्भवति । एवमात्मनः कार्त्स्न्यस्याप्यसम्भवः । आत्मनो देहपरिमाणत्वे कर्मवशान्मनुष्यात्मनो मशकादिक्षुद्रजन्तुशरीरे कृत्स्नस्य प्रवेशानुपपत्तेः । अल्पशरीरकमशकाद्यात्मनश्च गजादिबृहच्छरीरे कार्त्स्न्येनावस्थानानुपपत्तेश्चासङ्गतमार्हतमतम् ॥३४॥

## न च पर्य्यायादप्यविरोधो विकारादिभ्यः ।२।२।३५।

न चैवं पर्यायपदवाच्यसंकोचविकासाश्रयतयात्मनोऽवस्थाभेदाङ्गीकारेणापि विरोधपरिहारः । आत्मनः संकोचविकासधर्मवत्त्वे तस्य विकारित्वादिदोषप्रसङ्गात् । विकारित्वे सत्यनित्यत्वापत्त्या तद्बन्धमोक्षाभ्युपगमस्य बाधात् ॥३५॥

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः २।२।३६।

अन्त्यं मोक्षावस्थस्यात्मनो यत्परिमाणं तस्यैव स्वाभाविकस्य नित्यस्य परिमाणस्य बद्धमोक्षावस्थायामप्यवस्थित्यात्मतत्परिमाणयोरुभयोरुभयावस्थायामपि नित्यत्वादविशेषान्न्यूनाधिकभावानुपपत्तेर्नात्मनः शरीरपरिमाणवत्त्वमुपपद्यते । तस्मादसमञ्जसमेव विवसनदर्शनम् ॥३६॥

### * अथ पत्यधिकरणम् ॥७॥

## पत्युरसामञ्जस्यात् ।२।२।३७।

पूर्वाधिकरणे वैदिकाचारविधुराणां लुञ्चितकेशानां दिगम्बराणां मतमपाकृतम् । तद्वद्वैदिकाचाररहितानां शैवानां मतं मतिस्थमायातीति

---

* अधिष्ठातृत्वमात्रं तु वदताम्परमात्मनः । पाशुपतादिशैवानां मतं समञ्जसं न वा ॥२२॥ आद्यः कुलालदृष्टान्तान्नियन्तृत्वस्य सम्भवात् ।

तन्निरस्यते। तत्र केवलाधिष्ठात्रीश्वरकारणवादिनां कापालकालामुखपाशुपतानां शैवानामन्येषाञ्च नैयायिकादीनां मतस्य सामञ्जस्यमाहोस्विन्नेति संशये सामञ्जस्यमिति पूर्वपक्षः।

तथा हि-पशुपाशविमोक्षणार्थं कापालिकी पाशुपती च दीक्षावश्यं ग्राह्या। तत्र निमित्तोपादानयोर्भेदो निमित्तकारणञ्च पशुपतिः। मुद्रिकाषट्कधारणादिकमेव मोक्षसाधनम्। तथा चोक्तं शैवागमे-

कण्ठिका रुचकञ्चैव कुण्डलञ्च शिखामणिः।
भस्म यज्ञोपवीतं च मुद्राषट्कम्प्रचक्षते॥
मुद्रिकाषट्कतत्त्वज्ञः परमुद्राविशारदः।
भगासनस्थमात्मानं ध्यात्वा निर्वाणमृच्छति॥

एवं गणकारिकायाम्।

लाभा मला उपायाश्च देशावस्थाविशुद्धयः।
दीक्षाकारिबलान्यष्टौ पञ्चकास्त्रीणि वृत्तयः।

इति। धर्मार्थादिसाधकव्यापारस्य विधेर्द्वैविध्यम्। प्रधानभूतत्वं गुणभूतत्वञ्च। तत्र प्रधानभूता साक्षाद्धर्महेतुश्चर्या। साऽपि द्विविधा। व्रतरूपा द्वाररूपा च। तदुक्तं नकुलीशेन। भस्मस्नानशय्योपहारजपप्रदक्षिणानि व्रतम्" भस्मना त्रिषवणं स्नायीतेत्यादिकम्। क्राथनस्यन्दनमन्दनशृङ्गारणावितत्करणावितद्भाषणानि द्वाराणि। स्पष्टमेतत्तन्त्रे। एवं कालामुखागमे-कपालपात्रभोजनशवभस्मस्नानतत्प्राशनलगुडधारणसुराकुम्भस्थापनानि कुम्भे देवाराधनानि चाभीष्टफलोपलम्भकानि। एवञ्च कापालिकादिदर्शनानां सामञ्जस्यम्।

---

स्वयमकुरुतात्मानं तदैक्षतेति च श्रुतेः॥२३॥ निमित्तत्वमुपादानत्वञ्चापीशस्य सम्मतम्। समञ्जसं न तत्तेषां मतं वेदविरोधतः॥२४॥ अशरीरस्य पत्युश्च नियन्तृत्वं कथं भवेत्?। शवभस्मनि च स्नानं कपाले भोजनं तथा॥२५॥ शृङ्गारणादिधर्मा ये पाशुपतादिभिर्मता। तेषां वेदविरुद्धत्वादसमञ्जसमेव तत्॥२६॥

इति प्राप्तेऽभिधीयते-पत्युरसामञ्जस्यादिति। पूर्वाधिकरणसूत्रान्नेत्यनुवर्तते। पत्युः परमेश्वरस्य केवलमधिष्ठातृतया कारणत्वं नोपपद्यते। अतो निमित्तकारणत्वमेवेश्वरस्येति वदतां मतस्यासामञ्जस्यम्। "तदैक्षत बहु स्याम्प्रजायेय" (छा० ६।२।३।) "तदात्मानं स्वयमकुरुत"(तै० ३।७) "सच्चत्यच्चाभवत्" (तै० २।६।) "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय (पु० सू०) इत्यादिश्रुतयश्चैकस्यैव परमपुरुषस्य जगदुपादानत्वं निमित्तत्वञ्चाभिदधते। तस्यैव च वेदनस्य मोक्षोपायत्वमपि दर्शयन्ति। तस्माद्वेदविरुद्धप्रक्रियाश्रयणादनुष्ठानाद्यभिधानाच्चासामञ्जस्यमेव कापालिकपाशुपतादीनां मतस्येति ॥ ३७ ॥

## सम्बन्धानुपपत्तेश्च ।२।२।३८।

इतश्चासामञ्जस्यम्। असम्बद्धस्य प्रधानादेः प्रेर्यत्वायोगादीश्वरेण कश्चित्सम्बन्धो वाच्यः। तत्र समवायसंयोगौ न सम्भवतः। ईश्वरस्य तन्मतेऽशरीरत्वात्। नापि सम्बन्धान्तरमनुपपत्तेः ॥३८॥

## अधिष्ठानानुपपत्तेश्च ।२।२।३९।

सशरीराणां कुलालादीनामधिष्ठानत्वदर्शनमवलम्ब्यानुमानादीश्वरस्य प्रधानाधिष्ठानत्वमुच्यते। न च पशुपतेर्निमित्तभूतस्य कुलालादिदृष्टान्तेन प्रधानाधिष्ठानत्वमुपपद्यते। कुलालस्य सशरीरत्वात्त्वदीयमतानुमितस्येश्वरस्याशरीरत्वाद्दृष्टान्तदार्ष्टान्तिकयोर्वैरूप्यात् ॥३९॥

## करणवच्चेन्न भोगादिभ्यः ।२।२।४०।

भोक्तुः क्षेत्रज्ञस्याशरीरस्यैव करणकलेवराद्यधिष्ठानत्ववदीश्वरस्याप्यशरीरस्य प्रधानाधिष्ठानत्वमुपपद्यत इति चेन्न, भोगादिभ्यः। न जीवदृष्टान्तेनेश्वरस्य प्रधानाधिष्ठितत्वमुपपद्यते। जीव इव पशुपतावपि पुण्यपापफलभोगापत्तेः। अदृष्टभोगार्थमेव करणकलेवराद्यधिष्ठानत्वं जीवस्य। त्वदीयमतसिद्धेश्वरस्यापि तथात्वापत्तेर्नाधिष्ठानत्वमपि परमेश्वरस्येति ॥ ४० ॥

## अन्तवत्त्वमसर्वज्ञता वा ।२।२।४१।

वाशब्दश्चार्थे पशुपतेः पुण्यपापरूपादृष्टवशात्प्रधानाधिष्ठानत्वस्वीकारे जीववदन्तवत्त्वं सृष्टिसंहाराद्यास्पदत्वमसर्वज्ञता च स्यादित्यसमञ्जसमेवेदं मतम् । शैवागमे वेदाविरोधिनामपि कियतां धर्माणामुपलब्धिरस्ति तथापि निमित्तोपादानभेदशवभस्मस्थालमगस्थालमध्यानादीनां वेदविरुद्धानां धर्माणां तद्दर्शने बाहुल्यादसामञ्जस्यं सिद्धम् ॥ ४१ ॥

### * अथोत्पत्त्यसम्भवाधिकरणम् ॥८॥

## उत्पत्त्यसम्भवात् २।२।४२।

एवं केवलाधिष्ठात्रीश्वरकारणवादस्य शैवविशेषस्य पाशुपतमतस्य श्रुतिविरुद्धत्वादसामञ्जस्यमुक्तम् । तन्निराकरणेन च पञ्चरात्रप्रतिपाद्यवैष्णवमतं मतिस्थमापद्यते । इति तत्र विचारः क्रियते । तत्र भागवतमतस्य सामञ्जस्यमस्ति न वेत्याद्या विप्रतिपत्तिस्तदर्थं तदभिधायकपञ्चरात्रतन्त्रस्य सर्वथाप्रामाण्यमुतांशिकाप्रामाण्यमाहोस्वित्कात्स्न्येन प्रामाण्यमेवेति संशयः । तदर्थमपि केषाञ्चित्पाञ्चरात्रिकाणां वचनानां जीवोत्पत्तौ तात्पर्यमस्ति न वेति च विषयः ।

---

* मतस्य वैष्णवस्याप्यसामञ्जस्यं भवेन्न वा ? । जीवोत्पत्तेः समुल्लेखाद् भवेदेव हि तस्य तत् ॥२७॥ वचसां पाञ्चरात्राणां केषाञ्चिच्च भवेद्यदि । जीवोत्पत्तावभिप्रायस्तदाऽप्रामाण्यमांशिकम् ॥२८॥ सम्भवेत् पञ्चरात्रस्यासामञ्जस्यं तदा भवेत् । गोपनेनापि दुर्वारं वैष्णवस्य मतस्य हि ॥२९॥ जीवोत्पत्तौ न तात्पर्यं पञ्चरात्रगिरां क्वचित् । सर्वेषां प्राणिनाञ्चोक्ता श्रुतौ यस्मादनादिता ॥३०॥ सङ्कर्षणादिकानाञ्च ब्रह्मत्वेन निजेच्छया । अवतारगृहीतौ हि तात्पर्यं तद्गिरां मतम् ॥३१॥ 'स ह्यनादिरनन्तश्च परमार्थेन निश्चितः ।' इत्थं विप्रतिषेधाच्च जीवोत्पत्तेर्विशेषतः ॥३२॥ प्रामाण्यं पञ्चरात्रस्य कात्स्न्येनास्ति ततो मतम् ।

तत्र पाञ्चरात्रिकाणां केषाञ्चिदपि वचनानां जीवोत्पत्तौ तात्पर्यं स्यात्तर्हि तेषामसम्भवार्थाभिधायकत्वेनांशिकमप्रामाण्यमपि पञ्चरात्रस्य दुर्वारं स्यात्तथासति तन्मूलकस्य वैष्णवमतस्याप्यसामञ्जस्यं सुतरां समापन्नं स्यादिति मनसि निधाय पूर्वपक्षयति–अस्यैव "परमकारणात्परब्रह्मभूताद्वासुदेवात्सङ्कर्षणो नाम जीवो॰ जायते सङ्कर्षणात्प्रद्युम्नसंज्ञं मनो॰ जायते तस्मादनिरुद्धसंज्ञोऽहङ्कारो जायते" (परम संहितायाम्) इत्यादिप्रक्रियाप्रतिपादकवचसां जीवोत्पत्तौ तात्पर्यमिति ।

तत्र सिद्धान्तयति–उत्पत्त्यसम्भवादिति नैषां पाञ्चरात्रिकाणां वचनानां जीवोत्पत्तौ तात्पर्यम् । कुतः ? जीवोत्पत्तेरसम्भवस्तस्मादिति । जीवोत्पत्तिः श्रुतिषु नोपलभ्यते । प्रत्युत श्रुतयो जीवस्यानादित्वं नित्यत्वञ्चामनन्ति । "न जायते म्रियते वा विपश्चित्" (का० २।१८) "ज्ञाज्ञौ द्वावजावीशानीशौ" (श्वे० १।९) "नित्यो नित्यानाञ्चेतनश्चेतनानाम्" (श्वे॰ ६।१३) "अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते" (का० २।१८) इति । तस्मान्नैषां पाञ्चरात्रिकाणां वचनानां जीवोत्पत्तौ तात्पर्यम् । तथा चासम्भवार्थानभिधायकत्वानांशिकमपि पञ्चरात्रस्याप्रामाण्यमिति तन्मूलकस्य वैष्णवमतस्यापि नासामाञ्जस्यम् ॥४२॥

## न च कर्तुः करणम् ।२।२।४३।

एवं "सङ्कर्षणात्प्रद्युम्नसंज्ञं मनो जायते" (परमसं॰ ) इत्यस्यापि

---

तद् वैष्णवमतस्यापि सामञ्जस्यं हि चाक्षतम् ॥३३॥ एतेन पञ्चरात्रस्यांशिकाप्रामाण्यवादिनः । निरस्ता वेदितव्या हि व्याघातश्चान्यथा भवेत् ॥३४॥ सर्वज्ञभगवद्वाक्ये व्याहतेः सम्भवः कुतः ? । दिव्यं ज्ञानञ्च गीताया नो चेत् सन्दिग्धतामियात् ॥३५॥ अत्र शाक्तं मतं केचिन्निरस्यन्ति न तद् वरम् । यतोऽजा या जडा या सा शक्तिरित्यभिधीयताम् ॥३६॥ पत्यधिकरणेनैव गतार्थत्वान्न चादिमः । रचनानुपपत्त्यैव निरस्तत्वान्न चान्तिमः ॥३७॥

कर्तुर्जीवात् करणं मनो नोत्पत्तुमीष्ट इति नास्यापि वाक्यस्य जीवात्मनः सकाशादन्तः करणस्वरूपस्य मनस उत्पत्तिरित्यत्र तात्पर्यम् "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" ( मु० २।१।३ ) इति परब्रह्मण एव तदुत्पत्तेः श्रूयमाणत्वात् । तस्माच्छ्रुतिविपरीतार्थे नैषां वेदानुसारिणां पाञ्चरात्रिकवचसां तात्पर्यं सम्भवतीति न तत्तन्त्रस्य लेशतोऽप्यप्रामाण्यमिति ॥४३॥

कुत्र तर्ह्येषां वाक्यानां तात्पर्यमित्यत्राह-

## विज्ञानादिभावे वा तदप्रतिषेधः ।२।२।४४।

वा शब्दस्त्वर्थे तर्कितामाशङ्कां निवर्तयति । "वासुदेवात्सङ्कर्षणो नाम जीवो जायते" (परमसं०) इत्यादिवाक्यानां न जीवोत्पत्तौ तात्पर्यमपितु सङ्कर्षणादीनां विज्ञानादिभावे परब्रह्मभावे सति स्वेच्छयावतारग्रहण एव तात्पर्यम् । एवञ्च 'जायते' इति न जीवादीनामुत्पत्तिरभिधीयते, अपि तु "अजायमानो बहुधा विजायते" (पुरुषसूक्त) इत्यादिश्रुतिभिरवाप्तसमस्तकामस्याजन्मनोऽपि परस्य पुंसः स्वेच्छावतारो यथोदीर्यते तथा प्रकृतेऽपि सङ्कर्षणप्रभृतीनां परमपुरुषस्यैव स्वेच्छावतारत्वमभिहितम् । जीवमनोऽहङ्कारादिशब्दानाञ्च तदधिष्ठातृसङ्कर्षणप्रद्युम्नानिरुद्धाभिधायकत्वं प्राणाकाशादिशब्दवदिति तु न विस्मर्तव्यम् । तस्मात्तदभिधायिपञ्चरात्राप्रामाण्यस्याप्रतिषेधः ।

अयमभिसन्धिः-परं ब्रह्मैव प्रपन्नजनमनोरथपूरणाय स्वानितरसाधारणानुकम्पया स्वेच्छयाऽऽत्मानं चतुर्थ्यूहस्वरूपेण विधाय जगद्रक्षयति । तथा चोक्तं-"कर्त्तव्यत्वेन वै अत्र चातुरात्म्यमुपास्यते । क्रमागतैः स्वसंज्ञाभिर्ब्राह्मणैरागमन्तु तत् (पौष्करसंहितायाम्) । इति तस्मात् परमस्वतंत्रस्य परमपुरुषस्य सङ्कर्षणादिस्वरूपेणावतारः सम्भवत्येवेति न पञ्चरात्राप्रामाण्यस्य प्रतिषेधः ॥४४॥

## विप्रतिषेधाच्च ।२।२।४५।

जीवोत्पत्तौ न तात्पर्यं तेषां वाक्यानामित्येतावतैव न सन्तोष्टव्यमपि तु जीवोत्पत्तेः विप्रतिषेधोऽपि दृश्यते तस्मिन्नेव तन्त्रे । तथा हि—

अचेतना परार्था च नित्या सतत विक्रिया ।
त्रिगुणा कर्मिणां क्षेत्रं प्रकृते रूपमुच्यते ॥
व्याप्तिरूपेण सम्बन्धस्तस्याश्च पुरुषस्य च ।
सह्यनादिरनन्तश्च परमार्थेन निश्चितः ॥ ( परमसं० )

यस्तद्ग्रन्थकर्तैव जीवोत्पत्तिं विप्रतिषेधति कथं स एव स्वकण्ठरवेण तदुत्पत्तिं ब्रूयात् । अपि च पूर्वापरपर्यालोचनायामेकस्यामेव पाञ्चरात्रिकसंहितायां मिथो विरुद्धार्थप्रतिपादकत्वेन व्याहतिर्दुर्वारा स्यात् । तस्मान्नह्यस्मिन् तन्त्रे क्वापि जीवोत्पत्तिर्वेदविरोधश्चोपलभ्यते येनास्याप्रामाण्यं स्यात् । यत्तु "साङ्गेषु वेदेषु निष्ठामलभमानः शाण्डिल्यः पञ्चरात्रशास्त्रमधीतवान्" इत्यादिनात्र वेदनिन्दोपलम्भान्नेदं शास्त्रं प्रमाणतामश्यास्त इत्याहुस्तदप्यविचारितरमणीयम् । 'न हि निन्दा निन्दितुं' मिति न्यायेन गृह्यमाणार्थप्रशंसायामेव तस्य तात्पर्यात् । यथा छान्दोग्ये भूमविद्यायां नारदस्य "ऋग्वेदं भगवोऽध्येमि" (छा० ७।१।२) इत्यादिभिः कानिचिद्विद्यासाधनान्यभिधाय "सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित्" ( छा० ७।१।३ ) इति स्वात्मश्रेयोऽनवाप्तिकथनमुपदिश्यमानभूमविद्याप्रशंसार्थकमेव न तूदीरितविद्यानिन्दार्थम् । एवं प्रकृते वेदार्थस्य परमदुर्ज्ञेयत्वेन सुखावबोधार्थमस्य शास्त्रस्य शाण्डिल्येन शास्त्रान्तराण्यपहाय ग्रहणं कृतमिति युज्यत एव । तत्र च ग्रहीतव्येऽर्थे प्रेमातिशयद्योतनाय प्रशंसापि युज्यत इत्येतावता न तद्वाक्यस्य वेदनिन्दायां तात्पर्यम् । तथैवोक्तं परमसंहितायाम्—

अधीता भगवन् वेदाः साङ्गोपाङ्गाः सविस्तराः ।
श्रुतानि च मयाङ्गानि वाकोवाक्ययुतानि च ॥

न चैतेषु समस्तेषु संशयेन विना क्वचित् ।
श्रेयोमार्गं प्रपश्यामि येन सिद्धिर्भविष्यति ॥ ( परमसं० )

इति । तस्मान्नास्य तन्त्रस्य वेदविरुद्धार्थाभिधायित्वेनाप्रामाण्यं लेशतोऽपीति सर्वं निरवद्यम् ॥४५॥ ×

---

× अत्रेदं विचार्यते । केचित्त्विदमधिकरणं पञ्चरात्रप्रामाण्यप्रतिषेधे योजयामासुः । तेषामयम्भावो यदस्मिन् पादे सर्वेभ्योऽधिकरणेभ्यो वेदविरुद्धानां मतानामसामञ्जस्यप्रदर्शनमेवोपक्रान्तमत एव पूर्वतनेषु सप्तस्वधिकरणेषु तथा दृश्यते । एवमनेनाप्यधिकरणेन पञ्चरात्रप्रामाण्यमेव निराक्रियते । अन्यथा तूपक्रमविरोधः स्यादिति । अन्ये तु शक्तिकारणवादनिराकरणमेवास्याधिकरणस्य प्रयोजनमूचुः । अपरे त्वनेन पञ्चरात्रस्यांशिकमप्रामाण्यमेव प्रसाधयामासुः । तत् सर्वं सूत्रकृदभिप्रेतार्थविरुद्धम् । तथा हि--भगवान् बादरायणो वेदार्थं निर्णिनीषुः संक्षेपेण वेदान्तसूत्राणि प्रणीय विस्तरेण च तदुपबृंहणाय भारतसंहितां व्यरीरचत् । तत्र मोक्षधर्मे पञ्चरात्रस्य प्रामाण्यं विस्तरेण प्रतिपादितवान् ।

"इदं शतसहस्राद्धि भारताख्यानविस्तरात् । आविध्य मतिमन्थानं दध्नो घृतमिवोद्धृतम् ॥ नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा । आरण्यकञ्च वेदेभ्य ओषधीभ्यो यथामृतम् ॥ इदं महोपनिषदं चतुर्वेदसमन्वितम् । सांख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् ॥ इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् । ऋग्यजुः सामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥ भविष्यति प्रमाणं वा एतदेवानुशासनम् । पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्" ॥

तथा भीष्मपर्वण्यपि--

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः । अर्चनीयश्च सेव्यश्च पूजनीयश्च माधवः ॥ सात्वतं विधिमास्थाय गीतः सङ्कर्षणेन यः ।

इत्यादिप्रबन्धेन । तथा च यः स्वनिर्मितभारते भगवदुपासनादिप्रतिपादकपाञ्चरात्रशास्त्रस्य प्रामाण्यं समर्थयति स एव कथं तस्याप्रामाण्य-

इति श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये द्वितीयाध्यायस्य द्वितीयः पादः ॥२॥

---

मन्त्रामिदध्यात् । तस्मान्नात्राधिकरणेऽप्रामाण्यं साध्यत इति । एतेनांशिकमप्रामाण्यमिति व्याख्यातृणां मतमप्यपाकृतम् । परमदुर्मेधसोऽपि स्वोक्तिविरोधमवगच्छन्ति कथं तर्हि यदंघ्रिपद्मानुध्यायिनः साधारणजना अप्याप्ततमा भवन्ति स एव साक्षात्परमपुरुष एकस्यामेव स्वनिर्मितौ व्याहतमुपदिशेत् । एवं शाक्तमतनिराकरणमपि नात्र प्रकृतं विकल्पासहत्वात् । तथाहि-जगत्कारणत्वेन स्वीकृता सा शक्तिरजड़ा जड़ा वा ? आद्ये तु पत्यधिकरणेनैव गतार्थत्वात् न पृथगधिकरणस्य प्रयोजनम् । अन्तिमेऽपि सांख्यनिरासेनैव तस्या अपि कारणत्वनिरासः इति न तद्दूषणायाधिकरणान्तरस्य प्रयोजनम् । अतोऽस्मद्भाष्यकारीयव्याख्यानमेव ज्यायः । एवं "उत्पत्त्यसम्भवात्" (२।२।४२) इत्यस्य पूर्वपक्षसूत्रत्वमप्यसङ्गतम् । यतोऽस्मिन् पादेऽधिकरणादिमसूत्रस्यैव सिद्धान्तसूत्रत्वमित्यनपोदितनियमस्य जागरूकत्वादित्यन्यत्र विस्तरः ।

महामहोपाध्यायः स्वामि
श्रीरघुवराचार्यः ।



## श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये

# द्वितीयाध्यायस्य तृतीयः पादः ।

### * अथ वियदधिकरणम् ॥१॥

श्रुतिविरुद्धत्वेन परपक्षाणां भ्रममूलकत्वेनाप्रामाण्यमभिधाय श्रुतीनामपि परस्परविरुद्धत्वेनाप्रामाण्यशङ्का स्यादिति तदपाकरणार्थं पश्चात्तनं पादद्वयमारभ्यते । तत्रादौ सृष्ट्यादिवाक्यानामविरोधं प्रतिपादयितुमाकाशमधिकृत्य पूर्वपक्षयति--

### न वियदश्रुतेः ।२।३।१।

आकाश उत्पद्यते न वेति संशये नोत्पद्यत एवाकाशः । कुतः ? । अश्रुतेः । श्रुतावुत्पत्तेरश्रुतेः । छान्दोग्ये "सदेव सोम्येदमग्र असीत्" "तदैक्षत बहुस्याम्प्रजायेय" "तत्तेजोऽसृजत" (छा० ६।२।३।) इति सृष्टिवाक्ये गगनस्योत्पत्तिर्न श्रूयते । असम्भवदुक्तिका ह्याकाशस्योत्पत्तिः । निरवयवत्वात् । यथा निरवयवस्यात्मन उत्पत्तिर्न सम्भवति तथाकाशस्यापीति । "एतस्मादात्मन आकाशस्सम्भूतः" (तै० २।१।) इत्यादिवचनन्तु विरुद्धत्वादप्रमाणमिति पूर्वः पक्षः ॥१॥

### अस्ति तु ।२।३।२।

तुशब्दः पूर्वपक्षव्यावर्तकः । अस्त्येवाकाशस्योत्पत्तिः । "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" (तै० २।१।) इति श्रुतेः । न चास्याः

---

* उत्पद्यते न वाऽऽकाशो नो निरवयवत्वतः । अश्रुतेश्चापि, नैतद्वै श्रुतावुत्पत्तिदर्शनात् ॥१॥ कारणाव्यतिरेकान्नामृतत्वश्रुतिबाध्यता । वियतो या व्यवस्थाऽत्र वायोरपि च सा तथा ॥२॥

स्वरवेणोत्पत्तिमाकाशस्यानिदधत्याः श्रुतेरप्रामाण्यं शक्यमुपकल्पयितुम् । न ह्यस्ति परस्परं विरोधो येनैकस्या अप्रामाण्यं स्यात् । छान्दोग्ये तु तेजः आरभ्य सृष्टिरुपन्यस्यते । ततः प्रागाकाशस्य तैत्तिरीयश्रुतिसम्मता सृष्टि-रवगन्तुं शक्यैवेति न कश्चिद्विरोधः । निरवयवत्वेन गगनस्यानुत्पत्तिरिति मतन्तु श्रुतिपराहतत्वाद्धेयमिति सिद्धान्तः ॥२॥

भूयः समाशङ्कते–

## गौण्यसम्भवात् ।२।३।३।

यदुक्तं "तस्माद्वा एतस्मादात्मन" इति श्रुत्याकाशस्योत्पत्तिरवग-म्यत इति तदयुक्तम् तस्याः श्रुतेर्गौणत्वात् । कुतः ? "तत्तेजोऽसृजत" (छा० ६।२।३।) इत्यन्यत्र तेजस एव प्रथमसृष्टिः श्रूयते, तदानुगुण्येन वियदुत्पत्तिश्रुतिर्गौण्येव । तर्केण दृढीकृतस्यैवार्थस्य श्रुतिप्रतिपाद्यत्वात् । तर्कश्चाकाशस्य सर्वगतत्वेन विभुत्वेनात्मवदुत्पत्तेरसम्भवमाह । प्रत्युत विभुरूपस्यात्मनो यथा नित्यत्वं तथाकाशस्यापीत्यनुमानान्नित्यत्वमेव ॥ ३ ॥

## शब्दाच्च ।२।३।४।

"वायुश्चान्तरिक्षं चैतदमृतम्" (बृ० ४।३।३।) इति श्रुतिशब्दाच्चा-काशस्यामृतत्वमुच्यते तस्मान्न वियदुत्पत्तिः सम्भवति ॥४॥

ननु "तस्माद्वा एतस्मादात्मन" इति श्रुतौ श्रूयमाणस्य सम्भूतप-दस्यैकस्यैवाकाशे गौणत्वमन्यादौ च प्राधान्यमिति कथं संगच्छत इत्या-शंकायामाह–

## स्याच्चैकस्य ब्रह्मशब्दवत् ।२।३।५।

"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" (तै० २।१।) इत्यत्रैक-स्यैवाकाशाद्वायुः वायोरग्निरिति सर्वत्रानुषक्तस्य सम्भूतपदस्याकाशे गौ-णत्वेऽपि वाय्वादौ मुख्यत्वं स्यादेव । ब्रह्मशब्दवत् । यथा ब्रह्मशब्दस्य

"अन्नं ब्रह्मेति व्यजानात्" (तै० ३।२।) इत्यादिष्वन्नादिषु गौणत्वं "आनन्दो ब्रह्मेति व्यजानात्" (तै० ३।६।) इत्यत्र च मुख्यत्वम्। तथा प्रकृते सम्भूतपदस्यापि मुख्यत्वं गौणत्वञ्च सम्भवति ॥५॥

सिद्धान्तयति--

## प्रतिज्ञाहानिरव्यतिरेकात् ।२।३।६।

"येनाश्रुतं श्रुतम्भवत्यमतं मतमविज्ञातं विज्ञातम्" इतिच्छान्दोग्यादिष्वेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा प्रतिपादिता। तस्याश्चाहानिराकाशस्य ब्रह्मकार्यत्वेनैव भवति। कारणभूतस्यैकस्य ब्रह्मण एव नित्यत्वेन तदव्यतिरेकात् ब्रह्मकार्यभूतानामाकाशादीनामिति ॥६॥

## शब्देभ्यश्च ।२।३।७।

छान्दोग्याद्युपनिषत्सु वियदादीनामुत्पत्तिर्दृश्यते। "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" (छा० ६।२।१।) इति सृष्टेः प्रागेकत्वमभिधाय "ऐतदात्म्यमिदं सर्वं" (छा० ६।८।७।) इत्यादिशब्देभ्यश्च ब्रह्मात्मकत्वेनाव्यतिरेकः कार्यभूतेष्वाकाशादिषु प्रतीयते। तेजस उत्पत्तिर्नाकाशोत्पत्तिं प्रतिषेधति ॥७॥

## यावद्विकारन्तु विभागो लोकवत् ।२।३।८।

तु शब्दश्चार्थे। यद्यपिच्छान्दोग्ये "तत्तेजोऽसृजत" इत्यत्राकाशस्योत्पत्तिर्न स्पष्टमभिहिता तथापि "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" (छा० ८।६।) "ऐतदात्म्यमिदं सर्वम्" इत्याकाशादेः सर्वस्य ब्रह्मविकारत्ववचनेन सर्वस्य ब्रह्मणो विभाग उत्पत्तिरभिहितैवेत्यवगन्तव्यम्। लोकवत्। यथा लोके मृदो विभागो मृदः उत्पन्नस्तथा प्रकृतेऽपीति ॥८॥

## एतेन मातरिश्वा व्याख्यातः ।२।३।६।

एतेन ब्रह्मणो वियदुत्पत्तिरिति व्याख्यानेन वायुरपि वियदन्तर्गताद्‌-काशभावमापन्नाद्ब्रह्मणः सम्भूत इति वायुरप्युत्पत्तिमत्तया व्याख्यातः । वायोर्लयप्रतिषेधस्तद्विषयकामृतत्ववचनञ्चापेक्षिकम् । वायोर्नित्यत्वे तस्या एवैक विज्ञानेन सर्वविज्ञानप्रतिज्ञाया हानिः स्यात् । वायोः पृथग्व्याख्या-नन्तूत्तरार्थम् ॥६॥

## असम्भवस्तु सतोऽनुपपत्तेः ।२।३।१०।

तुशब्दोऽवधारणार्थकः । सतः सदा विद्यमानस्य परमकारणस्य परस्य ब्रह्मण उत्पत्त्यसम्भवः । कुतः ? अनुपपत्तेः । ब्रह्मणः कारणत्वान्वेषणे-तस्यापि कारणमिति स्यादनवस्था । अपहतपाप्मत्वादिगुणकस्य तस्य जन्महेतुकपुण्यपापाभावेनोत्पत्त्यनुपपत्तेः । "न चास्य कश्चिज्जनिता न चाधिपः" (श्वे० ६।६) इति स्फुटं तज्जनकत्वनिषेधाच्च तज्जन्मानुपपत्ते-रिति ॥१०॥

### * अथ तेजोऽधिकरणम् ॥२॥

## तेजोऽतस्तथाह्याह ।२।३।११।

छान्दोग्ये ब्रह्मणस्तेजस उत्पत्तिः श्रूयते तैत्तिरीये तु वायोस्तदुत्पत्ति-रित्युभयोर्वाक्ययोरस्ति परस्परं विरोधो न वेति संशये न ह्येकेन पदार्थेन युगपद् द्वाभ्यां शक्यमुत्पत्तुमित्यस्ति विरोध इति प्राप्त आह तेजोऽतस्त-थाह्याहेति । अतः वायोः सकाशात्तेज उत्पद्यते । तथा ह्याह श्रुतिः "वायोरग्निः" (तै० २।१) अचेतनाद्वायोस्तत्सजातीयस्याचेतनस्य तेजस

* तेजोजलक्षितीनां किं ह्युत्पत्तिः पवनादितः ? । अथवा ब्रह्मणः ? किं स्याद् वाय्वादेः श्रुतिवाक्यतः ॥३॥ तदभिध्यानतो लिङ्गाद् राघवाद् ब्रह्मणश्च सा । ईक्षतेस्तेज इत्यादेः सम्भवात्तत्तनोर्हरेः ॥४॥

उत्पत्तिः सम्भवति न तु विजातीयाच्चेतनाद्ब्रह्मणः। तस्माद्वायोस्तदुत्पत्तेर्मुख्यत्वाद्ब्रह्मणस्तदुत्पत्तेश्च गौणत्वान्नास्ति विरोध इति पूर्वपक्षाद्यसूत्रम् ॥११॥

## आपः ।२।३।१२।

अतस्तथा ह्याहेत्यनुवर्तते। "तदपोऽसृजत" (छा० ६।२।३) इत्यादि छान्दोग्यवाक्यस्य "अग्नेराप" (तै० २।१) इति तैत्तिरीयवाक्येन विरोधोऽस्ति न वेति संशयः। पूर्वपक्षस्तु अतस्तेजस एवाप उत्पद्यन्ते हि यस्मात्तथा तेजसोऽपामुत्पत्तिमग्नेराप इति श्रुतिराहेति ॥१२॥

## पृथिवी २।३।१३।

अत्राप्यतस्तथाह्याहेत्यनुवर्तते। अतः अद्भ्यः पृथिवी जायते हि यस्मात्तथा पृथिव्या अद्भ्य उत्पत्तिं "ता अन्नमसृजन्त" (छा० ६।२।३।) इति श्रुतिराहेति ॥१३॥

## तदधिकाररूपशब्दान्तरेभ्यः ।२।३।१४।

पूर्वसूत्रमनुवर्तते। "ता अन्नमसृजन्त" (छा० ६।२।३।) इत्यादावन्नशब्देन पृथिव्या ग्रहणं कुत इतिचेत्तदाह तदधिकारेत्यादि। तदन्नम् पृथिव्येव। कुतः? अधिकाररूपशब्दान्तरेभ्यः। "तत्तेजोऽसृजत" इति महाभूतसृष्टयधिकारात् "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य" (छा० ६। ) इति रूपकथनादन्नशब्देनाप्तेजसोः सजातीयाया पृथिव्या एवाभिधानमुच्यते। तथा तैत्तिरीये समानप्रकरणे "अद्भ्यः पृथिवी" (तै० २।१) इत्यद्भ्यः पृथिव्या एवोत्पत्तिरभिधीयते। तथा चादनीयजातस्य पृथिवी विकारतया कार्यमभिदधानोऽयमन्नशब्दः कारणभूताम्भुवमेवाभिधत्त इति ॥१४॥

तदेवं केवलेभ्यस्तेज आदिभ्य एवावादिसृष्टिरिति पूर्वपक्षिते सिद्धान्तयति।

## तदभिध्यानादेव तु तल्लिङ्गात्सः ।२।३।१५।

तुशब्दः पूर्वपक्षव्यावर्तकः । तदभिध्यानरूपादेव तल्लिङ्गात्सोऽभिध्यानकर्ता परमात्मैव तेजोबन्नादीनां सर्वेषां सृष्टिकर्त्ता । अभिध्यानमीक्षणं बहुस्यामिति संकल्प एव । अयमाशयः "तदैक्षत बहु स्याम्प्रजायेय" (छा० ६।२।३) इति संकल्प्य "तत्तेजोऽसृजत" एवं "तत्तेज ऐक्षत बहु स्याम्प्रजायेयेति तदपोऽसृजत" "ता आप ऐक्षन्त बह्वयः स्याम प्रजायेमहि" (छा० ६।२।४) इत्यात्मनो बहुभवनसंकल्परूपेक्षणस्य तेजः प्रभृतिशरीरत्वेनात्मसृष्टिकरणसामर्थ्यस्य च परमात्मन एव सम्भवात् । तेज आदीनामचेतनानां तदसम्भवात् । तथा च तेज आदीनामवाद्युत्पादकत्वानुपपत्तिः । परमात्मनस्तु "यः पृथिव्यां तिष्ठन्नि"त्यारम्य "य आकाशे तिष्ठन् यस्याकाशः शरीरं य आकाशमन्तरो यमयति" (बृ० ३।७।१२) इत्येवमाद्यन्तर्यामिश्रुतिसिद्धाकाशादिसर्वशरीरस्य सत्यसंकल्पस्य विचित्र सृष्टिरचनाशक्तिमतः सर्वज्ञस्याकाशवायुतेजोऽब्वाद्युत्पादकत्वोपपत्तेः । स एव परमात्माकाशादिशरीर ईक्षणपूर्वकमाकाशादीनामुत्पादक इति सिद्धम् ॥१५॥

### * अथ विपर्ययाधिकरणम् ॥३॥

## विपर्ययेण तु क्रमोऽत उपपद्यते च ।२।३।१६।

एवं भौतिकमुत्पत्तिक्रममभिधाय प्रलयक्रममभिधत्ते । उत्पत्तेर्योऽयं क्रमस्तथा न प्रलयक्रमः । किन्तु विपर्ययेण अतः सृष्टिक्रमात्प्रलयक्रमोऽवगन्तव्यः । कुतः ? उपपद्यते च । प्रातिलोम्येन प्रलय उपपद्यते । लोके नहि प्रवेशानुरूपं निष्क्रमणमुपलभ्यतेऽपि तु विपर्ययेणैव । तथा प्रलयक्रमोऽपि वेदितव्यः "पृथिव्यप्सु प्रलीयते आपस्तेजसि" (सुबा० २ ख०) इत्यादिश्रुतेः ॥१६॥

---

* किमुत्पत्तिक्रमेणैव लयक्रमोऽथवाऽन्यथा । सन्निहितत्वतः श्रौत

### ❀ अथान्तराविज्ञानाधिकरणम् ॥४॥

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ।२।३।१७।

"एतस्मादात्मन आकाशः सम्भूत" (तै० २।१।) इत्यात्मन आकाशादुत्पत्तिक्रमस्य "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' (मु० २।१।३।) इत्युक्तेनात्मन इन्द्रियाद्युत्पत्तिक्रमेण विरोधोऽस्ति न वेति संशयेऽस्ति विरोध इत्याह–अन्तरेति । विज्ञायतेऽनेनेतिव्युत्पत्त्या विज्ञानशब्देन बुद्धीन्द्रियाणि गृहीतानि स्युः । सर्वेन्द्रियाणि चेतिश्रुत्यनुसारात् । संशयात्मकान्मनसो निश्चयात्मिकाया बुद्धेर्भेदाद्बुद्धेरपि ग्रहणम् ।

तत्रात्मन इन्द्रियाणामुत्पत्तिस्तदनन्तरमाकाशवायुज्योतिराद्युत्पत्तिरित्यात्मनो भूतानाञ्चान्तराल इन्द्रियाणामुत्पत्तौ "एतस्माज्जायते प्राण." (मु० २।१।३) इतीदं वाक्यमेव लिङ्गं ज्ञापकं तस्माल्लिङ्गादात्मन इन्द्रियप्राणबुद्धिमनांसि समुत्पद्यन्ते । तेभ्यो भूतानीत्यनेन क्रमेणात्मन आकाशः सम्भूत इति साक्षादात्मन आकाशाद्युत्पत्तिक्रमस्य विरोधोस्तीति चेन्न । कुतः ? अविशेषात् "यस्य पृथिवी शरीरं" "यस्यापः शरीरम्" इत्याद्यन्तर्यामिश्रुतिभ्यः सर्वेषां भूतेन्द्रियादीनां परमात्मशरीरत्वावगमात् । शरीरवाचकशब्दानां शरीरिणि पर्य्यवसानादिति सिद्धान्तात् । एवञ्च भूतेन्द्रि-

---

आद्य एवावगम्यताम् ॥५॥ विपर्ययेण विज्ञेयो लौकिकस्यात्तिसन्निधेः । यतः कारणसत्तायां कार्यनाशोऽवलोक्यते ॥६॥

* साक्षादात्मन आकाशाद्युत्पतिक्रम ईरितः । विरोधस्तस्य च प्राणाद्युत्पतिक्रमतो न वा ? ॥७॥ तल्लिङ्गात्तु विरोधः स्यान्मैव यदविरुद्धता । साक्षादीशाद्धि सर्वेषामुत्पत्तेरविशेषतः ॥८॥ भूतेन्द्रियादिशब्दानामीशवाचकता यतः । शरीरवाचकाः शब्दाः पर्यवस्यन्ति देहिनि ॥९॥

यादिपदानां भूतेन्द्रियादिशरीरकब्रह्माभिधायकत्वात्सर्वेषामपि साक्षाद्ब्रह्मण उत्पत्तेरविशेषात् । ब्रह्मणोऽन्यस्मादुत्पत्तिस्वीकारे तस्य ब्रह्मानन्यत्वानुपपत्त्या कारणात्कार्यस्य व्यतिरेकत्वनिष्पत्तेः कारणैकज्ञानेन सर्वकार्यविज्ञानप्रतिज्ञायाः हानिः स्यात् । तस्मादुक्त एवार्थोऽवगन्तव्य इति । ॥ १७ ॥

तत्तद्वस्तुवाचकत्वेन शब्दानां ब्रह्मणि कथं मुख्यवृत्त्या प्रवृत्तिरित्याह ।

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् २।३।१८।

तुशब्दः शंकाव्यावर्तकः । चराचरवस्तुव्यपाश्रयस्तद्व्यपदेशस्तद्वाचकः शब्दो ब्रह्मण्यभाक्तो मुख्य एव स्यात् । कुतः ? तद्भावभावित्वात् । चराचराणां तदन्तर्गतानां तेजः प्रभृतीनां ब्रह्मशरीरतया ब्रह्मभावेन भावितत्वात् । ब्रह्मणः शरीरितया मुख्यत्वात् । चराचरस्य तच्छरीरतया तदीयत्वेन गौणत्वात् । तथा न यस्य भावेन यो भावितो भवति स तस्माद् गौण एव भवति । यथा शिष्यं पुत्रत्वेन पश्यतीत्यत्र पुत्रभावेन भावितो दृष्टः शिष्यो गौण एव पुत्रस्तु मुख्यः । एवं चराचराणां ब्रह्मभावभावितत्वाद् ब्रह्मणि मुख्यत्वोपपत्तेः । चराचराणां गौणत्वम् । तथा चैकस्यैव शब्दस्य मुख्यया वृत्त्या ब्रह्माभिधायकत्वं गौण्या च वृत्त्या चराचरबोधकत्वमिति न कश्चिद्विरोध इति ॥१८॥

### * अथात्माधिकरणम् ॥५॥

## नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ।२।३।१९।

एवं परब्रह्मणोऽखिलस्य वियदादिप्रपञ्चस्योत्पत्तिमभिधाय जीवात्म-

---

* आकाशादेरिवोत्पत्तिर्जीवस्याप्यस्ति वा न हि । अस्त्येकत्वश्रुतेश्चैवं प्रतिज्ञायाश्च सिद्धितः ॥१०॥ प्रजासृष्टिश्रुतेश्चापि नैतच्छ्रुतेरभावतः । नित्यत्वश्रवणाच्चापि नात्मनो जन्म युज्यते ॥११॥

विषये शास्त्रार्थः प्रस्तूयते। तत्राकाशस्योत्पत्तिरिव जीवस्यापि ब्रह्मण उत्पत्तिरस्ति न वा ? किं युक्तम् ? अस्तीत्येव। कुतः ? 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'। (छा० ६।२।२) इति सृष्टेः प्राक्काल एकत्वनिश्चयात्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाश्च तथा सत्येवोपपत्तेः। वियदादेरिव जीवस्याप्युत्पत्तिवादिन्यः श्रुतयश्च सन्ति। "प्रजापतिः प्रजाः असृजत" (यजु० २ अ०) "यतो वा इमानि भूतानि जायन्ते" (तै० ३।१) इत्यादिभिश्चराचरजगत उत्पत्तिकथनाज्जगदन्तर्गतस्य जीवस्याप्युत्पत्तिमत्त्वमवगम्यते। न च "तत्त्वमसि" (छा० ६।८।७) इत्यादिवाक्यैर्जीवस्य ब्रह्मत्वबोधनात्तस्य च नित्यत्वाज्जीवस्यापि तथास्त्विति वाच्यम्। "सर्वं खल्विदं ब्रह्म" (छा० ३।१४।१) इत्यादिभिश्चाकाशस्यापि ब्रह्मत्वप्रतिपादनात्तस्यापि नित्यत्वप्रसक्तेः। तस्मादाकाशादिवज्जीवस्याप्युत्पत्तिरस्तीति प्राप्ते समाधीयते—नात्माऽश्रुतेः। न जीवात्मोत्पद्यते। कुतः अश्रुतेः। तथाऽश्रवणात्। न तादृशी काचिदपि श्रुतिरस्ति यत्र जीवोत्पत्तिः श्रुता भवेत्। प्रत्युत श्रुतिभ्यो नित्यत्वमेवावगम्यते। तथाहि—"अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते" (का० २।१८।) "न जायते म्रियते वा विपश्चित्" (का० २।१८) "ज्ञाज्ञौ द्वावजावीशानीशौ" (श्वे० १।९) "नित्यो नित्यानां चेतनश्चेतनानाम्" (श्वे० ६।१३) इत्याद्यनेकश्रुतिभ्य आत्मनो नित्यत्वमेवावगम्यते।

यत्तु "एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" (बृ० ४।५।१३।) इत्यनया श्रुत्याऽऽत्मनो विनाशः श्रूयत इति। तन्न। उत्तरवाक्यशेषे "न प्रेत्य संज्ञास्ति" (बृ० ४।५।१३) इति संज्ञामात्रस्यैव विनाशोऽभिहितो न जीवस्वरूपस्य। अत एव "न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा" (बृ० ४।५।१४) इति श्रुत्या स्पष्टमेवात्मनोऽविनाशित्वमनुच्छित्तिधर्मत्वमभिहितम्। तस्मान्नात्मन उत्पत्तिमत्त्वम्। यथा चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया उपपत्तिस्तथा वक्ष्यत उपरिष्टादिति सर्वमुपपन्नम् ॥१९॥

## * अथ ज्ञाधिकरणम् ॥६॥

## ज्ञोऽत एव २।३।२०।

आकाशादिवज्जीवो नोत्पद्यत इत्यभिहितम् इदानीं तत्स्वरूपं निरूप्यते। तत्र काणभुजाभिमतं स्वयमचेतनं कादाचित्कचैतन्यगुणकमित्येकः पक्षः। कपिलाद्यभिमतं चिन्मात्रमिति द्वितीयः। ज्ञातृत्वमेवेति तृतीयः। तत्र किं युक्तम्? कादाचित्कचैतन्यगुणकमिति। कुतः? आत्ममनःसंयोगजमेवागन्तुकं चैतन्यम्। नित्यचैतन्ये तु सुषुप्तिमूर्च्छादिष्वपि तदुपलब्धिरविकलं स्यात्तस्मादागन्तुकचैतन्यगुणकमेवात्मनः स्वरूपमिति। तदयुक्तम्। श्रुतिभ्यश्चिन्मात्रमेवात्मनः स्वरूपमवगम्यते। "यो विज्ञाने तिष्ठन्" (बृ० ३।७।२२) 'विज्ञानमानन्दम्ब्रह्म" (बृ० ३।९।२८) "सत्यं ज्ञानमनन्तं ब्रह्म" (तै० २।१।१) "अनन्तरो बाह्यः कृत्स्नः प्रज्ञानघन एव" (बृ० ४।५।१३।) इति। तथा "ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः" (वि० पु० १।२।६।) इति स्मृतिभ्यश्च ज्ञानस्वरूपमेवोच्यते। क्वचिदुपाधीनामुत्पत्तिविनाशौ श्रूयेते तद्वशाच्च ज्ञानस्वरूपे जीवेऽपि लाक्षणिकः प्रयोगः। "प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" (बृ० ४।५।१३।) इत्यादौ। न च जीवात्मनो ज्ञानत्वे ज्ञातृत्वे वा स्वाभाविकेऽभ्युपगम्यमाने तस्य सर्वगतस्य सर्वत्र सर्वदोपलब्धिप्रसङ्गः करणानाञ्च वैयर्थ्यमिति वाच्यम्। अग्रे समाधास्यमानत्वात्। अतो विज्ञानमेवात्मनः स्वरूपम्।

---

* स्वयमचेतनः कादाचित्कचैतन्यवानथो। चिन्मात्रमथवा ज्ञाता जीवः किञ्चात्र युज्यते? ॥१२॥ मूर्च्छासुषुप्त्यवस्थायां ज्ञानाभावान्न चान्तिमौ। चिन्मात्रं वा स विज्ञेयः श्रुतिस्मृत्योस्तथोक्तितः ॥१३॥ श्रुतावुत्पत्तिनाशौ तु ह्युपाध्युत्पत्तिनाशतः। जश्चेतनः श्रुतेरेवाणुश्चोत्क्रान्त्यादिहेतुतः ॥१४॥ गुणाद्वालोकवद् व्याप्त्या पादादौ वेदना मता। मूर्च्छादौ ज्ञानसङ्कोचान्नाभिव्यक्तिः सुबुध्यताम् ॥१५॥ तद्गुणसारतस्तद्व्यपदेशस्त्वखिलेशवत्।

इति प्राप्तेऽभिधीयते-ज्ञोऽत एवेति । ताभ्य इति पूर्वसूत्रादनुवर्तते । अतो वियदादिवदुत्पत्तिमत्वाभावान्नित्यत्वाच्चोत्पत्तिमत्वाभावेनाचित्तत्त्ववत्परिणामित्वमपि नास्त्यतो नित्यत्वेन सदैकरसत्वाच्च । अयमात्मा ज्ञस्वरूप एव न ज्ञानमात्रस्वरूपः । ताभ्यः श्रुतिभ्यः । "अथ यो वेदेदं जिघ्राणीति स आत्मा" (छा० ८।१२।४) "मनसैवैतान् कामान् पश्यन् रमते" (छा० ८।१२।५।) "नोपजनं स्मरन्निदं शरीरम्" छा० ८।१२।३।) "सत्यकामः सत्यसंकल्पः" ( छा० ८।७।१ ) इत्यादिश्रुतिभ्यो बद्धमुक्तोभयावस्थात्मनो ज्ञातृत्वावगमात् । एवं "न पश्यो मृत्युं पश्यति" ( छा० ७।२६।२ ) "विज्ञातारमरे केन विजानीयात्" ( छा० ६।५।१५ ) "जानात्येवायं पुरुषः" "एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा" (प्र० ४।९।) "एवमेवास्य परिद्रष्टुरिमाप्षोडशकला." (प्र० ६।५।) इत्यादिश्रुतिभ्यः स्पष्टमस्य ज्ञातृत्वमवगम्यते । "यो विज्ञाने तिष्ठन्" "विज्ञानं यज्ञं तनुते" इत्यादौ ज्ञानमात्रव्यपदेशस्तु ज्ञानस्य प्रधानगुणत्वात्स्वरूपानुसम्बन्धित्वेन स्वरूपनिरूपकगुणत्वाज्ज्ञानवत्स्वयं प्रकाशकत्वाद्वोपपद्यते । ॥ २० ॥

आत्मनः सर्वगतत्वं निराकरोति-

## उत्क्रान्तिगत्यागतीनाम् ।२।३।२१।

ताभ्य इत्यनुवर्तते । नायमात्मा सर्वगतः किन्त्वणुरेव । उत्क्रान्तिगत्यागतीनाम् । आत्मोत्क्रान्तितद्गतितदागतिश्रुतिभ्य इत्यर्थः । "तेन प्रद्योतेनैष आत्मा निष्क्रामति" ( बृ० ६।४।२। ) "ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" (कौषी० १।२।) "तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे" (बृ० ६।४।२।) इत्यादिगत्यागत्युत्क्रान्तिश्रुतिभ्य आत्मनः सर्वगतत्वं नोपपद्यते किन्त्वणुत्वमेव । सर्वगतस्य विभोः गतिश्चागतिश्च नोपपद्यते । तस्मादात्मनोऽणुत्वमेव ॥२१॥

## स्वात्मना चोत्तरयो ।२।३।२२।

चोऽवधारणार्थः । देहस्यात्मसकाशादपाकरणरूपाया देहात्मवियोगरूपाया उत्क्रान्तित्वस्वीकारे स्यात्कथञ्चिदियमुत्क्रान्तिः । अथवा देहस्वामित्वनिवृत्तिरेवोत्क्रान्तिः सा च विभुत्वेऽप्यात्मनः सम्भवति । उत्तरयोर्गत्यागत्योस्तु न कथञ्चिदपि सम्भवः। स्वात्मना सम्बद्धत्वात् । अतस्ते स्वात्मनैव सम्भवतस्तस्मादणुरेवात्मा ॥२२॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् २।३।२३।

"स वा एष महानज आत्मा" (बृ० ६।४।२५) इति महत्त्वश्रुतेर्न जीवोऽणुरिति चेन्न, इतराधिकारात् । जीवादितरस्य परमेश्वरस्य तत्राधिकारात् । "यस्यानुवित्तः प्रतिबुद्ध आत्मा" (बृ० ६।४।१३) इति मध्ये परमात्मा प्रतिपाद्यते । तस्यैवेदं महत्त्वमुपदिश्यते न जीवात्मनः ॥२३॥

## स्वशब्दोन्मानाभ्याञ्च ।२।३।२४।

"एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश" (मु० ३।१।६।) स्वस्याणुत्वस्य वाचको योऽणुशब्द आत्मपदसामानाधिकरण्येन निर्दिष्टस्तस्मादुन्मानाच्च सर्वेभ्यः स्थूलपरिमाणेभ्य उद्धृत्यमानमुन्मानमत्यन्तापकृष्टपरिमाणमितियावत्तस्मात् । "वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्यायकल्पते" (श्वे. ५।६।) "आराग्रमात्रो ह्यवरोऽपि दृष्टः" (श्वे० ५।८।) इत्याराग्रमात्रोन्मानाच्च जीवोऽणुरेव ॥२४॥

नन्वात्मनोऽणुत्वे देहव्यापिसुखाद्यनुभवविरोध इत्याशङ्कां मतान्तरेण परिहरति--

## अविरोधश्चन्दनवत् ।२।३।२५।

यथा चन्दनविन्दुः शरीरैकदेशस्थः शरीरव्यापि सुखञ्जनयति । तथाऽणुर्जीवोऽपि देहव्यापिसुखादिकमनुभवतीत्यविरोधः ॥२५॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ।२।३।२६।

ननु चन्दनविन्दोर्देशविशेषेऽवस्थितिर्दृश्यते । आत्मनस्त्वणुत्वेन क्वाप्यवस्थितिर्नोपलभ्यत इति चेन्न जीवस्यापि तदभ्युपगमात् । "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः" (बृ० ६।३।७) "हृदि ह्ययमात्मा तत्रैकशतं नाडीनाम्" (प्र० ३।६।) इत्यल्पपरिमाणे हृदि जीवस्यावस्थित्यभ्युपगमवचनेनाणुत्वमिति ॥२६॥

इदानीं स्वमतमाह--

## गुणाद्वाऽऽलोकवत् ।२।३।२७।

वाशब्देन मतान्तरं व्यवच्छिद्यते । स्वमते तु जीवात्माणुर्हृत्स्थोऽपि स्वगुणेन ज्ञानेन कृत्स्नं देहं व्याप्यावस्थितः । आलोकवत् । व्यापिप्रभागुणकप्रदीपवत् । यथाल्पोऽपिगृहैकदेशस्थो दीपः प्रभात्मकेन व्यापकेन स्वगुणेन कृत्स्नं गृहं प्रकाशयति । तद्वदात्माऽपि ज्ञानेन कृत्स्नं देहं व्याप्य तद्वेदनादिकं जानाति ॥२७॥

ननु गुणस्य गुणिव्यतिरिक्तदेशेऽवस्थानादर्शनाद्विज्ञानं यज्ञं तनुत इत्यादौ च ज्ञानस्यैवात्मस्वरूपत्वश्रवणात् कथं ज्ञानस्य स्वरूपव्यतिरिक्तगुणत्वं कथं वा देहान्तरे व्याप्यावस्थानमित्याशङ्कायामाह--

## व्यतिरेको गन्धवत्तथा च दर्शयति ।२।३।२८।

पुष्पपेटिकातो दूरस्थस्यापि पुंसः पुष्पात्मकपृथिवीगुणस्य गन्धस्य व्यतिरेकेण देशान्तर उपलम्भदर्शनाज्ज्ञानस्यापि तद्गुण्यात्मव्यतिरेको निष्पद्यते । न च "विज्ञानं यज्ञं तनुत" (तै० ।२।५।१) इतिश्रुतिविरोधेनोक्तयुक्त्या ज्ञानस्यात्मव्यतिरेको नोपपद्यत इति वाच्यम् । तथा च दर्शयति श्रुतिः । आत्मनो हृदयायतनत्वमणुपरिमाणत्वञ्चाभिधाय "आलोमभ्य

आनन्त्यम्" इति ज्ञानगुणेनात्मनः सर्वदेहव्यापित्वं दर्शयति श्रुतिस्तस्मान्न श्रुतिविरोधः ॥ २८॥

## पृथगुपदेशात् ।२।३।२६।

"न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" (बृ० ।६।३।३०) इति विज्ञातुरात्मनो विज्ञातेर्ज्ञानगुणस्य विपरिलोपो विनाशो न विद्यते । इति ज्ञातुरात्मनस्तद्गुणभूतस्य ज्ञानस्य पृथग्व्यपदेशात् । किञ्च "प्रज्ञया शरीरं समारुह्य" (कौषी० ३।६।) इत्यात्मनः कर्तृत्वेन ज्ञानस्य करणत्वेन पृथगुपदेशाद् व्यापिज्ञानगुणद्वारास्य जीवस्य शरीरादिव्याप्तिरवगम्यते ॥ २६ ॥

तर्हि "विज्ञानं यज्ञं तनुते" इति विज्ञानस्वरूप आत्मेत्युपदेशः कथमुपपद्यतामित्यत्राह -

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ।२।३।३०।

तुशब्दः शंकाव्यावर्तकः । आत्मनो विज्ञानगुणसारत्वाद्विज्ञानमिति-व्यपदेशः । विज्ञानमेवास्य सारभूतो गुण इति । प्राज्ञवत् । "यःसर्वज्ञः सर्ववित्" (मु० १।१।६।) इति सर्वज्ञातृत्वेन श्रुतः प्राज्ञो ज्ञानगुणसारत्वात् "सत्यं ज्ञानमनन्तं ब्रह्म" इतिज्ञानशब्देन व्यपदिश्यते । यथा च "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" (तै० ।२।६।) "स एको ब्रह्मण आनन्द" इत्यानन्दगुणकत्वेन श्रुतस्य प्राज्ञस्यानन्दगुणसारत्वादानन्दादिपदेन आनन्दो ब्रह्मेति व्यजानादिति व्यपदेशस्तद्वदिति ॥३०॥

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ।२।३।३१।

विज्ञानस्य यावदात्मस्वरूपभावित्वेन तत्स्वरूपनिरूपणधर्मत्वात्तच्छब्देनात्मव्यपदेशे न दोषः । खण्डादिषु तथा दर्शनात् । खण्डादयो यावत्स्वरूपभाविगोत्वादिधर्मवत्त्वेन खण्डो गौरिति शब्देन व्यपदिश्यन्ते । एवमत्रापि जीवस्य विज्ञानशब्देन व्यपदेशः । ज्ञानवदात्मनोऽपि स्वप्रकाशत्वेन विज्ञान-

व्यपदेशो न दोषायेति चकारेण समुच्चयः ॥३१॥

ननु सुषुप्त्यादिषु ज्ञानस्यानुपलब्धेः कथं यावदात्मभावित्वमित्यत आह—

## पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ।२.३.३२।

तु शब्दश्चोद्यं व्यावर्तयति । यथा बाल्ये पुंस्त्वादेः सत एव यौवनेऽभिव्यक्तिः । एवं सुषुप्त्यादिष्वपि सत एव ज्ञानस्यानभिव्यक्तस्य जागरितादिष्वभिव्यक्तिसम्भवात् स्वरूपानुबन्धिधर्मत्वोपपत्तिरिति न दोषः ॥ ३२ ॥

एवमात्मनो ज्ञातृत्वमणुत्वञ्चाभिधाय पक्षान्तरे दोषं दर्शयति ।

## नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ।२।३।३३।

अन्यथा ज्ञानमात्रात्मस्वरूपस्वीकारे सर्वगतत्वपक्षे च उपलब्ध्यनुपलब्ध्योर्द्वयोर्नित्यत्वप्रसङ्गोऽन्यतरनियमो वा स्यात् । तत्र ज्ञानात्मपक्षे ज्ञानस्य स्वप्रकाशस्वभावत्वात्प्रकाशपर्य्यायाय। अनुपलब्धेर्वक्तुमयोग्यत्वाज्ज्ञानमेवानुपलब्धेरपि हेतुरिति चेत्तर्हि ज्ञानस्य सर्वदा विद्यमानत्वात्सर्वदोपलब्ध्यनुपलब्धिप्रसङ्गः । अथ विरुद्धकार्ययोर्युगपज्जननायोगाज्ज्ञानोपलब्ध्योरन्यतरहेतुः स्थाप्यते तदाऽन्यतरनियमः स्यात् । एवमात्मनः सर्वगतत्वपक्षे । यथा ज्ञानात्मवादिनस्तथैव हेतुजन्यज्ञानवादिनोऽपि समानो दोषः । तथा हि सर्वेषामात्मनां सर्वगतत्वे सर्वस्याप्यात्मनः सर्वसंयोगात्तदुपलब्धेर्नित्यत्वप्रसङ्गः । सर्वगतस्य विद्यमानत्वे तदनुपलब्धेरनुपपत्तेः । सर्वगतत्वमेवानुपलब्धेरपि हेतुरिति चेत्सर्वगतत्वस्य सर्वदा वर्तमानत्वात्सर्वदानुपलब्धिप्रसङ्गात्सर्वदोपलब्ध्यनुपलब्ध्योः प्रसङ्गः । अथ युगपद्विरुद्धकार्यजननायोगात्सर्वगतोपलब्ध्यनुपलब्ध्योरन्यतरहेतुस्थापनेऽन्यतरनियमः स्यादित्युभयपक्षेऽपि समान एवोक्तदोषप्रसङ्गः ।

करणायत्तोपलब्धेरपि सर्वेषामात्मनां सर्वगतत्वेन सर्वैः करणैः सर्वदा संयुक्तत्वात्सर्वदा तदुपलब्ध्यनुपलब्ध्यादिप्रसङ्गः समानः। अदृष्टात्मकहेतोरपि सर्वसाधारणत्वादुक्तदोषः समानः। अस्माकन्तु स्वकीयहृत्पुण्डरीकेऽवस्थितत्वादात्मनस्तत्रैवोपलब्धिर्नान्यत्रेति व्यवस्था सिद्धेर्नोक्तदोषप्रसङ्गः ॥३३॥

## * अथ कर्तृत्वाधिकरणम् ॥७॥

## कर्ता शास्त्रार्थवत्वात् ।२।३।३४।

आत्मनो ज्ञातृत्ववत्कर्तृत्वमप्यस्ति न वेति संशये नास्तीति पूर्वः पक्षः। कुतः ? "हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते" ( का० २।१९। ) इत्यादिभिरात्मनो हननक्रियाकर्तृत्वं प्रतिषिध्य "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्ताहमिति मन्यते" (गी० ३।२७।) "नान्यं गुणेभ्य कर्तारं यदा द्रष्टाऽनुपश्यति" (गी० १४।१९।) इति प्रकृतिगुणानामेव कर्तृत्वप्रतिपादनात्। तस्मात्स्वगुणद्वारा प्रकृतेरेव कर्तृत्वं नात्मनः। इति प्राप्तेऽभिधीयते-कर्ताशास्त्रार्थवत्त्वादिति। आत्मैव कर्ता न गुणाः। अचेतनानां गुणानां कर्तृत्वासम्भवात्। कुतः आत्मैव कर्ता ? शास्त्रार्थवत्त्वात्। 'यजेत' 'जुहोति' 'उपासीत' इत्येवमादीनां स्वर्गमोक्षादिफलसाधनेषु प्रवर्तकानां शास्त्राणामर्थवत्त्वात्। शास्त्रस्य तत्तत्प्राप्त्युपायज्ञानजननद्वारा तत्तदनुष्ठाने प्रवर्तकत्वं तत्तु चेतनस्य जीवस्यैव तत्तदुपायज्ञानं तदनुष्ठानञ्च सम्भवति नत्वचेतनस्य प्रधानस्य। अतस्तत्तत्फलभोक्तुश्चेतनस्यैव

---

* कर्तृत्वमात्मनश्चास्य ज्ञातृत्ववन्न वाऽस्ति वा ॥१६॥ नायं हन्तीति गीतायामकर्तृत्वस्य दर्शनात्। गुणानाम्प्रकृतेश्चापि कर्तृत्वप्रतिपादनात् ॥१७॥ नास्ति, शास्त्रार्थवत्वात्तु कर्तृत्वं श्रुतिसम्मतम्। नित्यत्वादुपपद्येत हन्तृत्वाभाव आत्मनः ॥१८॥ गुणसंसर्गतस्तस्य कर्तृत्वं लौकिकं मतम्। स्वातन्त्र्यात् तक्षवच्चास्य कर्मण उपरामता ॥१९॥

तत्तत्प्राप्तिसाधनकर्तृत्वेन तदुपदेष्टृणां शास्त्राणामर्थवत्त्वम्। तस्माच्चेतनो जीव एव कर्त्ता नत्वचेतनं प्रधानम्।

यत्तु-हन्ता चेन्मन्यते हन्तुमित्यादिभिरकर्तृत्वमेवात्मनोऽभिहितम्। तच्चात्मनो नित्यतयोपपद्यते। प्रकृतेः क्रियमाणानीत्यादिकन्तु सांसारिकप्रवृत्तिषु जीवस्य कर्तृत्वं सत्वादिगुणसंसर्गकृतम्। न स्वरूपप्रयुक्तमतस्तदेवास्य जन्ममरणहेतुर्भवतीत्यभिहितं तत्रैव "कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु" ( गी० १३।२१। ) अतो विवेकी गुणससर्गकृतकर्मस्वासक्ति विहाय तत्राहंबुद्धिपरित्यागपूर्वकं तत्तत्कर्म कुर्वन्नपि तज्जन्यपुण्यपापाभ्यां न लिप्यत इत्याह "तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः। गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते। यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते"। (गी० ) तस्माजीवः कर्त्तैव। तथा च श्रुतिः 'एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः" (प्र० ४।६) इति स्पष्टमेव कर्तृत्वमभिधत्ते ॥३४॥

## उपादानाद्विहारोपदेशाच्च ।३।३।३५।

इतश्चात्मन एव कर्तृत्वम्। "तदेतेषां प्राणानां विज्ञानेन विज्ञानमादाय" (बृ० ४।१।१७) "एवमेवैष एतान् गृहीत्वा" (बृ० ४।१।१८।) इत्यात्मनो ग्रहणश्रवदुपादानत्वश्रवणादकर्तुरुपादानायोगात्तस्य कर्तृत्वमेव। तथा तत्रैव "स्वे शरीरे यथाकामं परिवर्त्तते। (बृ० ४।१।८।) इति विहारोपदेशाच्चात्मनः कर्तृत्वम् ॥३५॥

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्यय ।२।३।३६

इतश्च जीवस्यैव कर्तृत्वम्। "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" (तै० ।२।५।१।) इति लौकिकवैदिकक्रियायां विज्ञानशब्दवाच्यस्यात्मनः कर्तृत्वव्यपदेशाज्जीवः कर्ता। विज्ञानशब्देन बुद्धेर्व्यपदेश इति चेन्न निर्देशविपर्ययः स्यात्। विज्ञानमिति कर्तृत्वेन व्यपदेशो न स्याच्च विज्ञानेनेति करणत्वेन। तस्याश्च करणत्वात् ॥३६॥

## उपलब्धिवदनियमः ।२।३।३७।

प्रधानस्य तत्कार्यस्य वा कर्तृत्वे तस्य सर्वपुरुषसाधारणत्वादात्मनश्च सर्वगतत्वेन सर्वत्र सन्निधानाच्च सर्वाणि कर्माणि प्रधानादिकृतानि सर्वेषां भोगाय स्युरिति पूर्वोक्तोपलब्धिवदनियमः स्यात् ॥३७॥

## शक्तिविपर्ययात् ।२।३।३८।

इतश्चात्मन एव कर्तृत्वम् । प्रकृतिकार्यभूताया बुद्धेः कर्तृत्वे कर्तुरेव भोक्तृत्वमितिनियमाद्भोक्तृत्वमपि तस्या एव स्यात् । ततश्चात्मनो भोक्तृत्वशक्तेर्विपर्ययो हानिः स्यात् तथा सत्यात्माभ्युपगमो निष्प्रमाणकः स्यात् । स्याच्च "पुरुषोऽस्ति भोक्तृभावात्" ( सां० का० १७ इति स्वोक्तिविरोधः ॥३८॥

## समाध्यभावाच्च ।२।३।३९।

इतोऽप्यात्मनः कर्तृत्वम् । मोक्षोपायतया स्वदर्शनाभिमतसमाधावपि बुद्धेरेव कर्तृत्वं विज्ञानस्य कर्तृत्ववादिना स्वीकार्यम् । समाधिश्च प्रकृतितत्कार्यतो भिन्नोऽहमित्यनुसन्धानरूपः । तथा भूतमनुसन्धानं न हि प्रकृतितत्कार्यात्मना कर्त्रा शक्यमनुष्ठातुम् तस्मात्प्रकृत्यादितो भिन्न आत्मैव कर्त्ता ॥३९॥

## यथा च तक्षोभयथा ।२।३।४०।

आत्मनः कर्तृत्वे करणकलेवरादिसम्पन्नोऽपि स यदेच्छति तदा करोति । अन्यदा न करोतीत्येवंरूपा व्यवस्था स्वीयेच्छायां सत्यामसत्याञ्च सम्भवत्येव । यथा वास्यादिसाधनसन्निधानेऽपि तक्षा स्वकीयेच्छामनुसृत्य करोति न करोति च । अचेतनात्मिकाया बुद्धेस्तु भोगादीच्छाया अभावान्न स्याद्व्यवस्था । अतश्चात्मन एव कर्तृत्वं न प्रकृतेस्तत्कार्यस्य चेति सिद्धम् ॥४०॥

### ॐ अथ परायत्ताधिकरणम् ॥८॥

## परात्तु तच्छ्रुतेः ।२।३।४१।

एवं गतेन ग्रन्थेनात्मनो ज्ञातृत्वं कर्तृत्वञ्चाभिहितम् । इदानीं तदेव कर्तृत्वमधिकृत्य किञ्चिद्विचार्यते । किमिदं जीवस्य कर्तृत्वं जीवायत्तं स्वतन्त्रमेवाहोस्वित्परमात्मायत्तमिति संशयः । किं युक्तम् ? स्वातन्त्र्येण जीवायत्तमेव । कुतः यो हि स्वबुद्धया शुभमशुभं वा कर्म करोति स एव तत्फलमश्नुते । परमात्मायत्तकर्तृत्वे तु तत्फलभोक्तृत्वमपि परमात्मन एव स्यान्नतु जीवस्य । 'फलं प्रयोक्तरीति' न्यायात् । परमात्मायत्तकर्तृत्वे विधिनिषेधशास्त्राणां वैयर्थ्यमप्यनिवार्यं स्यात् । तस्माज्जीवस्यैव कर्तृत्वम् ।

इति प्राप्तेऽभिधीयते-परात्तु तच्छ्रुतेरिति । तुशब्दः पूर्वपक्षव्यावृत्यर्थः । तत् कर्तृत्वं जीवस्य परात्-जीवान्तर्यामिणः परमात्मन एव भवति । कुतः ? तच्छ्रुतेः । तस्य-जीवकर्तृत्वस्य परमात्मायत्तत्वश्रुतेः "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" (तै० आ० ३।११।१०) "य आत्मानमन्तरो यमयति" (बृ० ३।७।२२) "एष ह्येवैनं साधुकर्म कारयति तं यमन्वानूनेपत्येष एवैनमसाधुकर्म कारयति तं यमेभ्यो लोकेभ्यो नुनुत्सते" (कौषी० ३।८) इति । तस्माज्जीवकर्तृत्वं परमपुरुषायत्तमेव ॥४१॥

अथैवं जीवकर्तृत्वस्य परमात्मन आयत्तत्वे तस्य वैषम्यनैर्घृण्ये स्यातां जीवस्य तु विधिप्रतिषेधयोर्वैयर्थ्यमित्यत आह-

---

* स्वाधीनं राघवाधीनं वा कर्तृत्वं हि चात्मनः । 'फलं प्रयोक्तरि' न्यायाद् भोक्त्रायत्तं च कर्तृता ॥२०॥ भोक्तृत्वं पुरुषस्यैव पिप्पलादनदर्शनात् । विधिनिषेधशास्त्राणां वैयर्थ्यमपि चान्यथा ॥२१॥ राघवाधीनकर्तृत्वं पुरुषस्य श्रुतिश्रुतम् । व्यर्थता च न विध्यादेः प्रयत्नापेक्षया भवेत् ॥२२॥

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धाऽवैयर्थ्यादिभ्यः ।२।३।४२।

तुशब्दः शंकानिवर्तकः । जीवेन स्वबुद्धया कृतं शुभाशुभं प्रयत्नमपेक्ष्यान्तर्यामी परमात्मा तादृशीमेव जीवप्रयत्नानुगुणां स्वकीयामनुमतिं प्रदाय तथा जीवं प्रवर्तयति । सर्वेष्वपि शुभाऽशुभकर्मसु परमपुरुषानुमतिमन्तरेणास्य जीवस्य स्वातन्त्र्येण प्रवृत्तिर्नोपपद्यते । कुतः ? विहितप्रतिषिद्धाऽवैयर्थ्यादिभ्यः । 'यजेत' 'उपासीत' 'न हन्तव्य' इत्येवमादीनां विहितप्रतिसिद्धवाक्यानामवैय्यर्थ्यादिभ्यः । तथा च तत्तत्कर्मसु जीवः परमात्मसहाय एव प्रवृत्तिं वा निवृत्तिं वा विदधाति । तेन च स्वयमेव विधिप्रतिषेधयोग्यो भवति न परमात्मा । जीवकृतप्रयत्नानुगुणप्रवर्तने फलप्रदाने च न परमात्मनोऽपि वैषम्यनैर्घृण्ये इति । उक्तञ्च स्वयमेव भगवता–"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते" ।। (गी. १०।१०) "तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" (गी० १६।१९) इति । यः परमपुरुषाराधनं कुर्वन् स्वयं तु निर्ममः कर्मानुतिष्ठति तं तत्कर्मण्यभिरुचिं जनयन् सद्बुद्धिप्रदानद्वारा परमात्मैव प्रेरयति । यश्च स्वयमभिमानवान् हिंसादिरूपनिषिद्धकर्माण्याचरति तञ्च तथा भूतेष्वेव कर्मसु प्रीतिमुत्पादयन् तत्रैव प्रवर्तयतीतिभावः । तथा च न परमात्मनो दोषलेशोऽपि न वा विहितप्रतिषिद्धानां कर्मणामपि वैयर्थ्यमिति सर्वं निरवद्यम् ॥४२॥

### * अथांशाधिकरणम् ॥६॥

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ।२।३।४३।

परमात्मानुमोदितस्यैव जीवस्य कर्तृत्वं न स्वत इति निरूपितम् ।

* जीवोऽयं ब्रह्मणो भिन्नो ब्रह्मैवोपहितन्नु वा ? । ब्रह्मांशो ह्यथवा

अथावशिष्टं जीवस्वरूपं विचार्यते। यद्यपीदमारम्भणसूत्रे चिन्तितम्। तथापि श्रुतीनां वैविध्याद्विप्रतिपत्तेर्भूयस्संशयमुद्भाव्य प्रागुपदिष्टब्रह्मानन्यत्वसिद्धय एव जीवस्य तदंशत्वं प्रतिपादयति। तत्रायं जीवो ब्रह्मणोऽत्यन्तभिन्न उतोपहितं ब्रह्म वाहोस्विद्ब्रह्मांश एवेति संशयः। किं युक्तम्? अत्यन्तभिन्न इति। कथमवगम्यते। "पृथगात्मानं प्रेरितारञ्च मत्वा" (श्वे० १।६) "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" (श्वे० ४।६) "ज्ञाज्ञौ द्वावजावीशानीशौ" (श्वे० १।९)इत्यादिषु भेदस्यैव श्रवणात्। अथवा तत्त्वमस्यादिश्रुतिविरोधेनात्यन्तभेदानुपपत्तेरुपाध्यवच्छिन्नं ब्रह्म वाल्पदेशवृत्तित्वेनांशः प्राणधारणत्वेन च जीव इति व्यपदिश्यते। परमार्थतस्तु न ब्रह्मणोतिरिक्तो जीवः।

इत्येवम्प्राप्तेऽभिधीयते। अंशो नानाव्यपदेशादिति। अयं जीवो ब्रह्मांश एव। कुतः? नानात्वव्यपदेशादेकत्वव्यपदेशाच्च। "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" (श्वे० ६।१३) "य आत्मनि तिष्ठन् यस्यात्मा शरीरम्" (बृ० ३।७।२२) "पतिं विश्वस्यात्मेश्वरम्" इत्येवमादिश्रुतिभिर्जीवेश्वरयोरुभयोर्नित्यत्वेन, जीवकामविधातृत्वेन तयोः शरीरशरीरित्वेनोपास्योपासकत्वेन नियम्यनियन्तृत्वेन भृत्यस्वामित्वेन सृज्यस्रष्टृत्वेन रक्ष्यरक्षकत्वेन च जीवपरमात्मनोर्नानात्वेन-

---

किं स्याद् भिन्नो भेदस्य च श्रुतेः ॥२३॥ विरोधात् तत्त्वमस्यादेर्ब्रह्म वोपहितं तु सः। विज्ञानघनरामेऽत्र चोपाधिर्नैव सम्भवेद् ॥२४॥ नानात्वव्यपदेशाच्चाप्येकत्वव्यपदेशतः। ब्रह्मांश एव जीवः स्यान्मन्त्रवर्णात् स्मृतेरपि ॥२५॥ प्रकारोंऽशो विशिष्टस्य चिद्देहत्वाद्विशेषणम्। एकदेशस्य चांशस्य दोषा नेशे प्रकाशवत् ॥२६॥ अनुज्ञापरिहारौ तु देहसम्बन्धतोऽग्निवत्। प्रभा प्रभावतो भिन्ना तद्वज्जीवोऽपि रामतः ॥२७॥ प्रकारा येऽपृथक्सिद्धास्ते विशेष्यं वदन्ति हि। तथात्वापन्नजीवानां तत्त्वाद्रामेण चैकता ॥२८॥

व्यपदेशात् । तत्त्वमस्यादिभिरप्यैकत्वेन व्यपदेशात् । अपहतपाप्मनोऽविद्या-प्रत्यनीकस्य निरवद्यनिरञ्जनस्य मायाधीशस्य सर्वज्ञस्य सर्वशक्तेः सर्वदं-करसज्ञानस्योपाधिसम्बन्धकृतजीवत्वानुपपत्तेः। अपि दाशकितवादित्व-मधीयत एके । एके शाखिन आथर्वणिकास्तथाऽमनन्ति "ब्रह्मदाशा ब्रह्म-दासा ब्रह्मैवेमे कितवाः" (ब्र० सू०) इति ब्रह्मणो दाशकितवादित्वाध्य-यनेन तस्य सर्वजीवव्यापित्वेन सर्वाऽभेदं ज्ञापयन्ति । "सर्वं समाप्नोषि ततोऽसि सर्वः" (गी० ११) इति च सर्वव्यापकत्वेन ब्रह्मणः सर्वाभेदत्व-स्मरणात् । न च "एकोहं बहु स्याम" इत्येकस्यैव ब्रह्मणो बहुभवनत्व-श्रुतेर्ब्रह्मण एव जीवभावाऽवगमात्तत्र्वंथा तयोरभेदेन जीवस्य ब्रह्मांशत्व-व्यपदेश इति वाच्यम् । केवलब्रह्मणो बहुभवनसंकल्पपूर्वकजगत्कारणत्वा-ङ्गीकारे ब्रह्मणि विकारित्वसुखदुःखभोक्तृत्वादिदोषाणामापत्तेः । सृष्टे-र्वैयर्थ्यापत्तेश्च । तस्माच्चिदचिद्वस्तुशरीरकस्यैव ब्रह्मणो जगत्कारणत्वम् । तथा सति विकारित्वादिदोषाणामचिदंशे पर्यवसानात्सुखदुःखभोक्तृत्वादी-नाञ्च चिदंशे जीवे पर्यवसानाद्ब्रह्मणो निर्दोषत्वसिद्धेः । न वा सृष्टेर्वैय-र्थ्यम् । जीवभुक्तिमुक्त्यर्थकत्वेन सार्थक्यात् । तस्माज्जीवब्रह्मणोः स्वरू-पतः स्वभावतश्च भेदान्नानात्वव्यपदेशस्तयोर्व्याप्यव्यापकत्वेन जीवस्य ब्रह्मणोऽपार्थक्यात्तदव्यतिरेकादनानात्वव्यपदेश इत्युभयविधव्यपदेशोपपत्तये ब्रह्मांऽशोऽयं जीव इत्युपपन्नतरम् ।

अथैव जीवपरयोर्नित्यत्वेन नानात्वे समर्थिते सत्येकविज्ञानेन सर्ववि-ज्ञानप्रतिज्ञा हीयेत । ब्रह्मातिरिक्तस्य जीवस्यापि नित्यत्वात् । इति चेदु-च्यते । न तावदुक्तप्रतिज्ञाहानिः । जीवस्यापि कार्यत्वाभ्युपगमात् । कार्य-कारणयोरनन्यत्वात् । तथा च कारणस्वरूपब्रह्मज्ञानेन कार्यभूतस्याखि-लस्य ज्ञानमुपपद्यते । न च तर्हि जीवस्याप्याकाशादिवदेवोत्पत्तिमत्त्वमप्य-स्त्विति वाच्यम्, वियदादिवदुत्पत्तेरश्रवणात् । कार्यत्वन्तु बहुप्रमाणानु-रोधाज्जीवस्याप्यक्षुण्णम् । तच्चावस्थाविशिष्टस्य द्रव्यस्यावस्थान्तरापत्ति-रेव । जीवस्यापि तथाऽवस्थान्तरापत्तिलक्षणपरिणामाभ्युपगमात्कार्य-

त्वम् । तत्राकाशाद्यचेतनानां यथा स्वरूपपरिणामोऽभ्युपेयते न तथा जीवात्मनः स्वरूपपरिणामः । किन्तु ज्ञानसंकोचविकाशरूपोऽन्यथाभाव एव । एवञ्च स्वरूपाऽन्यथाभावरूपोत्पत्तिर्जीवे निषिद्धयते । "न जायते म्रियते वा विपश्चित्" (का० २।१८) इत्यादि श्रुतिभिः ।

अयमभिप्रायः । श्रुतयस्तावत्प्रकृतिजीवेश्वराणां भोग्यभोक्तृनियन्तृरूपान् पृथक्स्वभावानभिधाय स्वरूपान्यथाभावलक्षणां भोग्योत्पत्ति भोक्तरि जीवात्मनि नित्यत्वव्यवस्थापनेन निराकृत्य भोग्यवर्तिस्वरूपपरिणामस्य भोक्तृगतज्ञानसंकोचविकाशरूपपरिणामस्य च नियन्तरि परमात्मनि प्रतिषिध्य तस्य स्वाभाविकसर्वज्ञत्वं सर्वशक्तिमत्वं निरवद्यत्वं नित्यत्वञ्च प्रतिपाद्य सर्वदाचिदचितोर्ब्रह्मशरीरत्वं ब्रह्मणश्चात्मतया तदन्तर्यामित्वमभिदधते । तथा च सर्वदा चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्मैव कारणावस्थं कार्यावस्थञ्चेति "सर्वं खल्विदं ब्रह्म" (छा० ३।१४।१) इत्यादिभिः प्रतिपादितम् । तदेव ब्रह्म विभक्तनामरूपसूक्ष्मचिदचिच्छरीरं तत्प्रकारं कारणावस्थं प्रलये तिष्ठति । सृष्टिकाले तु विभक्तनामरूपस्थूलचिदचिच्छरीरं तत्प्रकारं कार्यावस्थं तदेव वर्तते । तत्राचिदंशः कारणावस्थायां शब्दादिहीनोऽपि स्वस्मिन् भोग्यत्वनिर्वाहाय शब्दादिमत्तया स्वरूपेण परिणमते । चिदंशो जीवस्तु स्वकर्मफलभोगाय भोक्तृत्वानुगुणज्ञानविकासरूपपरिणतिमान् भवति । प्रकारिणि नियन्त्रंशे च तदवस्थतदुभयविशिष्टतारूपविकारो भवतीति कारणावस्थाया अवस्थान्तरापत्तिलक्षणस्य विकारस्य चित्यचितिरूपे प्रकारद्वये तत्प्रकारिणि ब्रह्मणि च समानत्वात् । उभयावस्थायां प्रकारिणो ब्रह्मण एकत्वात् प्रकारज्ञानस्य प्रकारिज्ञानान्तर्गतत्वात् । एवञ्चैकस्यैव कारणावस्थस्य ब्रह्मणोऽवस्थान्तरापत्तिलक्षणविकारमादायैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपद्यतेतराम् । तथा च जीवस्योत्पत्तिमरणवादिनीनां "प्रजापतिः प्रजा असृजत" (यजु० २ अ०) इत्यादि श्रुतीनां ज्ञानविकाससंकोचशालिदेहसम्बन्धविच्छेदएव तात्पर्यम् । तदुत्पत्तिप्रतिषेधवादिनीनां तन्नित्यत्ववादिनीनां "न जायते

म्रियते" (का० २।१८) "नित्यो नित्यानाम्" (श्वे० ६।१३) इत्यादीनान्त्वचिदंशवत्स्वरूपपरिणामाभाव एव तात्पर्यम्। एवं "स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म" (बृ० ४।४।२५) इत्यादिरूपबोधिनीनां श्रुतीनां निरुक्तोभयप्रकारविकारराहित्य एव तात्पर्यम्। 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय' मिति श्रुत्युक्तं सर्वचिदचिद्वस्तुविशिष्टस्य ब्रह्मणः सृष्टेः प्रागेकत्वावधारणञ्च नामरूपविभागानर्हतयोपपद्यते। अत एव तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियते" (बृ० १।४।७) इति सृष्टेः प्रागेकत्वं नामरूपविभागानन्तरञ्च नानात्वं श्रूयते। सर्वदापितमतः परमात्मनोंऽश एव जीव इति सर्वमुपपद्यते। येषां सन्मात्रस्वरूपं ब्रह्म स्वयमेव सृष्टिकाले भोग्यभोक्तृनियन्तृरूपेण त्रिधा परिणमते इति मतं तेषामचिदंशगतानां विकारत्वादिदोषाणां चिदंशगतानाञ्च सुखदुःखभोक्तृत्वादिदोषाणां ब्रह्मण्यापत्तेर्न काचिद्व्यवस्था। एवमविद्योपाधिके जीवत्वे पारमार्थिकोपाधिके च जीवत्वे स्वीक्रियमाणेऽपि तुल्यो दोषः। ब्रह्मण एव स्वयं मोहो बन्धश्च स्याताम् उपाधिब्रह्मव्यतिरिक्तस्य कस्यचिद्वस्तुनोऽभावात्। अस्माकं पुनः सूक्ष्मचिदचिद्वस्तुशरीरं कारणावस्थं स्थूलचिदचिद्वस्तुशरीरञ्च कार्यावस्थं ब्रह्म सर्वदा ज्ञानशक्तिबलैश्वर्यतेजोवीर्यसत्यकामत्वसत्यसंकल्पत्वकारुण्याद्यनन्तगुणविशिष्टं निरस्ताशेषदोषञ्चावतिष्ठते। कुतः ? विकारादिदोषाणां प्रकारभूतेऽचिदंशे पर्यवसानात्। सुखदुःखभोक्तृत्वादीनां प्रकारभूते चिदंशे पर्यवसानात्। नियन्तृत्वादीनान्तु परमात्मधर्मत्वात्तस्मिन्नेवावस्थितिरिति ब्रह्मांशोऽयं जीव इति वादे न कश्चिद्दोषलेशः ॥४३॥

## मन्त्रवर्णाच्च २।३।४४।

"पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" (पु० सू०) इतिमन्त्रवर्णाच्च ब्रह्मांशा जीवाः। मन्त्रे पादशब्दो ह्यंशवाची। सूत्रेऽत्र इत्येकत्वं जात्यभिप्रायकम् ॥४४॥

## अपि स्मर्यते ।२।३।४५।

इतश्च ब्रह्मणोंऽशो जीवः । "ममैवांशो जीवलोके जीवभूतः । (गी० १५।७) इति स्मर्यतेऽपीत्यर्थः ॥४५॥

जीवस्य ब्रह्मांशतया ब्रह्मैकदेशत्वेन जीवदोषाणां ब्रह्मणि प्रसक्तिमाशङ्क्याह--

## प्रकाशादिवत्तु नैवं परः २।३।४६।

तुशब्दः शङ्कानिवर्तकः । प्रकाशादिवज्जीवो ब्रह्मांशः । यथा सूर्यादिः भारूपप्रकाशवान् सूर्यादिरिति विशेषणत्वेनोपपन्नः सूर्यादीनामंश इत्यभिधीयते । यथा च देहिनो देवमनुष्यादिर्देहोंऽशः । तद्वदेकदेशस्य तद्वस्तुनोंऽशत्वव्यवहारः । विशिष्टस्य वस्तुनो विशेषणमंश एव । एवं जीवस्य परमात्मशरीरत्वेन विशेषणत्वात्परमात्मनोंऽश एव जीवः । अस्ति च शास्त्रीयो व्यवहारो विशेषणे "विशेष्यांऽशोयम्' इति । जीवपरमात्मनोः स्वरूपस्वभावयोर्भेदान्न जीवदोषाणां परमात्मनि प्रसक्तिरित्याह-नैवं पर इति । यथा स्वभावो जीवस्तथा न परः परमात्मेत्यर्थः । यथा प्रभायाः प्रभावानर्थान्तरभूतस्तथा प्रकृतेऽप्यंशांशिभावः । तथा चेममेव भेदमवलम्ब्य भेदश्रुतीनाम्प्रवृत्तिः । जीवपरमात्मनोर्व्याप्यव्यापकत्वेन जीवस्य परमात्मनोऽपृथक्सिद्धतयाऽपृथक्सिद्धविशेषणानां विशेष्यपर्यन्तत्वं स्वीकृत्य 'तत्त्वमसि' इत्याद्यभेदश्रुतीनामपि मुख्यार्थत्वेनैव सार्थक्यमिति ॥४६॥

## स्मरन्ति च ।२।३।४७।

स्मरन्ति चांशिनः परमात्मनोंऽशभूतजीवगतदोषाणामप्रसक्तिम् । पराशरादयः । "तत्र यः परमात्मासौ स नित्यो निर्गुणः स्मृतः । न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा" ( वि० पु० ) "कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते" इत्यादिना । चशब्देन "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" (श्वे० ४।६) इत्यादि श्रुतयः परिगृहीता भवन्ति ॥४७॥

## अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ।२।३।४८।

ननु सर्वेषां जीवानां ब्रह्मांशत्वे समाने कस्यचिद्वेदाध्ययनादिष्यनुज्ञा कस्यचित्परिहार इति कथमत आह-अनुज्ञेत्यादि । सर्वेषां जीवानां ब्रह्मांशत्वेनैकरूपत्वेऽपि ब्राह्मणशूद्रयोः पुण्यपापदेहसम्बन्धहेतुकावनुज्ञापरिहारौ । यथाऽग्नेरग्नित्वेनैकरूपत्वेऽपि यज्ञीयादेरग्नेर्ग्रहणानुज्ञा श्मशानसम्बन्धिनोऽग्नेः परिहारस्तथा ब्राह्मणस्य वैदिकेऽनुज्ञा शूद्रादेः परिहार इत्युपपद्यते ॥ ४८ ॥

## असन्ततेश्चाव्यतिकरः ।२।३।४९।

एवं ब्रह्मांशत्वेन साम्येऽप्यात्मनोऽणुत्वेन प्रतिशरीरं भिन्नत्वात्परस्परमसन्ततेरसम्बन्धाज्ज्ञानसुखादिधर्माणामव्यतिकरोऽसाङ्कर्यमेवेति व्यवस्था । उपहितब्रह्मजीववादे विवर्तवादे च जीवपरयोः स्वरूपस्याभेदाज्जीवानां विभुत्वेन परस्परमभेदाच्च धर्माणां व्यतिकरोऽनिवार्यः स्यात् ॥ ४९ ॥

## आभास एव च ।२।३।५०

नन्वज्ञाननिबन्धनोपाधिभेदान्न धर्मव्यतिकर इत्यत्राह-नित्यस्वप्रकाशस्वरूपस्य ब्रह्मणोऽज्ञानोपहितत्वप्रतिपादने हेतव आभासा एव स्युः । कुतः ? प्रकाशस्वरूपस्य तस्याविद्यया स्वरूपतिरोधानं स्वरूपनाश एव पर्यवस्यति । उपाधीनां भेदेऽपि उपधेयगतधर्माणां पुनः सांकर्यमवश्यमेव दुष्परिहरम् । चकारात् "पृथगात्मानं प्रेरितारञ्च मत्वा" (श्वे० १।६) इत्यादिश्रुतिविरोधोऽपि ॥ ५० ॥

## अदृष्टानियमात् ।२।३।५१

अदृष्टं स्तद्धेतुकोपाधिभिश्च देशकालवस्तुपरिच्छेदरहितस्य ब्रह्मणश्छेदाऽसम्भवात्तत्कृतानां दोषाणां ब्रह्मणि प्रसक्तिरनिवार्या ॥५१॥

## अभिसन्ध्यादिष्वपि चैवम् ।२।३ ५२।

तत्तदन्तःकरणोपहितात्मप्रतिनियतादृष्टजन्मस्वभिप्रायविशेषेषु स्वीक्रियमाणेष्वपि परिच्छिन्नोपाधिब्रह्मव्यतिरिक्तस्य कस्यचिदपि पदार्थस्याभावादुपाधिविशिष्टम्ब्रह्म वेति न दोषनिर्मुक्तिः ॥५२॥

## प्रदेशभेदादिति चेन्नान्तर्भावात् ।२।३।५३।

उपहितब्रह्मजीवप्रदेशभेदाद्व्यवस्था स्यादिति चेन्न, उपाधीनां सर्वेषु प्रदेशेष्वविशेषेणावस्थितत्वात्प्रदेशानाञ्च तदन्तर्भावान्न दोषनिर्मुक्तिरतः सत्यमिथ्योपाधिपरिच्छिन्नब्रह्मजीवपक्षौ न निर्दुष्टाविति जीवस्य ब्रह्मणो पृथक्सिद्धविशेषणत्वेनांशत्वमेवेति युक्तः पक्षः ॥५३॥

इति श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये द्वितीयाध्यायस्य त्रितीयः पादः ॥३॥



## श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये

# द्वितीयाध्यायस्य चतुर्थः पादः ।

### * अथ प्राणोत्पत्त्यधिकरणम् ॥१॥

### तथा प्राणाः २।४।१।

एवमतिक्रान्ते पादे जीवस्य भोगायतनभूतस्थूलदेहोत्पादकानामाकाशादिभूतानामुत्पत्त्यादिकं विचिन्त्य जीवस्वरूपं तद्धर्मश्च निचिन्तिता । अथ सूक्ष्मशरीरव्यवस्थापकानामिन्द्रियादीनां विचारोऽवदिष्यत इति स एवेदानीं प्रस्तूयते । तत्र प्राणाः जीववन्नोत्पद्यन्त आहोस्विद्वियदादिवदुत्पद्यन्त इति संशयः । किं युक्तम् ? नोत्पद्यन्त इत्येव । कुतः ? "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" ( तै० २।१। ) इत्यादावुत्पत्तिप्रकरणे प्राणोत्पत्त्यश्रवणात् । एवमन्यत्रापि "असद्वा इदमग्र आसीत्तदाहुः किं तदासीदिति ऋषयो वाव ते अग्रे सदासीत्तदाहुः के ते ऋषय इति प्राणा वाव ऋषय इति" (शतप० ६।१।१) इति ऋषिपदाभिधेयप्राणानामुत्पत्तेः प्रागपि श्रूयमाणत्वात् ।

इति प्राप्तेऽभिधीयते-तथा प्राणा इति । वियदादिवदेव प्राणा उत्पद्यन्ते । कुतः ? "एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि च" (मु० २।१।३) इति प्राणादीनामपि परमात्मन उत्पत्तिश्रवणात् । "आत्मा वा इदमेक एवाग्र आसीत्" (ऐत० १।१।१) इति सृष्टेः प्रागेकस्यैव ब्रह्मणोऽवस्थितेरवधारणात् । एतस्याः श्रुतेरेकवाक्यतासम्पादनार्थमृषिश्रुतेः पर-

---

* उत्पद्यन्ते न किम्प्राणाः प्राणिवद् व्योमवत्तु वा । जन्यन्तेऽत्र वरं किं स्यादाद्यः प्राग् ऋषिसत्तया ॥१॥ 'एतस्माज्जायते प्राणः' इति श्रुत्या तु चान्तिमः । ऋषिश्रुतौ तु सर्वेशः प्राणेन समुदीरितः ॥२॥

मात्मपरत्वेन नेतव्यत्वात् । "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" (छा० १।११।५) इत्यादौ प्राणशब्देन परमात्मन एव ग्रहणात् । एवमृषिशब्दश्च परमेश्वरस्यैव वाचको नेन्द्रियादीनाम् ॥१॥

## गौण्यसम्भवात् ।२।४।२।

अथैवं "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" ( तै० २।१ ) इत्युत्पत्तिप्रकरणे प्राणानामुत्पत्त्यश्रवणादुत्पत्तिश्रुतिर्गौणी स्यात् तत्राह-गौण्यसम्भवात् । गौण्या असम्भवस्तस्मात् । न हि प्राणोत्पत्तिश्रुतिर्गौणी सम्भवति । बाहुल्येन तत्र तत्र प्राणोत्पत्तेः श्रवणात् । एक विज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधाच्च ॥ २ ॥

## तत्प्राक्श्रुतेश्च ।२।४।३।

इतोऽपि प्राणोत्पत्तिश्रुतिर्मुख्यैव । "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" (मु० २।१।३) इति श्रुतावेकमेव 'जायते' इति पदं सर्वत्रान्वेति तत्र प्राणेष्वेव प्राक्श्रुतम् । खादिषु तु पश्चादन्वेति न हि प्राक्श्रुतस्य पदस्याव्यवहितसमनन्तरभाव्यन्वयस्तद्व्यवहितेष्वेव स्यात् । किञ्च न ह्येकमेव पदं सकृदुच्चरितं क्वचिद्गौणं क्वचिच्च मुख्यं स्यात् । वैरूप्यप्रसङ्गात् । तस्मात् प्राणानामुत्पत्तिश्रुतिर्मुख्या ॥३॥

## तत्पूर्वकत्वाद्वाचः ।२।४।४।

प्राणानामाकाशादिवदुत्पत्तिरस्त्येव । कुतः ? वाक्प्राणमनसां परमात्मकारणकतेजोबन्नपूर्वकत्वाभिधानात् । "अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्" (छा० ६।५।४) इति श्रुतौ तथाभिधानात् । तस्मात्प्राणपदबोध्यानामिन्द्रियाणामुत्पत्तिरस्त्येवेति सिद्धम् ॥४॥

## * अथ सप्तगत्यधिकरणम् ॥२॥

## सप्तगतेर्विशेषितत्वाच्च २।४।५।

एवमिन्द्रियाणां ब्रह्मकार्यत्वमभिधायेदानीं तेषां संख्याया विचारः प्रस्तौति । तत्रेन्द्रियाणि सप्तैवाहोस्विदेकादशेत्युभयथा वचनोपलम्भात् संशयः । तत्र सप्तैवेतिपूर्वपक्षः । कुतः ? गतेः । विशेषितत्वाच्च । "सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहितास्सप्त सप्त ॥ (मु० २।१। ८) इति सप्तानामेव गतिरुपलभ्यते । तेषां स्वरूपतो निर्देशस्तु "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्" ( का० ५।६।१० ) इति सप्तानामेव निर्देशः । तथा "सप्त ते शीर्षण्याः प्राणाः द्वाववाञ्चौ" (तै० सं० ५।१।७।१) इत्यादौ सप्तैव विशेषितास्तस्मात्सप्तैवेन्द्रियाणीति पूर्वः पक्षः ॥५॥

अथ सिद्धान्तः ।

## हस्तादयस्तु स्थितेऽतो नैवम् ।२।४।६।

तुशब्दः पूर्वपक्षव्यावर्तकः । हस्तादयोपीन्द्रियाणीतराणि सन्तीत्यतो नैव सप्तैवेन्द्रियाणीति । किन्त्वेकादशेन्द्रियाणि । तथा च श्रुतिः । "दशेमे पुरुषे प्राणा आत्मैकादश" ( बृ० ३।६।४ ) अत्रात्मशब्देन मनो गृह्यते । स्मृतिश्चास्मिन्नर्थेऽनुसरति श्रुत्यर्थम् । "इन्द्रियाणि दशैकञ्च पञ्चचेन्द्रियगोचराः" (गी० १३।५) बुद्धयादीनां मनोवृत्तित्वान्न पृथग्गणनम् । सप्तानां विशेषतो गतिश्रवणात्क्वचित्सप्तोपादानम् । न तत्सप्तत्वसंख्यैवेन्द्रियाणामित्यवधारणपरम् । तस्मादेकादशैवेन्द्रियाणीति सिद्धम् । ॥६॥

---

* इन्द्रियाणाञ्च संख्या तु सप्तैकादश वा मता । गतेर्विशेषितत्वाच्च सप्तैवेत्यवधार्यताम् ॥३॥ वाक्पाणि पायुपादादेरुपस्यस्यापि वै तथा । श्रवणात् स्मरणान्नैवमेकादशैव साऽपि तु ॥४॥

## * अथ प्राणाणुत्वाधिकरणम् ॥३॥

## अणवश्च ।२।४।७।

ते ह्रीन्द्रियशब्दाभिलप्याः प्राणा विभव आहोस्विदणव इति पूर्वः पक्षः। कुतः ? "त एते सर्व एव समाः सर्वेऽनन्ताः" (बृ०।१।५।१३) इति श्रुतेः। इति प्राप्तेऽभिधीयते–अणवश्चेति–अणव एव प्राणाः। "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" (बृ० ४।४।२) इति तेषामुत्क्रान्तिश्रवणादणुत्वमेव विभूत्वे तूत्क्रान्त्यसम्भवात्। प्राणानां गतावपि पार्श्वस्थैरदृश्यमानत्वादणव एव प्राणाः। इन्द्रियाणामप्राप्यकारित्वाच्चक्षुरादेर्गतिमत्त्वमप्यत्र मानम् ॥७॥

## × अथ श्रैष्ठ्याधिकरणम् ॥४॥

## श्रेष्ठश्च ।२।४ ८।

वागादीन्द्रियाणां स्वरूपस्थितेः प्रवृत्तेश्च मुख्यप्राणाधीनत्वस्य छान्दोग्यादिश्रुतिपूपदिश्यमानत्वाद्वागादिभ्यस्तस्य श्रेष्ठत्वात्। "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति च मुख्यप्राणस्य पञ्चवृत्त्यात्मनः श्रेष्ठत्वदर्शनात्। श्रेष्ठः स नोत्पद्यत आहोस्विदुत्पद्यत इति संशयः। तत्रे-

---

* विभवो वाऽणवः ? प्राणा पक्षः को वात्र सम्मतः। अनन्तत्वश्रुतेराद्योऽन्त्यश्चोत्क्रान्तिश्रुतेर्मतः ॥५॥ गतावदृश्यमानत्वात् कार्यानन्त्यादनन्तता।

× न जायते तु किं मुख्यः प्राणो वा जायते ध्रुवम् ॥६॥ 'आनीदवात'मित्येवं प्रलयेऽपि श्रुतौ श्रुतः। तस्मान्न जायते मुख्योऽनुत्पत्त्या श्रेष्ठताऽस्य हि ॥७॥ जायते श्रुतिवाक्याद्धि ब्रह्मसत्त्वं व सूक्ततः। उत्क्रान्त्याऽस्य शरीरस्य वैकल्यस्य न दर्शनात् ॥८॥ प्राणेभ्यः श्रेष्ठता स्वस्यान्येभ्योऽनुत्पत्तितो न हि।

न्द्रियरूपप्राणेभ्योऽस्य प्राणस्य श्रेष्ठत्वञ्चानुत्पत्तिमत्त्वेनैव स्यात्। तथा च नासदासीयसूक्ते "आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्च नास" (ऋ० सं० ८।७।१७) इति प्रलयेऽपि प्राणनव्यापारस्य श्रवणादिति पूर्वपक्षोत्थाने सिद्धान्तयति। श्रेष्ठः प्राणोऽप्युत्पद्यते। "एतस्माज्जायते प्राणः" (मु० २।१।३) इति खादिवदस्याप्युत्पत्तिश्रवणात्। आनीदवातमिति न प्राणमभिधत्ते किन्तु तत्समये परमात्मनः सत्तामेवेति तत्त्वम् ॥ ८ ॥

## * अथ वायुक्रियाधिकरणम् ॥५॥

# न वायुक्रिये पृथगुपदेशात् ।२।४।६।

किमयं मुख्यः प्राणो भूतवायुरेवोत क्रियाविशेष आहोस्वित्काञ्चिदवस्थामापन्नो विशिष्टो वायुरिति संशये–भूतपरिगणितो वायुरेवायम्। कुतः ? "वायुरेव प्राणः" इति लौकिकवैदिकानां व्यवहारात्। यदि तूच्छ्वासनिश्श्वासादिषु प्राणव्यपदेश इत्युच्यते तदा क्रियैवायं प्राणः। इति प्राप्तेऽभिधीयते– न वायुक्रिये पृथगुपदेशादिति। नायं पञ्चवृत्त्यात्मा मुख्यः प्राणो वायुर्वा क्रियावेति किन्तु ततो भिन्न एव। कुतः ? पृथगुपदेशात्। "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः" (मु० २।१३।) इति भूतात्मनो वायोः पार्थक्येनोपदेशात्। न क्रिया तस्या अपि पृथगुपदेशाऽसम्भवात् तस्मात्ताभ्यां भिन्न एव प्राणः। 'वायुरेव प्राण' इति व्यवहारस्तु देहधारणयोग्यतामापन्नो वायुरेवायम्प्राणो न तत्त्वान्तरमिति न वा वायुमात्रमिति सामान्येन सूचयितुम् ॥ ६ ॥

ननु सर्वेन्द्रियेभ्यः प्राणस्य श्रेष्ठत्वात्तस्य च वायुक्रियत्वाभावाच्च

---

* वायुः क्रियाऽथवा प्राणो विशिष्टः पवनोऽथवा ॥६॥ आद्यो लोके च वेदे च व्यवहारस्य दर्शनात्। उच्छ्वासादिक्रिया वा स तत्र प्राणप्रसिद्धितः ॥१०॥ पृथयसङ्कीर्त्तनाद्धेतोर्नाद्यौ स्तः किन्तु चान्तिमः। देहधारणसामर्थ्याद् वैशिष्ट्यञ्चास्य वायुतः ॥११॥

तेजोवद् भूतान्तरत्वं स्वातन्त्र्येण स्यादित्यत्राह--

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ।२।४।१०।

तुशब्दश्चोद्यं व्यावर्तयति । नायं प्राणोऽग्न्यादिवत्तत्वान्तरं किन्तु चक्षुरादिवज्जीवोपकरणमेव । कुतोऽवगम्यते ? तत्सहशिष्ट्यादिभ्यः । जीवोपकरणभूतैश्चक्षुरादिभिस्सह प्राणस्य शिष्टिरुपदेशोऽवगम्यते प्राणसंवादादिषु । सा च शिष्टिः समानजातीयत्वे समानकार्योपपादकत्वे हि उपपद्यते । नेतरथा । आदिना प्राणस्वातन्त्र्यनिरासहेतवो गृह्यन्ते ॥ १० ॥

ननु यदि चक्षुरादिवत्प्राणस्यापि करणत्वमिष्यते तर्हि विषयान्तरमपि पृथङ्निर्वाच्यम् नहि रूपादिभ्यः कश्चिद्भिन्नो विषयस्समुपलभ्यत इति कथं चक्षुरादिवत्करणत्वमस्येत्यत आह--

## अकरणत्वाच्च न दोषस्तथाहि दर्शयति ।२।४।११।

न हि विषयान्तरप्रसङ्गरूपो दोषः शक्यः समुद्भावयितुम् । प्राणस्य चक्षुरादिवदकरणत्वात् । न हि तावद्विषयविशेषपरिच्छेदकतया चक्षुरादेर्यथा करणत्वं तथास्य करणत्वम् । किन्तु विषयव्यापाराभावेऽपि स्वरूपेणैवास्य जीवोपकारकत्वम् । तथा हि दर्शयति श्रुतिः "यस्मिन्नुत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति" (छा० ५।१।७) इति प्रदर्श्य प्राणोत्क्रमणवेलायां वागादिन्द्रियाणां शैथिल्यं शरीरविनाशप्रसङ्गञ्चाभिदधती श्रुतिः प्राणायत्तमेव शरीरेन्द्रियावस्थानं दर्शयति । तथा च प्राणापानादिभेदेन भिन्नव्यापारं कुर्वन्नयं प्राणो देहधारणादिना जीवमत्यन्तमुपकरोति । ततश्चोपकारकत्वमेवात्र करणत्वं वेदितव्यम् ॥ ११ ॥

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ।२।४।१२

प्राणापानादिनामभेदान्निश्श्वासादिकार्यभेदाच्च पृथक्तत्त्वानि प्राणादयः स्युरिति शङ्कामपाकरोति । यथा "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" (बृ० ।१।५।३।) इत्यादौ

कामादीनां नाम्नः कार्यस्य च भेदेऽपि न तत्वान्तरत्वम्। किन्तु मनोवृत्तिरूपत्वमेव। तथा "प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण एव" (बृ० ।१।५।३।) इत्यपि प्राणवृत्तय एवेति सर्वं सुस्थम् ॥ १२ ॥

* अथ श्रेष्ठाणुत्वाधिकरणम् ॥६॥

अणुश्च ।२।४।१३।

अयं मुख्यः प्राणो विभुरणुर्वेति विशये "सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण" (बृ० १।३।२२।) "प्राणे सर्वं प्रतिष्ठितम्" इत्येवमादिवचनैर्विभुरेवेति प्राप्ते सिद्धान्तमाह-अणुश्चेति। "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" (बृ० ।४।४।२।) इत्यादि वचनादणुरेव मुख्यः प्राणः। सर्वेषां देहावस्थानस्य प्राणाधीनत्वात्क्वचिद्विभुत्वोक्तिर्न दोषायेति ॥१३॥

\+ अथ ज्योतिराद्यधिष्ठानाधिकरणम् ॥-॥

ज्योतिराद्यधिष्ठानन्तु तदामननात् ।२।४।१४।

अथेन्द्रियरूपप्राणा मुख्यश्च प्राण इतीमे सर्वे स्वकर्मणि स्वयमेव स्वातन्त्र्येण प्रवर्तन्त आहोस्विदन्यदेवताधिष्ठिता एव प्रवर्तन्त इति संशये स्वाधिकारोचितकार्ये स्वयमेव प्रवर्तन्त इति पूर्वपक्षिते सिद्धान्तयति-ज्योतिराद्यधिष्ठानन्तु तदामननादिति। तु शब्दः पूर्वपक्षं प्रत्याचष्टे। ज्योतिरादिरग्न्यादिरूपदेवताभिरधिष्ठितः करणकलापः स्वकार्ये प्रवर्तत इति। कुतः ?

---

* मुख्यः प्राणो विभुर्वाऽणुः ? 'सम एभिः' श्रुतेर्विभुः। उत्क्रान्तिश्रुतितोऽणुः स्याद् विभुत्वे तदसम्भवात् ॥१२॥ देहस्थितिस्तदधीना विभुत्वोक्तिः क्वचित्ततः।

\+ स्वातन्त्र्येण प्रवर्तन्ते प्राणाः किं निजकर्मणि ॥१३॥ देवताऽधिष्ठिता एव चाथवा, किं भवेदिह ?। स्वाधिकारोचिते कार्ये स्वातन्त्र्येणैव बुध्यताम् ॥१४॥ मैवमग्न्याद्यधिष्ठानं श्रुतावामन्यते यतः। प्राणिनां प्राणसम्बन्धान्नित्यत्वाद् भोक्तृता मता ॥१५॥

तदामननात्। "अग्निर्वाग्भूत्वा मुखं प्राविशत्" (ऐत० २।४।) इत्यादिषु तत्तत्करणस्य तत्तद्देवताधिष्ठानमामन्यते। तस्मान्न स्वातन्त्र्येण करणानां प्रवर्तनम्। किन्तु देवताधिष्ठितानामेव तेषामिति ॥ १४ ॥

यद्येवं देवतानामेवाधिष्ठातृत्वं तर्हि बह्वीनां तासामेव भोक्तृत्वं स्यान्न जीवस्येत्यत आह-

## प्राणवता शब्दात् ।२।४।१५।

एवमधिष्ठातृभूतानां देवतानां सत्त्वेऽपि प्राणेन्द्रियाध्यक्षेण जीवेनैव सर्वेषां प्राणादीनामधिष्ठातृतया सम्बन्धोऽवगम्यते शब्दश्चात्र श्रुतिः "अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुः" (छा० ८। १२।४।) इति जीवस्यैव करणग्रामेण सम्बन्धो निश्चीयते। तथा च नानेकदेवतानां भोक्तृत्वादिकमापद्यते ॥ १५ ॥

## तस्य च नित्यत्वात् ।२।४।१६।

तस्य जीवात्मनोऽस्मिन् भोगायतने शरीरे भोक्तृतया नित्यत्वात्। स्वार्जितकर्मणां फलरूपेण समापन्नसुखदुःखादीनां भोक्तृत्वं नित्यत्वात् जीवस्यैव सम्भवति नान्येषां केषामपीति जीवेनैव करणादीनां सम्बन्धो न देवताभिरिति ॥१६॥

### * अथेन्द्रियाधिकरणम् ॥८॥

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् २।४।१७।

किं प्राणपदेनावगतानि सर्वाणीन्द्रियाणि, आहोस्विच्छ्रेष्ठप्राणव्यतिरिक्तानि तानीति संशये करणत्वाविशेषात्सर्वाण्यपीन्द्रियाण्येवेति पूर्वः पक्षः। सिद्धान्तस्तु-श्रेष्ठप्राणभिन्नान्येवेन्द्रियाणि। श्रेष्ठादन्ये ये प्राणास्तेषु चक्षुरादिष्वेवेन्द्रियत्वव्यपदेशात् "एतस्माज्जायते प्राणो, मनः सर्वेन्द्रि-

---

* इन्द्रियाणि च सर्वाणि प्राणवाच्यानि वाऽत्र हि। श्रेष्ठप्राणातिरिक्तानि किं युक्तमिति चिन्त्यते ॥१६॥ करणत्वाविशेषेण प्रथमस्यैव युक्तता। नैवं श्रेष्ठातिरिक्तेष्विन्द्रियत्वव्यपदेशतः ॥१७॥

याणि च" (मु० २।१।३।) इति ह्यीन्द्रियाणां मुख्यप्राणात् पार्थक्येन व्यपदेशो भेदसाधकः ॥१७॥

## भेदश्रुतेर्वैलक्षण्याच्च ।२। ।१८।

इन्द्रियेभ्यः प्राणस्य भिन्नत्वेन श्रुतेः । "ते ह वाचमूचुः" (बृ० १।३।२) इति वागादीन्द्रियाणामुपादानम् "अथ हेममासन्य प्राणमूचु" इति च पृथक् प्राणस्य श्रवणम् । वैलक्षण्यञ्च श्रेष्ठप्राणस्येन्द्रियेभ्यः । सुषुप्तौ ह्यीन्द्रियाणामुपरामो दृश्यते प्राणस्य तूच्छ्वासनिश्वासादिरूपा वृत्तिरुपलभ्यत एव । अत एव "इन्द्रियाणि दशैकञ्च" (गी० १३।५) इत्यत्रैकादशेन्द्रियाणि परिगणितानि । न प्राणस्येन्द्रियत्वम् ॥१८॥

### अथ संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥९॥

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ।२।४।१९।

एवं भूतेन्द्रियप्राणानां समष्टिसृष्टिमभिधाय व्यष्टिसृष्टिरिदानीं चिन्त्यते । तत्र यदिदं नामरूपव्याकरणं तत्समष्टिजीवस्य हिरण्यगर्भस्यैव कर्माहोस्वित्तच्छरीरकस्य परमात्मन इति संशयः । तत्र समष्टिजीवस्यैवैतत्कर्म भवितुमर्हति । कुतः ? "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" ( छा० ६।३।२ ) इति जीवस्यैव तत्कर्तृत्वश्रवणात् । न च व्याकरवाणीत्युत्तमपुरुषः कर्तृस्थक्रियश्च प्रविशतिर्लाक्षणिकः स्यात् चारेणानुप्रविश्य परबलं सङ्कलयानीतिवदिति वाच्यम् । तत्रोभयोः स्वरूपभेदाल्लाक्षणिकत्वम् । अत्र तु जीवस्य परमात्मनोऽप्रतयैकस्यैवात्मनस्तदिति न दोषः ।

* व्यष्टिसृष्टिर्विधेः कर्म तद्देहिनः परस्य वा ? श्रुता 'चनेन जीवेन' इत्युक्त्या परमेष्ठिनः ॥१८॥ त्रिवृतकुर्वत उक्तेश्च विश्वात्मनः परस्य तत् । तदानीं तस्य चासत्त्वात्तत्कर्तृत्वं विधेर्न हि ॥१९॥

इति पण्डितसम्राट श्रीवैष्णवाचार्य वेदान्तपीठाचार्य प्रणीतायां अधिकरणरत्नमालायां द्वितीयोऽध्यायः ॥२॥

इति प्राप्तेऽभिधीयते–संज्ञामूर्तिक्लृप्तिस्त्विति–तु शब्दोजीवकर्तृकत्व-निरासार्थः। "तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" (छा० ६।३।२।) इति त्रिवृत्कुर्वतः परमात्मन एव संज्ञामूर्तिक्लृप्तिर्नामरूपव्याकरणं कार्यं भवितुमर्हति। कुतः ? उपदेशात्। "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता, अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि। तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" (छा० ६।३।२।) इति नामरूपव्याकरणस्य च परदेवताकर्तृकत्वोपदेशात्। अत्र त्रिवृत्करणं परस्यैव ब्रह्मणो नतु हिरण्यगर्भस्य तस्य तदानीमसत्त्वात्। एवञ्च तत्समानकर्तृकत्वान्नाम-रूपव्याकरणं परमात्मन एव कर्मेति निश्चीयते ॥१९॥

नन्वेवमपि प्रजापतिकर्तृकत्वमेव त्रिवृत्करणस्य सम्भवति ब्रह्माण्ड-सृष्ट्युत्तरकालं प्रजापतिसृष्टजीवेषु त्रिवृत्करणमुपदिश्यते। "यथा सोम्ये-मास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति" "अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठं तन्मनः" (छा० ६।५।१।) इत्यादिवाक्येन। तस्माज्जीवकर्तृकत्वमेव स्यादित्यत्राह–

## मांसादि भौमं यथाशब्दमितरयोश्च ।२।४।२०।

न ह्यत्र त्रिवृत्करणमुपदिश्यते। किन्तु जगदन्तर्वर्तिप्राणिभुक्तान्नादीनां पाचनसमनन्तरं परिणतिप्रकारोऽभिधीयते। "अन्नमशितं त्रेधा विधीयते" (छा० ६।४।७।) इति। अयञ्च प्रागुपदिष्टात्त्रिवृत्करणादन्य एव। त्रिवृत्क-रणोपदेशे तु मांसमनसोः पुरीषादणीयस्त्वेन कारणानुगुण्येनाप्यतैजसत्व-प्रसङ्गात्। "अन्नमशितं त्रेधा विधीयते" इति भूमेरेव त्रिधोपक्रमो बाध्येत।

"अन्नमयं हि सोम्य मनः" (छा० ६।५।४) इति मनसो भौमत्वञ्च विरुध्येत। एवमितरयोश्चाप्तेजसोरपि त्रैविध्य व्याहन्येत। तस्मान्नात्र पुनस्त्रिवृत्करणमुपदिश्यते। एवञ्च "अन्नमशितं त्रेधा विधीयते तस्य यः

स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठं तन्मनः" (छा० ६।५।१।) इत्यत्रोपदिष्टे मांसमनसी पुरीषवद्भौम एवेत्युच्यते। तथान्यत्रापि बोध्यम्। तस्मात्परमात्मन एव त्रिवृत्करणम् तत्कर्तृकमेव नामरूपव्याकरणम् न जीवकर्तृकमिति ॥२०॥

ननु "अन्नमशितं त्रेधा विधीयते" इत्यादावन्नादीनां त्रिवृत्कृतानामेव यदि त्रिः परिणतिरभिधीयते तर्हि कथमन्नमापस्तेज इत्येकैकरूपेण व्यपदेश इत्यत्राह–

वैशेष्यात्तु तद्वादस्तद्वादः ।२।४।२१।

तुशब्द उक्तशंकानिवर्तकः। सर्वेषां पृथिव्यप्तेजसां त्रिवृत्करणस्याविशेषेऽपि वैशेष्यात्स्वस्वभागाधिक्यात्तद्वादः अन्नादिवादः। अभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥ २१ ॥

श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये
द्वितीयाध्यायस्य चतुर्थः पादः ॥४॥

समाप्तश्चायं द्वितीयोऽध्यायः ॥२॥



## श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये

# तृतीयाध्यायस्य प्रथमः पादः ।

### * अथ तदन्तरप्रतिपत्त्यधिकरणम् ॥५॥

एवमध्यायद्वयेनाखिलजगदेककारणे परमपुरुषे ब्रह्मण्येव समेषां वेदान्तानां समन्वयम्प्रदर्श्य तत्र परैः स्वबुद्धिवैषम्यात्समुद्भावितान्विरोधानपि परिहृत्य सकलेतरविलक्षणं ब्रह्मस्वरूपं तदायत्तकर्तृत्वादिविशिष्टं तच्छेषभूतं प्रत्यगात्मनः स्वरूपञ्च चिन्तितम । इदानीन्त्वस्मिन् साधनाख्ये तृतीयेऽध्याये प्राप्त्युपायो प्राधान्येन विचिन्त्यते । तत्र जीवस्य देहान्तरगतिस्तदवस्थाप्रकारो गुणोपसंहारानुपसंहारफलिका विद्यैकत्वनानात्वचिन्ता ततश्च पुरुषार्थावाप्तिरित्येतेऽर्था विचार्यन्ते । प्रसङ्गागतञ्चान्यदपि । अथानेन प्रथमेनाधिकरणेन जीवस्य देहान्तरप्राप्तिप्रकारो विचार्यते ।

### तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ।३।१।१।

किमयं जीवो देहान्तरारम्भकैर्भूतसूक्ष्मैर्मुख्यप्राणादीनामाधारभूतैः रसंयुक्त एव देहान्तरं गच्छत्याहोस्वित्सम्परिष्वक्त इति संशये । असम्परिष्वक्त एव गच्छति । देहान्तरारम्भकाणां भूतसूक्ष्माणां सर्वत्र सुलभत्वादिति प्राप्तेऽभिधीयते-तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्यामिति । पूर्वाधिकरणे मूर्तिशब्दाद्देह उच्यते तस्यैवात्र सूत्रे तत्पदेन

---

* भूतसूक्ष्मैरसंयुक्तो जीवो यात्यपरां तनुम् । अथवा सम्परिष्वक्तः ? किं युक्तं प्रथमं कुतः ॥१॥ सर्वत्र भूतसूक्ष्माणां सुलभत्वेन हेतुना । नैतत् प्रश्नोत्तराभ्यां यदन्तिमं मतमुत्तमम् ॥२॥

ग्रहणम् । तथा च देहान्तरगमने तदारम्भकैर्भूतसूक्ष्मैः सम्परिष्वक्त एव जीवो रंहति गच्छति । कुतश्चैतदवगम्यते । प्रश्ननिरूपणाभ्याम् । प्रश्नेन तदुत्तरेण चावगम्यते । पञ्चाग्निविद्यायां छान्दोग्ये श्रूयते "श्वेतकेतुर्हारुणेयः पञ्चालानां समितिमेयाय तं ह प्रवाहणो जैवलिरुवाच" 'वेत्थ यथा पञ्चम्या माहुतावापः पुरुषवचसो भवन्तीति" (छा० ५।३।१।३।) इत्यादिकम् । तत्र प्रवाहणेन राज्ञारुणेयं श्वेतकेतुम्प्रति पञ्च प्रश्नाः कृताः । तेष्वन्तिमः प्रश्नः 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति वर्तते । अस्य च प्रतिवचन "असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समित्" (छा० ५।४।१।) इत्यादिना कृतम् । तत्र हि द्युलोकपर्जन्यपृथिवीपुरुषयोषारूपास्वग्निषु श्रद्धासोमवर्षान्नरेतसामाहुतीः समुपवर्ण्योक्तं "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" (छा० ५।९।१।) इति । इत्थं पूर्वोदितासु सर्वास्वप्याहुतिषु सूक्ष्मरूपेणानुवर्तमानानां श्रद्धापदव्यपदेश्यानामेवापां पुरुषशब्दबोध्यत्वमभिहितम् । एवञ्चाभ्यां प्रकृतप्रश्नप्रतिवचनाभ्यां देहारम्भकहेतुभिर्भूतसूक्ष्मैः सहैव जीवो देहान्तरमुपयातीति निश्चीयते ॥१॥

ननूक्तप्रश्ननिरूपणाभ्यामद्भिः परिष्वक्तो जीवो गच्छति "आपः पुरुष वचसो भवन्ति" इत्यभिधानात् । परन्तु तस्यावितरभूतपरिष्वङ्गः कथमित्याशङ्क्याह—

## त्र्यात्मकत्वात्तु भूयस्त्वात् ।३।१।२।

तु शब्दः शङ्कानिवर्तकः । अपां त्रिवृत्करणश्रुत्या त्र्यात्मकत्वात् । "आपः पुरुषवचस" इति च भूतान्तरसंसृष्टा आपोऽभिधीयन्ते । तत्रापां भूयस्त्वादाधिक्यात्केवलाप्शब्देनैवाभिधानमुपपद्यते ॥२॥

## प्राणगतेश्च ।३।१।३।

इतोऽपि भूतसूक्ष्मैस्सह गमनमुपपद्यते । "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" (बृ० ६।४।२।) इति । तथा

"शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः। गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्" (गी०) इति स्मृतेश्च। जीवोत्क्रमणकाले मुख्यप्राणसहितानामिन्द्रियाणामपि तेन सह गतिश्रवणात्स्मरणाच्चेन्द्रियाणां देहाश्रितत्वेन देहारम्भकाणां भूतसूक्ष्माणामपि गमनाद्। भूतपरिष्वक्त एव जीवो रंहतीति ॥ ३ ॥

## अग्न्यादिगतिश्रुतेरितिचेन्न भाक्तत्वात् ।३।१।४।

ननु "यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्" (बृ० ५।२।१३।) इत्यादिना वागादीनामग्न्यादिषु लयस्य श्रवणात्तेषां मरणकाले जीवेन सह गतिर्नोपपद्यत इति चेन्न, "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इति जीवेन सह वागाद्युत्क्रान्तिश्रुतिविरोधेन तेषामग्न्यादिदेवतासु लयाऽनुपपत्तेः। तथा च "यत्रास्य पुरुषस्याग्नि" मित्यादिश्रुतेर्भाक्तत्वावगमात्। नहि मृतस्य प्रत्यक्षेण दृश्यमानानां लोम्नां केशानांश्चौषधिषु वनस्पतिषु च लयो दृश्यते। अतोऽग्न्यादिषु वागादिलयश्रुतेरौपचारिकत्वम् ॥ ४ ॥

## प्रथमेऽश्रवणादितिचेन्न ता एव ह्युपपत्तेः ।३।१।५।

प्रथमे द्युलोकाख्याग्नावपामाहुतेरश्रवणात्किन्तु "तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति" (छा० ५।४।२।) इति प्रथमेऽग्नौ श्रद्धाया एवाहुतेः श्रवणादापो भूतान्तरसंसृष्टा गच्छन्तीति नोपपद्यत इति चेन्न, यस्मात्ता एवापः श्रद्धाशब्दवाच्या भवन्ति। कुतः ? उपपत्तेः। श्रद्धाशब्देनापामेव ग्रहणम् तथासत्येव प्रश्नस्य तन्निरूपणस्य चोपपत्तिः। तथा हि–"वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" (छा० ५।३।३) इत्यत्रोद्देश्यतयाऽपामेव पुरुषवचस्त्वं प्रष्टुरभिमतम्। तथा तत्प्रतिवचनारम्भे तु द्युलोकाग्नौ होम्यत्वेन श्रद्धाधिगता। तत्र श्रद्धाया एवाद्रूपत्वमेष्टव्यम्। नो चेत्प्रश्नप्रतिवचनयोर्विषयभेदः स्यात्। "श्रद्धा वा आपः"

(अष्टक० २।४।३२) इति श्रुतेः श्रद्धाशब्देनाप एवोच्यन्ते । तथा च भूतसूक्ष्मैः सम्परिष्वक्त एव गच्छतीति ॥५॥

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ।३।१।६।

ननु "देवाः श्रद्धां जुह्वति" (छा० ५।४।२।) इत्यादि प्राकरणिकेषु वाक्येष्ववादिभूतपरिष्वक्तस्य जीवस्य रंहणत्वं नोपपद्यते । कुतः ? प्रश्नप्रतिवचनवाक्ययोरश्रुतत्वात् । इति चेन्न । इष्टादिकारिणां प्रतीतेः । "अथ य इमे ग्राम इष्टापूर्तंदत्तमित्युपासते ते धूममभिसम्भवन्ति" (छा० ५।१०।३।) इतीष्टादिकारिणां धूममार्गेण चन्द्रलोकप्राप्तिः श्रूयते । "आकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति" (छा० ५।१०।४।) इति । एवमत्रापि "देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति" (छा० ५।४।२।) इति समानोऽर्थो निश्चीयते ।

अयम्भावः । दर्शपूर्णमासादिकर्मसु दध्यादयः प्रत्यक्षेणैव द्रवद्रव्यप्राचुर्यादापस्ताश्चेष्टादिकारिणं फलाधिकारिणं सूक्ष्मरूपेण व्याप्नुवन्ति । ततश्च स्वर्गलोकं फलप्रत्यर्पणाय ता एवापो नयन्तीत्यनेनोच्यते "देवाः श्रद्धां जुह्वति" (छा० ५।४।२।) श्रद्धापूर्वकं हुतास्ता एवापः श्रद्धाख्याहुतित्वमापन्नाः सोमाख्यदेहात्मना परिणमन्ते । तस्मादाहुतिरूपाणामपां सम्परिष्वङ्गो जीवस्यास्त्येवेत्यवगम्यते ॥६॥

एवमपि "आकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति"। (छा० ५।१०।४) इति देवानामन्नस्थानीयः सोमो राजा भक्ष्यत्वेन निर्दिष्टो न जीवः स्यादित्यत आह–

## भाक्तं वानात्मवित्त्वात्तथा हि दर्शयति ।३।१।७।

वाशब्दः शङ्कानिवृत्त्यर्थः । जीवस्य स्वर्गसुखावाप्त्यर्थं 'यजेत स्वर्गकामः' इत्यादिविधिवाक्यानां सार्थक्याय न प्रकृतेऽन्नपदेनादनकर्मत्वमवगन्तव्यम् । तथा चेष्टादिकारिणामन्नत्वस्य मुख्यत्वाभावाद् भाक्तत्वमेव ।

देवानां किङ्करादिभोगोपकरणत्वमात्रेणान्नत्ववचनं भाक्तमेव । न हि देवा मोदकादिवन्निगरणं कुर्वन्ति । इष्टादिकारिभिस्सह सुखेन विहरणमेव हि तेषां भक्षणम् । तथा च श्रुतिः "न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति" (छा० ३।६।१) इति प्रीतिरेव देवानामशनम् । कुतश्चैतदिष्टादिकारिणां भोग्यत्वमत आह–अनात्मवित्त्वात्तथा हि दर्शयति । यतस्तेन प्रकारेण तेषामनात्मवित्त्वेन देवभोग्यत्वं दर्शयति श्रुतिः "अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्" (बृ० ३।४।१०) इत्यनात्मविदो देवभोग्यत्वं पशुवदवगम्यते । तस्माद् भूतसूक्ष्मैः सम्परिष्वक्त एव जीवो रंहतीति सिद्धम् ॥७॥

❀ अथ कृतात्ययाधिकरणम् ॥२॥

## कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च ।३।१।८।

केवलमिष्टादिकारिणां स्वकर्मफलभोगार्थं धूमादिमार्गेण सोमलोकप्राप्तानां तत्र च भुक्तकर्मफलानां ततो निवर्तनं श्रूयते "तस्मिन् यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते" (छा० ५।१०।५) इत्यादि । तत्र संशयः । किं चन्द्रमण्डलान्निवर्तमानास्ते जीवा निरनुशया एव निवर्त्तन्त आहोस्वित्सानुशया इति ? तत्र निरनुशया एवावरोहन्तीति पूर्वः पक्षः । प्रकृतेऽनुशयशब्द आमुष्मिकफलप्रदकर्मातिरिक्तकर्मवाचकः । श्रुतौ सम्पतन्त्यनेन स्वर्गलोकं फलभोगायेति सम्पातोऽत्र कर्माऽभिधीयते । एवञ्च 'यावत्सम्पातमुषित्वा' इति वाक्येनाखिलकर्मणामुपभोगस्तत्रैव निश्चीयते । तथा च श्रुतिः "प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे" (बृ० ४।४।६) इति । तस्मात्सर्वकर्मफलभोगानन्तरमेवावरोहणान्निरनुशया एव निवर्त्तन्ते ।

---

* किं निरनुशयो जीवः प्रत्यायातीन्दुमण्डलात् । यद्वा सानुशयः किं स्यादाद्यमेव वरं मतम् ॥३॥ 'यावत् सम्पातमि' त्युक्त्याऽखिलकर्मोपभोगतः । मैवं श्रुतिस्मृतिभ्यां यन्मतमन्त्यमनुत्तमम् ॥४॥

इति प्राप्तेऽभिधीयते कृतात्ययेऽनुशयवानिति । कृतस्य स्वर्गप्राप्तये कृतस्य पुण्यकर्मणो भोगेनात्यये नाशे सत्यनुशयवान् भुक्तशिष्टकर्मवानेव निवर्तते । चन्द्रमण्डलात्प्रत्यवरोहति । कुतोऽवगम्यते ? दृष्टस्मृतिभ्याम् । दृष्टा श्रुतिः । सा च "तद्य इह रमणीयचरणा अभ्यासो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाथ य इह कपूयचरणा अभ्यासो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वा" (छा० ५।१०।७।) इत्येवंरूपा । येऽत्र कर्मभूमौ रमणीयं पुण्यं कृतवन्तस्ते चन्द्रमण्डलादवरोहन्तो रमणीयां पुण्यां ब्राह्मणादियोनिमापद्यन्ते । ये च कपूयं कुत्सितं पापं कृतवन्तस्ते कपूयां कुत्सितां श्वशूकरादियोनिमापद्यन्ते । इति पुण्यपापकर्मकारिणां स्वर्गात्प्रत्यवरूढानां प्राक्तनकर्मयोगात्पुण्यपापरूपजन्मनाम्प्राप्तिं दर्शयन्ती श्रुतिर्भुक्तशिष्टं कर्मास्तीति स्पष्टयति । तथा स्मृतिरपि "वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते" (गौतम०) इति ततः शेषेणेत्यनेन सानुशयानामेव स्वर्गादवरोहणं वदति । "यावत्सम्पातमुषित्वा" इत्यस्य सकलकर्मभोगानन्तरं निवर्त्तन्त इति नार्थः । किन्तु स्वर्गलोकभोक्तव्यानि कर्माणि तान्यशेषेण भुक्त्वेत्याद्यर्थः । सकलकर्मफलभोगपरत्वे तु सर्वेषां कर्मणां तत्फलभोगेन विनाशादुत्तरजन्महेत्वभावेन पुनरिह लोके प्रत्यावर्तनाऽसम्भवात् "रमणीयां योनिमापद्येरन्" इत्यादि श्रुतेः 'ततः शेषेण' इत्यादिस्मृतेश्च वैयर्थ्यं स्पष्टमेव । तस्मात्सानुशयानामेवावरोहणमिति । ते च येन क्रमेणारूढास्तेनैव क्रमेणावरोहन्ति क्रमान्तरेण वेति सन्देहं निरस्यन्नाह—'यथेतमनेवञ्च' आरोहणप्रकारेण तद्विपर्ययेण च निवर्तन्त इति तदर्थः । अयं भावः । आरोहणे श्रुतयोर्धूमाकाशयोरवरोहणेऽपि श्रुतत्वाद्यथेतं यथागतमिति । अवरोहणे तु वाय्वादिनिर्देशाद्रात्र्याद्यनुपदेशात्तद्विपर्ययेणेत्यनेवमिति ॥८॥

## चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ।३।१।९।

ननु रमणीयचरणा रमणीयां योनिमापद्येरन्" इति श्रुतस्य चरणपदस्यानुशयकर्मार्थकत्वमङ्गीकृत्य सानुशयानामवरोहणं यदुक्तं तन्नोपपद्यते। कुतः? चरणस्याचारात्मकस्य कर्मणो ब्राह्मणादियोनिप्राप्तिहेतुभूतस्यानुशयादतिरिक्तत्वादिति चेन्न, इयं चरणश्रुतिरनुशयकर्मोपलक्षणार्थेति कार्ष्णाजिनिराचार्यो मन्यते ॥९॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ३।१।१०।

ननु श्रुतस्य चरणस्यैव सदाचारदुराचारात्मकस्य ब्राह्मणादिश्वशूकरादिसदसद्योनिप्राप्तिहेतुत्वेन श्रुतस्यानुशयकर्मोपलक्षकत्वे तस्याकिञ्चित्करत्वेनानर्थक्यं स्यादिति चेन्न, तदपेक्षत्वात्। सुखसाधनस्येष्टापूर्तादिः पुण्यकर्मणश्चरणपदाभिहिताचारनिवर्त्यत्वेनाचारापेक्षत्वात्तस्य चार्थवत्त्वादिति। "संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु" इति स्मृतेः सर्वस्य पुण्यकर्मणः आचारापेक्षत्वात् "आचारहीनं न पुनन्ति वेदा" इत्याचारहीनस्याशुचित्वाभिधानाच्च। तस्मात्कर्मोपलक्षणार्थेति कार्ष्णाजिनेर्मतम् ॥ १० ॥

## सुकृतदुष्कृते एवेति तु बादरिः ।३।१।११।

तुशब्दः कार्ष्णाजिनिमतमपाकरणार्थः। चरणशब्देन सुकृतदुष्कृत एवाभिधीयेत इति बादरिराचार्यो मन्यते। न हि सुकृतदुष्कृतसाधनरूपाचारे चरणशब्दः। कुतः? पुण्यं कर्म करोतीति वाक्यस्थाने "धर्मं चरतो" त्येवमपि प्रयुज्यते। तस्मान्मुख्य एव चरणशब्दः कर्माभिधायकः। सति मुख्यार्थे लक्षणाया अन्याय्यत्वात्। तथा च चरणमनुष्ठानं कर्मेति च समानार्थकानि। आचारोऽपि धर्मविशेष एव। कर्मचरणयोर्भेदव्यपदेशस्तु ब्राह्मणपरिव्राजकन्यायेनोपपद्यते। तस्मात्सानुशया एव निवर्तन्त इति सिद्धम् ॥११॥

## * अथानिष्टादिकार्यधिकरणम् ॥३॥

## अनिष्टादिकारिणामपि च श्रुतम् ।३।१।१२।

इष्टादिकारिणां चन्द्रमण्डलगमनमुपवर्णितम् । अथानिष्टादिकारिणां पापकर्मणां गतिश्चिन्त्यते । तेषां किं चन्द्रलोके गमनमस्ति न वेति संशये अस्ति चन्द्रलोके गमनम् । कुतः ? तेषामपि तत्र गमनं श्रुतमस्ति "ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" (कौषी० १।२।) इति सर्वेषामेव चन्द्रलोके गमनं विशेषेण श्रूयते ॥१२॥

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ।३।१।१३।

अथैवमिष्टानिष्टकारिणोरविशेषेणैव चन्द्रलोकगमनं तर्हि कथं 'रमणीयां योनिमापद्येरन्' 'कपूयचरणा कपूयां योनि'मिति पश्चात्तनवाक्ये फलभेदः ? इति शङ्कायामाह–संयमने त्वित्यादि । तुशब्दश्चोद्यं व्यावर्तयति । संयमने यमालये स्वपापानुरूपां यामीं यातनामनुभूयैवेतरेषामनिष्टादिकारिणां चन्द्रलोक आरोहावरोहौ नान्यथा । कुतः ? तद्गतिदर्शनात् । यमलोकगतेः श्रुतौ दर्शनात् । "न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे" (का० ६।२) इति । सम्यगवश्यं परः परस्ताद्देहपातादूर्ध्वमय्यते गम्यत इति सम्परायः परलोकस्तत्साधनभूतकर्मविशेषः साम्पराय इति । तथा "वैवस्वतं संगमनं जनाना" मिति च ॥१३॥

---

* अनिष्टादिकृतां पापकर्मणां गमनं ननु । चन्द्रलोकेऽस्ति नैवेति ? पक्षश्चाद्यो मनोहरः ॥५॥ ये वै के चे' ति वाक्येन सर्वेषां गमनश्रुतेः । 'अथ य इम' इत्येनच्छ्रुत्या हि पुण्यकर्मणाम् ॥६॥ उक्तेन्दुमण्डलप्राप्तिः, पुण्याभावे कथञ्च सा । तथा च चरमः पक्षो विद्वज्जनमनोरमः ॥७॥

## स्मरन्ति च ।३।१।१४।

अनिष्टादिकारिणां दुष्कृतकर्मणां सर्वेषां प्राणिनां यमायत्तत्वं स्मरन्ति च पराशरव्यासप्रभृतयो महर्षयः "सर्वे चैते वशं यान्ति यमस्य भगवन्किल" (वि० पु० ३।१।५।) इत्येवमादिषु ॥१४॥

## अपि च सप्त ।३।१।१५।

रौरवादीन् सप्त नरकानपि पापिनां फलभोगभूमित्वेन स्मरन्ति ।
॥ १५ ॥

ननु सप्तसु रौरवादिषु पापफलभोगभूमिषु गच्छतां कुतो यमलोकावाप्तिर्यतस्तेषु चित्रगुप्तादय एव व्यवस्थापका इत्यत आह–

## तत्रापि च तद्व्यापारादविरोधः ।३।१।१६।

रौरवादिष्वपि यमस्यैव स्वामित्वव्यापारोऽभ्युपेयत इत्यविरोधः । चित्रगुप्तादयोऽपि यमाज्ञयैव तत्र व्यवस्थापयन्तीतिभावः ॥१६॥

एवं पञ्चसूत्र्याः पूर्वपक्षमुद्भाव्य सिद्धान्तयति–

## विद्याकर्मणोरिति तु प्रकृतत्वात् ।३।१।१७।

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । यदुक्तमनिष्टादिकारिणामपि चन्द्रलोकगतिरस्तीति तन्नोपपद्यते । कथमवगम्यते । विद्याकर्मणोः फलभोगार्थत्वेन देवयानपितृयाणयोरुपयोगः । तथा हि–"तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति" (छा० ५।१०।१)इत्यारभ्य "तत्पुरुषोऽमानवः । स एतान् ब्रह्मगमयत्येष देवयानः पन्थाः" (छा० ५।१०।) इत्यन्तेन विद्याया देवयानाख्यमार्गसाधनतया प्रकृतत्वात् । "अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति" ( छा० ५।१० ) इत्यारभ्य "आकाशाच्चन्द्रमसम्" इत्यन्तेनेष्टापूर्तादिकर्मणः पितृयाणाख्यमार्गसाधनत्वेन प्रकृतत्वात् । तत्रेष्टादिकारिणां विद्यारहितत्वेन यथा-

ब्रह्मलोकगमनासम्भवस्तथेष्टापूर्तदत्तादिपुण्यकर्मरहितानामपि चन्द्रलोकगमनाऽसम्भव इत्याशयः ॥१७॥

अथैवं पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति पञ्चम्या आहुतेर्देहारम्भकत्वश्रवणात् तस्याश्चन्द्रगमनपूर्वकत्वश्रवणाच्च पापिनामपि देहारम्भार्थं चन्द्रलोकगमनमवश्यमङ्गीकार्यमित्याशङ्क्याह–

## न तृतीये तथोपलब्धेः ।३।१।१८।

तृतीये स्थानेऽभिगतानां पापिनां क्षुद्राणां जन्तूनां देहारम्भाय पञ्चमाहुत्यपेक्षा नास्ति । कुतः ? तथोपलब्धेः । "वेत्थ यथाऽसौ लोको न सम्पूर्यत ३ इति" ( छा० ५।३।३। ) इति प्रश्नस्य प्रतिवचनम् । विद्याऽविद्यावतां देवयानपितृयाणादिक्रमेण ब्रह्मचन्द्रलोकप्राप्तिमभिधाय "अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्वम्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते" (छा० ५।१०।८।) इति दृश्यते । अत्र वर्णितस्य तृतीयस्थानस्य प्राप्तये न द्युलोकादिगमनापेक्षा । अत एव न पञ्चमाहुत्यपेक्षेति निर्णयः । किञ्च 'पुरुषवचसो भवन्ती' त्युक्तत्वान्मनुष्यशरीरहेतुतया संख्यायाः कथनं न क्षुद्रजन्तुशरीरहेतुत्वेन । पुरुषशब्दस्यात्र मनुष्यजातिपरत्वात् ॥१८॥

## स्मर्यतेऽपि च लोके ।३।१।१९।

अपि च लोके भारतादिषु पुण्यकर्मणामपि द्रोणद्रौपदीधृष्टद्युम्नादीनां पञ्चमाहुत्यनपेक्षयैव शरीरारम्भः स्मर्यते । तस्मान्न पञ्चमाहुतेर्नियमः ॥ १९ ॥

## दर्शनाच्च ।३।१।२०।

किञ्च श्रुतावपि कयोश्चिदुद्भिज्जस्वेदजयोर्भूतयोः स्त्रीपुंव्यतिसंयोगज [illegible] तमन्तरेणैवोत्पत्तेर्दर्शनात्पञ्चमाहुतेरनपेक्षया देहारम्भः । दर्शनं श्रुतिः ' तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीव-

जमुद्भिज्जमिति" (छा० ६।३।५) इति ॥२०॥

ननु 'त्रीण्येव बीजानी' ति वचनात्कथं चतुर्थस्य स्वेदजस्यात्र ग्रहणम् ? इत्यत्राह–

## तृतीयशब्दावरोधः संशोकजस्य ।३।१।२१।

श्रुतौ "अण्डजं जीवजमुद्भिज्जमिति" इति तृतीयेनोद्भिज्जशब्देन संशोकजस्य स्वेदजस्यावरोधः संग्रहः । वृक्षादिकं भूमिमुद्भिद्य जायते स्वेदजन्तु जलमित्युभयोरुद्भिज्जत्वेनाविशेषादुद्भिज्जशब्देन ग्रहणम् । तस्मादनिष्टादिकारिणां दुष्कृतशालिनां न चन्द्रलोकगमनमिति सिद्धम् ॥२१॥

### * अथ साभाव्यापत्त्यधिकरणम् ॥४॥

## साभाव्यापत्तिरुपपत्तेः ।३।१।२२।

एवमिष्टादिकारिणां पितृयाणेन चन्द्रमण्डलगतिस्तत्र यावत्सम्पातं समवस्थानं ततश्च सानुशयानामेवावरोहणमित्यभिहितम् । इदानीमवरोहप्रकारश्चिन्त्यते । स चेत्थं श्रूयते "अथैतमेवाध्वानं पुनर्निवर्त्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति" (छा० ५।१०।५) तत्र संशयः । किमेषामवरोहतामाकाशादिप्राप्तौ देवादिवदाकाशादिस्वरूपोपलब्धिराहोस्विदाकाशादिसाम्यमेव ? तत्राकाशादिस्वरूपोपलब्धिरिति । कुतः ? श्रद्धारूपाणां यथा सोमरूपोपलब्धिस्तद्वदत्राप्यविशेषेणाकाशमारभ्य "वायुर्भूत्वा धूमो भवती" त्येवं ताद्रूप्यमेव श्रूयते ।

इति प्राप्तेऽभिधीयते–साभाव्यापत्तिरिति–साम्यापत्तिरित्यर्थः । कथ-

---

* सुधांशोरवरोहे किं नभस्त्वं सोमभाववत् । जीवानामथवाऽऽकाशसाम्यमेवेति ? किं परम् ॥८॥ भूत्वा प्रयोगसामर्थ्यादाद्यमेव वर मतम् । नैतद् युक्तं कुतो यस्मात् साम्यमेवोपपत्तितः ॥९॥ सोमादिषु तु ताद्रूप्यं भोगार्थं सुख दुःखयोः । भोगं भुक्त्वाऽवरोहे तु भोगो न ह्येत्वभावतः ॥१०॥

मवगम्यते । उपपत्तेः । सोमादिषु पुण्यपापोपभोगार्थं सारूप्यमेवावश्यकम् । आकाशादिप्रतिपत्तौ तु तदुपभोगाभावात्स्वरूपोपलब्धेर्नोपयोगस्ततस्तदाकाशादिसाम्यमेवोपयान्ति । अत्राकाशादिभावश्चाकाशादिसादृश्यापत्तिरेवेत्यवगम्यते ॥२२॥

## * अथ नातिचिराधिकरणम् ॥५॥

## नातिचिरेण विशेषात् ।३।१।२३।

एवमाकाशादिवर्षपर्य्यन्तेषु पूर्वपूर्वसादृश्यं प्राप्योत्तरोत्तरसादृश्यं प्राप्नोतीत्युक्तम् । तदाश्रित्य किं जीवश्चिरकालमेकसादृश्यमास्थायापरसादृश्यं प्राप्नोत्याहोस्विदल्पकालं वेति संशये चिरं तिष्ठत्यचिरं वेति नियमाभावाच्चिरकालमेवेति प्राप्तेऽभिधीयते-नातिचिरेणेति । अचिरकालमेवाकाशादिभावेनावतिष्ठन्ते । कुतः ? विशेषात् । व्रीह्यादिभावावाप्त्यनन्तरं विशिष्य दुर्निष्क्रमणवचनात् । "अतो वै खलु दुर्निष्प्रपतरम्" (छा० ५।१०।६) इति व्रीह्यादिभावमुपगतानां दुःखेन निष्क्रमणमुच्यते । एतेनावगम्यतेऽतः पूर्वमाकाशादिप्रतिपत्तावचिरेणैव निष्प्रपतनमिति । दुर्निष्प्रपतरमित्यत्रच्छान्दसस्तल्लोपः ॥२३॥

## + अथान्याधिष्ठिताधिकरणम् ॥६॥

## अन्याधिष्ठिते पूर्ववदभिलापात् ।३।१।२४।

अवरोहणवाक्ये-"त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति

---

* व्योम्नो वर्षपर्यन्तं सादृश्यं चिरकालिकम् । अल्पकालमथो किं स्यादाद्यं नियत्यभावतः ॥११॥ मैवं यत् खादिसादृश्यमचिरं श्रुतिसम्मतम् । व्रीह्यादित्वमवाप्याथ दुःखेन निष्क्रमश्रुतेः ॥१२॥

\+ अवरोहे यदुक्तं जायन्ते व्रीहियवादयः । विचिकित्सा भवेत्तत्र किं व्रीह्यादिशरीरतः ॥१३॥ मुख्यं जन्मोच्यते जीवानां वा संसर्ग एव हि । जायन्ते वचनादाद्यं मतं श्रेष्ठं प्रतीयते ॥१४॥ मैवं संश्लेषमात्रं यदभि-

जायन्ते" (छा० ५।१०।६।) इत्यनुशयिनां जीवानां व्रीह्यादिभावेनोत्पत्तिः श्रूयते। तत्र संशयः। किं जीवानां व्रीह्यादिभावेन मुख्यजन्मोच्यत आहो-स्विज्जीवान्तराधिष्ठिते व्रीह्यादावनुशयिनां तेषां साहश्येन संसर्गमात्रमिति? किं युक्तम्? 'जायन्त' इति वचनाद्व्रीह्यादिशरीरत्वेन सुखदुःखभाजो जायन्ते। मनुष्यो जायते। पशुर्जायत इतिवत्।

एवं प्राप्तेऽभिधीयतेऽन्याधिष्ठित इति। अन्यैर्जीवैरधिष्ठिते व्रीह्यादा-वनुशयिनां जीवानां संसर्गमात्रं भवति। पूर्ववत्। आकाशादिवर्पान्तसंसर्ग-मात्रत्ववत्। कथमवगम्यते? अभिलापात्। इष्टापूर्तादेः कर्मणः स्वर्ग-सुखभोगेनैव विनष्टत्वात्तदतिरिक्तस्य भुक्तशेषस्यानुशयरूपस्य च कर्मणः कर्मान्तराभावेन सुखादिभोक्तृत्वाऽनुपपत्त्या मुख्य जन्मत्वानुपपत्तेः। तस्मा-दाकाशादिभावापत्तिरिव व्रीह्यादिभावावाप्तिरपि तत्संसर्गरूपैव। 'जायन्त' इति च भाक्तः प्रयोगः ॥२४॥

## अशुद्धमिति चेन्न शब्दात् ।३।१।२५।

ननु पूर्वश्रुतमिष्टाद्यग्निष्टोमादिकर्म हिंसागर्भत्वेनाशुद्धं तत्कारिणा-मनुशयिनां स्वर्गादवरोहतां व्रीह्यादिषु जन्मदुःखाद्यनुभवार्थमस्त्विति चेन्न। शब्दात्। 'यजेत' इत्यादिविधिशब्दात्। अग्निष्टोमादीनां श्रुतिविहितानां कर्मणां पुण्यफलत्वेन न दुःखहेतुत्वमिति। अथ स्यात् "न हिंस्यात्सर्वा भूतानि" इति वैदिकवचनमेव भूतकर्मिकाया हिंसाया अधर्मतया दुःखज-नकत्वमवगमयतीति कथं नानर्थहेतुत्वं वैदिकानां कर्मणामिति? नैवम्। 'अग्निष्टोमीयं पशुमालभेत' इत्यापवादिकेन;वचनेन वैदिकहिंसाया नानर्थो-त्पादकत्वम्। तथा च क्रत्वतिरिक्तहिंसायाः पापोत्पादकत्वं न तु क्रत्वङ्ग-भूताया इत्युभयोर्वचनयोः सार्थक्यम्। तस्मान्नानुशयिनां तत्र मुख्यं जन्म किन्तु तत्संश्लेषमात्रम् ॥२५॥

---

लापेन पूर्ववत्। कर्मक्षये कुतो भोगो भोगाभावे कुतो जनिः ॥१५॥
जायन्त इति भाक्तोऽस्ति प्रयोगश्चात्र सर्वथा। यज्ञहिंसाकृतं नैतद् यजेता-दिविधानतः ॥१६॥

## रेतःसिग्योगोऽथ ।३।१।२६।

इतोऽपि संश्लेषमात्रं व्रीह्यादिषु-व्रीह्यादिभावानन्तरमनुशयिनां रेतः सिञ्चतीति रेतःसिक् पुरुषस्तद्योगस्तद्भावः श्रूयते-"यो यो ह्यन्नमत्ति यो रेतस्सिञ्चति तद्भूय एव भवति" (छा० ।५।१०।६।) इति । यथाऽत्र तद्योगमात्रमुच्यते तथा व्रीह्यादिभावोऽपि व्रीह्यादिसंश्लेषमात्रमेव ॥२६॥

नन्वेवमनुशयिनां सर्वत्र संश्लेषमात्रमुत क्वचिन्मुख्यमपि जन्मेत्यत आह—

## योनेः शरीरम् ।३।१।२७।

'यो रेतः सिञ्चति तद्भूय एव भवती' त्यनन्तरं "तद्य इह रमणीय चरणा अभ्यासो ह यत्ते रमणीयां योनिमापद्येरन्" (छा० ५।१०।७।) इत्यनुशयिनामनुशयाख्यकर्मभोगाय योनौ निषिक्ते रेतसि योनेरधिशरीरं मुख्यमेव जन्म सम्पद्यते । अतः पूर्वमाकाशादिषु संश्लेषमात्रमेवेति सिद्धम् ॥२७॥

इति श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये तृतीयाध्यायस्य प्रथमः पादः ॥१॥



## श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये

# तृतीयाध्यायस्य द्वितीयः पादः।

### * अथ सन्ध्याधिकरणम् ॥१॥

### सन्ध्ये सृष्टिराह हि ।३।२।१।

एवमतिक्रान्ते पादे जीवस्य वैराग्योत्पादनाय पञ्चाग्निविद्यया कर्मानुगुणा जन्ममरणादिफलिका जीवगतिर्निरूपिता। इदानीं पुनस्तस्यैवावस्थान्तरं निरूप्यते। सन्ध्यावस्थामधिकृत्य "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान् पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान् मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्ताः पुष्करिणीः स्रवन्तीः सृजते स हि कर्ता" (बृ० ४।३।१०) इत्येवं श्रूयते। तत्र संशयः। किमस्या रथादि सृष्टेः कर्ता जीवः स्यादाहोस्वित्परमात्मेति। किं युक्तम्? जीव इति। कुतः? "संध्यं

---

* सन्ध्ये सृष्टी रथादीनां श्रूयमाणा श्रुता हि या। तस्याः कर्त्ताऽस्ति जीवो वा परमात्माऽत्र किं वरम् ॥१॥ 'एषु सुप्तेषु जागर्ति' इति श्रुत्या च सन्निधेः। स्वप्नद्रष्टा भवेन्नूनं जीवः स्वप्नार्थकारकः ॥२॥ तत्रोपकरणादीनामभावेऽपि न हि क्षतिः। सत्यसङ्कल्पताऽऽम्नाता जीवस्यापि यतः श्रुतौ ॥३॥ मैवं स्वप्नरथादीनां मायामात्रस्वरूपिणाम्। कर्त्ताऽत्याश्चर्यकर्त्ताऽत्र परमात्मैव सम्मतः ॥४॥ सत्यसङ्कल्पता यस्माच्छ्रुता तत्रातिरोहिता। आविर्भूतस्वरूपे हि जीवे सा न च संसृतौ ॥५॥ 'तस्मिल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन'। एतादृशस्य तत्रैवोपसंहारस्य दर्शनात् ॥६॥ 'एषु सुप्तेषु' वाक्येऽपि निर्माता राघवो मतः। ईशाधारा धर्मास्तत्र बहवः प्रतिपादिताः ॥७॥

तृतीयं स्वप्नस्थानम्" (बृ० ४।३।९।) इत्युपक्रमवाक्ये सन्ध्यशब्देन स्वप्नावस्था एव निर्दिश्यते। तत्र च स्रष्टृतया जीव एवोच्यते 'सृजते' इति कर्तृनिर्देशात्। 'स हि कर्ता' इति तस्यैव ग्रहणादिति ॥१॥

## निर्मातारं चैके पुत्रादयश्च ।३।२।२।

एवं जीवमेव स्वप्ने कामानां निर्मातारमेके शाखिन आमनन्ति "य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः" (का० २।५।८) इति। एषु चक्षुरादिकरणेषु सुप्तेषु स्वव्यापारादुपरतेष्वित्यर्थः। अत्र कामशब्देन काम्यन्त इति कामाः पुत्रादय एव निर्दिष्टाः। "सर्वान् कामान् छन्दतः प्रार्थयस्व" "शतायुषः पुत्रपौत्रान् वृणीष्व" (का० १।१।२३) इति कामानित्यविशेषेणाभिधाय 'पुत्रपौत्रा' नितिनिर्देशात्। एवञ्च तदवस्थायामुपकरणाद्यभावेऽपि जीवस्य सत्यसंकल्पत्वाद्रथादीनां पुत्रादीनाञ्च सृष्टिकर्तृत्वमुपपद्यते ॥२॥

एवं प्राप्ते सिद्धान्तमाह-

## मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ।३।२।३।

तु शब्दः पूर्वपक्षव्यावृत्यर्थः। स्वाप्निकरथादीनां मायामात्रस्वरूपाणां परमात्मैव स्रष्टेत्यर्थः। "जनकस्य कुले जाता देवमायेव निर्मिता" इत्यादाविवात्रापि मायाशब्दस्याश्चर्यार्थकत्वात्। एवञ्च स्वाप्निकानां रथादीनां स्वप्नकालमात्रावसानानां स्वप्नदृङ्मात्रानुभाव्यानामाश्चर्यरूपत्वमेव। अस्याश्चाश्चर्यरूपायाः सृष्टेः कर्तृत्वं परमात्मन एवोपपद्यते। तस्य सर्वदाऽबाधितसत्यसंकल्पत्वात्। न तु जीवस्य तदुपपद्यते। तस्य प्रजापतिवाक्य आविर्भूतस्वरूपसमकाले सत्यकामत्वसत्यसंकल्पत्वानन्तगुणानामाविर्भावित्वश्रवणात्। संसारदशायान्त्वविद्यातिरोहितत्वेन कृत्स्नस्यानभिव्यक्तस्वरूपत्वात् रथादिसृष्टेर्जीवकृतत्वं नोपपद्यते। 'कामं काम' मिति तु परमात्मनो निर्मातृत्वमभिधत्ते। 'न तत्र रथा' इत्यादिश्रुत्या चास्याः श्रुतेरैकवाक्यत्वात्परमात्मन एव तत्कर्तृत्वमिति ॥३॥

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बंधविपर्ययौ ।३।२ ४।

नन्वपहतपाप्मत्वादयो गुणा जीवस्य स्वाभाविकाश्चेत्स्युस्तर्हि कथं न सर्वदोपलभ्यन्त इत्यत्राह पराभिध्यानात्त्वित्यादि । तुशब्दः शंकानिवर्तकः । अस्य जीवस्यानादिपुण्यपापकर्मरूपयाऽविद्यया तिरोहितमपहतपाप्मत्वादिसत्यसंकल्पत्वान्तगुणविशिष्टं स्वाभाविकं रूपं पराभिध्यानात्परस्य परमात्मनोऽभिध्यानात् तदेकचिन्तनलक्षणात् तत्प्रसादादभिव्यज्यते । हि यतः परमात्मनः संकल्पादेवास्य जीवस्य बन्धमोक्षौ श्रूयेते । एतदुक्तं भवति । अनुध्यानाऽविषयीकृतः परमात्मैवास्मै स्वकीयामोघेन संकल्पेन बन्धं प्रददाति । स एव च परमपुरुषो दीनजनानुकम्पी भगवान् यदा मुहुरनुध्यानविषयीकृतश्चेत्प्रसन्नस्तदा स्वसंकल्पान्मोक्षम्प्रयच्छति । तथा चात्र "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्" (मु० ३।१।३) "यदा ह्येवैष एतस्मिन्नदृश्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवति" (तै० २।७) इत्यादयः श्रुतयः प्रमाणतामुपयान्ति ।।४।।

## देहयोगाद्वा सोऽपि ।३।२।५।

सोऽपि तिरोभावोऽपि देहयोगात् सृष्टिकाले देवमनुष्यादिदेहात्मना-परिणतप्रकृतियोगात् वाशब्दात्प्रलयकालेऽनभिव्यक्तनामरूपसूक्ष्मदशापन्नाचिद्योगाद् भवति । यथा भस्मयोगाद्वह्नेः प्रकाशनसामर्थ्यं तिरोभवति तद्वदत्रापि तिरोभाव इति ।।५।।

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ।३।२।६।

इतश्च न स्वाप्नार्था जीवसंकल्परचिताः । यतः स्वाप्निकोऽर्थ इष्टानिष्टयोः सूचकः । "यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने ।" (छा० ५।२।९) इत्यादिश्रुतेरवसी-

यते। तद्विदः स्वप्नदृष्टार्थफलविदश्च 'अथ पुरुषं कृष्णं कृष्णदंतञ्च पश्यति स एनं हन्ति' इत्यादिना स्वाप्नार्थस्येष्टानिष्टसूचकत्वमाचक्षते। जीवसंकल्पकृतत्वेऽनिष्टसूचकत्वं नोपपद्यते। नहि कश्चिदनुन्मत्तः स्वानिष्टकारिणोऽर्थान् सृजति सृष्ट्वा च पश्यति। तस्मात्स्वाप्नसृष्टेः कर्तृत्वं परमात्मन एवोपपद्यते न जीवस्य। सर्वेश्वरः सर्वनियन्ता च परमपुरुषो जीवानुष्ठितानामल्पीयसामपि कर्मणां फलमनुभावयितुं तावन्मात्रसमयावसानान् तज्जीवैकानुभाव्यान् विचित्राकारानर्थानुद्भावयतीति निरवद्यम् ॥६॥

॥ अथ तदभावाधिकरणम् ॥२॥

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ।३।२।७।

एवं स्वप्नावस्थां विचिन्त्य सुषुप्त्यवस्थामिदानीं विचारयति। तत्र सुषुप्तिस्थानमधिकृत्य विभिन्नाः श्रुतय उपलभ्यन्ते। यथा "यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति" ( छा० ८।६।३ ) इति। अन्यत्र "अथ यदि सुषुप्तो भवति यदि न कस्य च न वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते" (बृ० २।१।१९) इति। इतरत्र "य एषोऽन्तर्हृदयाकाशस्तस्मिञ् शेते" (बृ० २।१।१७) इति। अपरत्र च "यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति" ( छा० ६।८।१) इति। तत्र संशयः। किमेषां श्रूयमाणानां नाडीपुरीतद् ब्रह्मणां जीवसुषुप्तिस्थानानां विकल्पः समुच्चयो वेति ? किं तावत्प्राप्तम् ? पर-

---

* पुरीतद्ब्रह्मनाडीनां सुषुप्तिस्थानता श्रुता। संशयस्तत्र चैतेषां विकल्पो वा समुच्चयः ? ॥८॥ निरपेक्षवचःसत्त्वादेकस्य युगपत्तया। अनेकत्र सुषुप्त्याश्चासम्भवात् प्रथमं वरम् ॥९॥ सुषुप्तिस्थानता यस्मात् त्रयाणां तत् समुच्चयः। पर्यङ्कगृहखट्वावत् सम्भवः कार्यभेदतः ॥१०॥

स्परनिरपेक्षाणामेव वचनानां सत्वादेकस्य युगपदनेकसुषुप्त्यसम्भवाच्च विकल्पः ।

इति प्राप्तेऽभिधीयते तदभाव इति । तदभावः स्वप्नाभावः सुषुप्तिर्नाडीषु पुरीतति परमात्मनि च भवतीत्यर्थः । नाड्यादीनां त्रयाणां समुच्चय एव न विकल्पः । कुतः ? तच्छ्रुतेः । तेषां नाडीपुरीतत्परमात्मनां त्रयाणामपि सुषुप्तिस्थानत्वश्रुतेः । समुच्चयाऽस्वीकारे त्रिविधसुषुप्तिबोधकश्रुतीनां संग्रहो न स्यादिति भावः । तत्र नाडीपुरीतत्प्रवेशनं विना ब्रह्मसम्पत्तेरनुपपत्तेर्नाडीपुरीतत्प्रवेशद्वारा ब्रह्मसम्पत्तिरेवात्र बोध्यते ।।७।।

## अतः प्रबोधोऽस्मात् ।३।२।८।

यतः परमात्मैव जीवस्य साक्षात् सुषुप्तिस्थानम् । अत एवास्मात्परमात्मनो जीवस्यागमनं श्रूयते प्रबोधकाले । "सत आगम्य न विदुः सत आगच्छामह इति" (छा० ६।१०।२) ॥ ८ ॥

### * अथ कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥३॥

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ।३।२।९।

एवं सुषुप्तौ सत्सम्पत्तेरनन्तरं जीवप्रबोधे विचार्यते । तत्रान्यः कश्चिदप्रबुद्धयत आहोस्विद्यः सुषुप्तः स एवेति संशये-यथोदके क्षिप्तमुदबिन्दुरुदकरूपतामावहन्न पुनरुद्धरणे स एवोत्तिष्ठति तथा सुषुप्तसमये निश्शेषोपाधिविनिर्मुक्तो ब्रह्मसम्पन्नः प्राक्तनकरणकलेवरसम्बन्धहीनो न स एवोत्थातुमर्हति किन्त्वन्य एव कश्चित्प्रबुद्धयत इति पूर्वः पक्षः ।

तत्र सिद्धान्तमाह-स एव त्विति । तुशब्दः पूर्वपक्षव्यावर्तकः । यस्ता-

---

* अन्यः प्रबुध्यते कश्चित् सुप्त एवाथवा ननु । सता सम्पद्यते योऽसौ कथञ्चोत्थातुमर्हति ॥११॥ देहाद्युपाधिहीनत्वादब्धिस्थितोदबिन्दुवत् । कर्मानुस्मृतिशब्देभ्यो विधेश्च सुप्त एव हि ॥१२॥

यत्पूर्वं सुप्तः स एव जीवः प्रबुद्ध्यते नान्यः । कुतः ? कर्मानुस्मृतिशब्दविधिभ्यः । तत्र कर्मणः सुषुप्तजीवेन प्रागुपार्जितानि कर्माणि तेनैव भोक्तव्यानि न तानि वितथीकर्तुं पार्यन्त इति कर्मणः स एव प्रबुद्ध्यते । अनुस्मृतेरपि-योऽहं सुप्तः स एवाहं प्रबुद्ध इति । शब्दादपि-यः पूर्वं सुप्तः स एव प्रबुद्ध इत्यवगम्यते । "त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति (छा० ।६।१०।२) इति । विधिभ्यश्चापि-"आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ० ४।५।६।) इत्येवमादयो मोक्षार्था विधय आत्मदर्शनमन्तरेण जीवस्य सुषुप्तिमात्रेण मुक्तत्वे तस्यैव पुनरप्रबुद्धत्वे व्यर्थतां गच्छेयुः । न ह्येषामानर्थक्यं युज्यते । तस्माद्यः सुप्तः स एव प्रबुद्ध्यते नान्य इति ॥ ९ ॥

## * अथ मुग्धाधिकरणम् ॥४॥

## मुग्धेऽर्धसम्पत्तिः परिशेषात् ।३।२।१०।

मुग्धपुरुषस्यावस्थेदानीं विचार्यते । किमियं मूर्च्छा प्रसिद्धासु जागरिताद्यवस्थास्वन्तर्गतैवावस्था, अवस्थान्तरं वेति संशयः । तत्रावस्थान्तरस्य लोकशास्त्रयोरनधिगतत्वाज्जागरिताद्यवस्थास्वेव मूर्च्छावस्थाया अन्तर्भावः इति प्राप्तेऽभिधीयते मुग्धेऽर्धसम्पत्तिरिति। मुग्धे पुरुषे यावस्थोपलभ्यते सा न मरणाद्यार्धसम्पत्तिर्मूर्च्छेति । कुतश्चैतत् ? परिशेषात् । अयम्भावः-जागरितस्वप्नयोर्ज्ञानस्य सत्त्वान्मूर्च्छितस्य ज्ञानाभावाच्च मूर्च्छा जागरित-

---

* जागरिताद्यवस्थासु किं मूर्च्छाऽन्तर्भवेन्न वा । भिन्नावस्थाऽप्रतीतेश्चादिमं मैवं कुतो यतः ॥१३॥ ज्ञानभावान्न सा स्वप्नस्तत एव न जागरः । अभिघातादिजन्यत्वात् सुषुप्तिरपि नैव सा ॥१४॥ प्राणोष्मणोश्च सद्भावान्मूर्च्छा नो मरणं किल । मरणाद्यर्धसम्पत्तिर्मूर्च्छा तत् परिशेषतः ॥१५॥

स्वप्नावस्थे। नापि सुषुप्तिर्मुग्धस्य निश्चलोन्मीलिते नेत्रे भयङ्कर वदनं वेपथुमच्छरीरं निश्चलः प्राणो वैरूप्यञ्च सर्वाङ्गे। नैतानि लक्षणानि सुषुप्तस्य दृश्यन्तेऽपि तु निमीलितनेत्रत्वप्रसन्नवदनत्वनिष्कम्पत्वोच्छ्वासादिमत्वादयो धर्मा अभिलक्ष्यन्त इति विलक्षणधर्माश्रयणात्। एवं मरणे प्राणोष्मणोरभावान्मूर्च्छायाञ्च तयोस्सद्भावान्न मूर्च्छा मरणम्। परिशेषादुक्तावस्थाभ्यां भिन्नैव मरणायार्द्धसम्पत्तिर्मूर्च्छेति ॥ १० ॥

## * अथोभयलिङ्गाधिकरणम् ॥५॥

एवं वैराग्यजननाय दोषविशिष्टानां जीवावस्थानां विचारः कृतः। इदानीं जीवप्राप्यस्य ब्रह्मण उभयलिङ्गतोच्यते—

**न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ।३।२।११।**

किं जीवस्य दोषा जागरिताद्यवस्थाप्रयुक्ताः पूर्वमुपदर्शितास्ते तदन्तर्यामिणः परमात्मनोऽपि सन्त्याहोस्विन्नेति संशयः। किं युक्तम्? सन्तीति। कुतः? जागरितस्वप्नाद्यवस्थावति शरीरे परमात्मनोऽप्यवस्थानात्। "यस्य पृथिवी शरीरम्" "यस्य सर्वाणि भूतानि शरीरम्" यस्यात्मा शरीरम्" "यस्य रेतः शरीरम्" इत्यादिषु तस्य सर्वशरीरत्वश्रवणेन रेतःशोणितादिविशिष्टतया सर्वदोषवत्त्वसम्भवात्।

इति प्राप्तेऽभिधीयते—न स्थानतोऽपीति। यतः सर्वत्र श्रुतिस्मृतिषु निर्दोषत्वसकलकल्याणगुणाकरत्वरूपोभयलिङ्गमुभयलक्षणं परं ब्रह्मावगम्यते। अतः स्थानतोऽपि पृथिव्यादीनां जीवस्य चान्तर्यामितयावस्थानतोऽपि

---

* जीवात्मनश्च ये दोषा जागराद्यौ प्रदर्शिताः। तदन्तर्यामिणस्ते किं रामस्य सन्ति नोऽथवा? ॥१६॥ जागरिताद्यवस्थावद्देहे परात्मनः स्थितेः। 'सन्ति' इत्येव युक्तं स्यान्नैवं वाच्यं कुतो यतः ॥१७॥ श्रुतिस्मृतिषु सर्वत्र रामस्योभयलिङ्गता। स्पष्टञ्च 'द्वा सुपर्णौ' इत्यत्राऽदोषता श्रुता ॥१८॥

परस्य ब्रह्मणो जीवस्यैव जागरिताद्यवस्थाप्रयुक्ता दोषा न सम्भवन्ति । अत्र श्रुतयस्तावत्--"अपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः" (छा० ८।७।१।) "निरवद्यं निरञ्जनम्" "यः सर्वज्ञः सर्ववित्" मु० १।१।६।) इत्यादयो ब्रह्मणो निर्दोषत्वमुक्त्वा पुनस्तस्यैव दिव्यकल्याणगुणवत्त्वमभिदधते । स्मृतयोऽपि--"न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा । इति मां योऽभिजानाति कर्मभिर्न स बद्धयते" (गी०) "समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्" ( वि० पु० ) "समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाघृतभूतवर्गः । ( वि० पु० ) इत्याद्याः परमात्मनस्तथा वदन्ति ॥ ११ ॥

## भेदादिति चेन्न प्रत्येकमतद्वचनात् ।३।२।१२।

ननु प्रजापतिवाक्येन जीवस्याप्युभयलिङ्गत्वमुक्तं तथापि देवमनुष्यादिशरीरसम्बन्धरूपावस्थाभेदात्तत्तद्दोषसम्बन्धस्तथा परस्यापि पृथिवीजीवादिशरीरसम्बन्धित्वावस्थाभेदाद्दोषास्स्युरेवेति चेन्न । प्रत्येकमतद्वचनात् । ये परमात्मशरीरत्वेनोक्ताः पृथिव्यादयस्तेषु प्रत्येकमुपादाय दोषाऽसम्बन्धित्ववचनात् । "एष त आत्मान्तर्याम्यमृतः" (बृ० ३।७।३।) इत्यन्तर्यामिणः सर्वत्रामृतत्ववचनेन तत्तत्सम्बन्धकृतदोषरहितत्वस्योक्तत्वात् । जीवस्य तु परमात्मसंकल्पादविद्यातिरोहितापहतपाप्मत्वादिगुणस्य तत्कृतपुण्यपापकर्मफलसुखदुःखभोगरूपदोषस्यावर्जनीयत्वात् ॥ १२ ॥

## अपि चैवमेके ।३।२।१३।

अपि च जीवपरमात्मनोरेकस्मिन्देहेऽवस्थितयोरपि परमात्मनः कर्मफलाभोगित्वेन निर्दोषत्वं जीवस्य तत्फलभोगित्वेन दोषवत्त्वमेके शाखिनोऽधीयते । "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥ (मु० ३।१।१।) इति ॥१३॥

ननु "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" (छा० ६। ३।२।, इति श्रुत्या परमात्मनोऽपि जीवेन सह प्रविष्टत्वाभिधानात् तत्सा-

मान्याच्च परमात्मनोऽपि नामरूपभागित्वेन कर्मवश्यता स्यादेवेत्याशङ्कायामाह-

## अरूपवदेव हि तत्प्रधानत्वात् ।३।२।१४।

देवमनुष्यादिशरीरेषु शरीरित्वेनावस्थितमपि तत् परं ब्रह्म अरूपवदेव पुण्यपापकर्महेतुकनामरूपरहितमेव । कुतः । प्रधानत्वात् । जीवस्या पूर्वकृतपुण्यपापकर्मानुरूपनामरूपव्याकरणकर्तृत्वेन तदुपकारितया तद्भिन्नधर्मवत्येन तत उत्कृष्टत्वात् । अयमभिप्रायः । परमपुरुषः कृपया कर्मपरवशानां जीवानां भुक्तिमुक्तिसिद्धयर्थं तत्तत्पूर्वतनपुण्यपापकर्मानुसारेण तस्य तस्य च नामरूपात्मिकां देवमनुष्यादिरूपां सृष्टिं विधाय स्वयं तन्नियन्तृत्वेन तत्पारवश्याभावतया सर्वदाऽतिरोहितापहतपाप्मत्वादिगुणतया स्वप्रकाशचित्स्वरूप एव जीवकर्मानुगुणं जीवान्प्रवर्तयन्नन्तर्यामितयाऽवतिष्ठते । अतो जीवानां कर्मवश्यत्वं परमात्मनः कर्मवश्यताराहित्यं सम्यगुपपद्यते ॥ १४ ॥

## प्रकाशवच्चावैयर्थ्यात् ।३।२।१५।

"सत्यं ज्ञानमनन्तं ब्रह्म" "तद्देवा ज्योतिषां ज्योतिरुपासते" इत्येवमादिश्रुतीनामवैयर्थ्याद् याथार्थ्यात्प्रकाशस्वरूपं ब्रह्मेत्यवगमात् । "यः सर्वज्ञः सर्ववित्" 'सत्यकामः सत्यसंकल्पः' "निरवद्यं निरञ्जनम्" इत्येवमादिश्रुतीनामवैयर्थ्याद् याथार्थ्यात्सर्वदोषरहितत्वं निखिलदिव्यगुणाकरत्वञ्च ब्रह्मस्वरूपमित्यवगमादुभयलिङ्गत्वं ब्रह्मण उपपन्नमेव ॥ १५ ॥

## आह च तन्मात्रम् ।३।२।१६।

एवञ्च 'सत्यं ज्ञानमनन्तं ब्रह्म' ति श्रुतिर्ज्ञानशब्देन प्रकाशमात्रं ब्रह्मस्वरूपमाह " ॐ यो ह वै श्रीरामचन्द्रः स भगवानद्वैतपरमानन्द आत्मा । यः सच्चिदानन्दाद्वैतैकचिदात्मा भूर्भुवः सुवस्तस्मै वै नमो नम " (रामोत्तरतापन्याम्) । इति श्रुतिश्च चिदेकरसप्रकाशमात्रं ब्रह्मस्वरूपमाह ॥ १६ ॥

## दर्शयति चाथो अपि स्मर्यते ।३।२।१७।

दर्शयति च "पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्" "अणोरणीयान् महतो महीयान्" (का० २।१।२०।) "न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते" (श्वे० ६।२।) "यः सर्वज्ञस्सर्ववित् यस्य ज्ञानमयं तपः (मु० १।१।९।) "पराऽस्य शक्तिर्विविधैव श्रूयते" (श्वे० ६।८।) "भीषास्माद्वातः पवते भीषोदेति सूर्यः" "स एको ब्रह्मण आनन्दः" (तै० २।८।) "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" (श्वे० ६।१९।) इत्येवमादिश्रुतिगणः समस्तदोषरहितत्वमशेषकल्याणगुणाकरत्वं परमात्मनः । स्मर्यते च "सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च" (गी० १५।१५।) "मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय" (गी० ७।७।) "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" (गी० १०।४२।) "सर्वज्ञः सर्वकृत्सर्वशक्तिज्ञानबलर्द्धिमान्" (वि० पु० ५।१।४८।) इत्येवमादिषु तस्य सर्वकल्याणगुणाकरत्वं सर्वदोषरहितत्वञ्चेति न स्थानप्रयुक्तानां दोषाणां परस्मिन्नवकाश इति ॥१७॥

## अत एव चोपमा सूर्यकादिवत् ।३।२।१८।

यतः परमात्मनः पृथिव्यादिषु प्रविष्टस्याप्युभयलिङ्गत्वेन जलप्रतिबिम्बितसूर्यादिवन्न स्थानप्रयुक्तदोषप्रसङ्गः । अत एव शास्त्रेषु सूर्याकाशादीनामुपमाभिः परमात्मोपमीयते। "आकाशमेकं हि यथा घटादिषु पृथग्भवेत् । तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान् ॥ एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" (याज्ञव० ३।१।४) इत्यादिषु ॥१८॥

## अम्बुवदग्रहणात्तु न तथात्वम् ।३।२।१९।

तुशब्दश्चोद्यं दर्शयति । अम्बुवदिति सप्तम्यन्ताद्वतिः । अम्बुदर्पणादिष्वनवस्थित एव सूर्यो भ्रान्त्या तत्रस्थ इव दृश्यते । न तथा पृथिव्यादिषु

परमात्मा भ्रान्त्या गृह्यते । किन्तु 'यः पृथिव्यां तिष्ठन् यस्य पृथिवी शरीरम्' इत्यादौ वस्तुत एव स्थितो गृह्यते । अतो न तथात्वम् । सूर्यस्य जलादौ भ्रान्त्या दृश्यमानत्वात्परमात्मनश्च तत्र परमार्थतः स्थितत्वान्न त्वदुक्तदृष्टान्तसाम्यमिति भावः ॥१६॥

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ।३।२।२०।

चोद्यं समाधत्ते । यथा सूर्यादिप्रतिबिम्बस्य जलान्तर्भावात् जलान्तर्गतस्य जलगतवृद्धिह्रासादिभाक्त्वं न याथार्थ्यरूपेण न च तच्छैत्यादिधर्मेण कदापि सम्बन्धः । एवं पृथिवीचक्षुरादिषु लघुदीर्घस्थानेषु तदन्तर्गतत्वेन तत्तदन्तर्यामितयावस्थितस्याप्यविद्या प्रत्यनीकत्वेन सर्वदोषप्रत्यनीकतया परमात्मनोऽपरिच्छिन्नस्वरूपस्य पृथिव्यादिचक्षुरादिगतवृद्धिह्रासादिभाक्त्वं न वास्तवं न च तत्तद्गतदोषैः कदापि सम्बन्ध इत्येतावतांशेन तयोर्दृष्टान्तयोरुभयोः सामञ्जस्यात् । सिंहो माणवक इत्यादौ तथा दर्शनाच्चोपपद्यते सूर्यकादिदृष्टान्तेन परमात्मनः सर्वदोषरहितत्वम् ॥२०॥

नन्वेनं 'अथात आदेशो नेति नेतीत्यादिनिषेधश्रुतिभिर्ब्रह्मनिष्प्रपञ्चं सन्मात्रं न तस्योक्तोभयलिङ्गत्वमुपपद्यत इत्याशङ्कायामाह–

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ।३।२।२१।

अत्र "द्वे वाव ब्रह्मणो रूपे मूर्तञ्चैवामूर्तञ्च" (बृ० २।१।१) इत्यादिना यद्द्विविधं ब्रह्मणो रूपं प्रतिज्ञातं तस्यैव 'नेति नेति' इति प्रतिषेधे श्रुतेरुन्मत्तत्वप्रसक्त्या तत्प्रतिषेधानुपपत्तेः प्रकृतैतावत्त्वं हि प्रतिषेधति । यद्रूपद्वयं प्रकृतं तस्य ब्रह्मरूपस्यैतावत्त्वं तदेतन्मात्रमेव ब्रह्मरूपं नास्तीति प्रतिषेधति । इतोऽप्यधिकं ब्रह्मणो रूपमस्तीति ज्ञापनाय । यतो निषेधानन्तरं ततः पूर्वोक्ताद्रूपद्वयाद्ब्रह्मणो भूयो गुणजातं ब्रवीति । "न ह्येत-

स्मादिति नेत्यन्यत्परमस्त्यथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्" (बृ० २।३।६।) इति । नेति नेतीति निर्दिष्टादेतस्माद्-ब्रह्मणोऽन्यत्परं स्वरूपतो गुणतश्चोत्कृष्टं न ह्यस्तीत्यर्थः । तस्मादत्र नेति नेतीत्यादिना न ब्रह्मणस्सविशेषत्वं निषिध्यतेऽपि तु पूर्वप्रकृतेयत्तामात्रमि-त्युभयलिङ्गत्वमस्त्येव ब्रह्मणः ॥२१॥

यस्य ब्रह्मणो 'मूर्तं चैवामूर्तञ्चे'ति द्वे रूपेऽभिहिते तद्ब्रह्म चक्षुरादी-न्द्रियाऽगोचरमित्याह—

## तदव्यक्तमाह हि ।३।२।२२।

तद्ब्रह्म प्रमाणान्तरेण न व्यज्यते । यत आह श्रुतिः । न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्" "न चक्षुषा गृह्यते नापि वाचा" इति ॥२२॥

तर्हि ब्रह्मणः प्रत्यक्षाभावात्कदापि कस्यापि मोक्षो न स्यादित्याह—

## अपि संराधने प्रत्यक्षानुमानाभ्याम् ।३।२।२३।

संराधनं सम्यगाराधनं प्रीतिपूर्वकं तदेकचिन्तनं तस्मिन् सत्येवास्य साक्षात्कारो भवति नान्यत्रेति श्रुतिस्मृतिभ्यां ज्ञायते । श्रुतयस्तावद् "ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः" (मु० ३।१।८।) "यदा पश्यः पश्यते रुक्मवर्णम्" ( मु० ३।१।३। ) "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" (मु० २।२।८।) "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्" ( मु० ३।२।३ ) इत्यादयः । स्मृतयोऽपि "भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तप" । (गी० ११।५४)इत्येवमाद्याः । आभ्यां श्रुति-स्मृतिभ्यामस्य परमपुरुषस्य साक्षात्कारो भवतीति ॥२३॥

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ।३।२।२४।

अतोऽपि प्रकृतैयत्तायाः निषेधो न मूर्तादिविशिष्टस्य । "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति" (बृ० १।४।१०।) इत्यादिश्रुतिषु साक्षात्कृतब्रह्मस्वरूपाणां वामदेवादीनां दर्शने प्रकाशादिवज्ज्ञानानन्दादिस्वरूपवन्मूर्तादिप्रपञ्चविशिष्टताया अपि ब्रह्मगुणत्वावैशेष्यं प्रतीयते । ज्ञानानन्दादयश्च वामदेवादीनां संराधने कर्मण्यभ्यासादेवोपलभ्यन्ते । तथैव मूर्तामूर्तादिविशिष्टत्वमप्यविशेषेण प्रतीयते ॥२४॥

## अतोऽनन्तेन तथा हि लिङ्गम् ३।२।२५।

अतो निरुक्तेभ्यो हेतुभ्योऽनन्तेनासंख्यातेन कल्याणगुणगणेन युक्तत्वं ब्रह्मणः सिद्धम् । तथा सत्युभयलिङ्गं ब्रह्मोपपन्नतरमेव ॥२५॥

### * अथाहिकुण्डलाधिकरणम् ॥६॥

## उभयव्यपदेशात्त्वहिकुण्डलवत् ।३।२।२६।

"द्वे वाव ब्रह्मणो रूपे मूर्तञ्चामूर्तञ्च" (बृ० ३।१।१।) इति सर्वस्यापि मूर्तामूर्तात्मकप्रपञ्चजातस्य ब्रह्मस्वरूपत्वं प्रतिपादितम् । कथं तस्य ब्रह्मरूपत्वं कथञ्च चिदचितोर्विशेषणत्वमिति ब्रह्मणश्चिदचित्स्वरूपविषये

---

* उभयव्यपदेशेन विचिकित्सा भवेदियम् । परिणामो हि किं ब्रह्मस्वरूपस्यैव सम्मतः ॥१९॥ अचिद्रूपेण चाहोस्वित् प्रभाप्रभावतोरिव । एकजात्योत देहत्वाद् ब्रह्मविशेषणत्वतः ॥२०॥ जीववत्, तत्र किं युक्तमाद्यं यथाऽहिकुण्डलम् । श्रुतेः कोपस्तयात्वे स्याद् विकारित्वादिदोषतः ॥२१॥ द्वितीयं तद् न तच्चापि कुतश्चेदभिधीयते । बाध्यते ब्रह्मणः सर्वशब्दानां वाच्यता तथा ॥२२॥ खण्डमुण्डादिभिः शब्दैरेका गौरुच्यते न

विचार्यते । तत्र "अस्मान्मायी सृजते विश्वमेतत्" (श्वे० ४।९) इति भेदव्यपदेशात् । "सर्वं खल्विदं ब्रह्म" 'तत्वमसि' इति चाभेदव्यपदेशादित्युभयव्यपदेशात्संशयः । किं ब्रह्मस्वरूपस्यैवाचिद्रूपेण परिणामः स्वीक्रियतेऽथवा प्रभाप्रभावतोरिवैकजातियोगेन आहोस्विज्जीववदचितोऽपि ब्रह्मशरीरतया तद्व्याप्यतया तदपृथक्सिद्धविशेषणत्वेनाभेदव्यपदेश इति । किं युक्तम् ? ब्रह्मण एवाचिद्रूपेणाहिकुण्डलवत् परिणामः स्यात । यथाहेः स्वरूपेणैव कुण्डलभावस्तद्वदित्यर्थः ॥२६॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् ।३।२।२७।

वाशब्दः पक्षनिवर्तकः । ब्रह्मणश्चिद्रूपतया परिणतिस्वीकारे तस्य विकारित्वादिदोषापत्त्या निर्दोषत्ववादिनीनामपरिणामित्ववादिनीनाञ्च श्रुतीनां व्याकोपः स्यात् । तस्माद्यथा सौरं तेजस्तदाश्रयश्च सूर्यस्तयोरुभयोस्तेजस्त्वात्तेजस्त्वेनैकजातियोगादभिन्नत्वं स्वरूपतो भेदाच्च भिन्नत्वं तथाऽचित्प्रपञ्चस्यापि ब्रह्मणो रूपत्वमिति ॥२७॥

## पूर्ववद्वा ।३।२।२८।

वाशब्द उक्तपक्षद्वयनिवर्तकः । पूर्वत्रोभयव्यपदेशोपपत्त्यर्थं ब्रह्मणो निर्दोषत्वनिष्पत्त्यर्थञ्च 'अंशो नानाव्यपदेशात्' (ब्र० सू०) 'प्रकाशादिवत्तु नैवं परः' (ब्र० सू०) इत्यादौ सम्यगुक्तम् । यथा जीवस्यापृथक्सिद्धविशेषणत्वेन ब्रह्मणोंऽशत्वम् तथाचितोऽप्यपृथक्सिद्धविशेषणत्वेनांशत्वमेव । तत्रोभयोः स्वरूपस्य भेदाद् भेदव्यपदेशो विशिष्टस्यैक्यादभेदव्यपदेशोऽपि मुख्य एवेति सर्वं परिहृतम् ॥२८॥

---

यत् । तद् देहत्वात् प्रकारत्वेनाचितो राघवांशता ॥२३॥ स्वरूपस्य च भिन्नत्वाद्विशिष्टस्याथ चैक्यतः । उभयव्यपदेशस्य मुख्यतैव सुसङ्गता ॥२४॥ प्रकारांशे विकारित्वं विशेष्यांशे न कर्हिचित् । ततश्च निर्विकारत्वश्रुतेः कोपो न सम्भवेत् ॥२५॥

## प्रतिषेधाच्च ।३ २।२९।

"स वा एष महानज आत्माऽजरोऽमरः" ( बृ० ४।४।२५। ) 'नास्य जरयैतज्जीर्यति' (छा० ८।१।५।) इत्यादिभिरचिद्धर्माणां प्रतिषेधाच्च न ब्रह्मणोऽपरिणामित्वभङ्गः। विशेषणभूताचित्तत्वस्य विकारित्वेऽपि विशेष्यांशस्य निर्विकारित्वम्। प्रतिपादितं चैतत्सर्वमंशो नानाव्यपदेशादित्यत्रेति तत एवावगन्तव्यम् ॥२९॥

### * अथ पराधिकरणम् ॥७॥

## परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ।३।२।३०।

इदानीमस्मादुभयलिङ्गाद् ब्रह्मणोऽपि किञ्चित्परं तत्वं स्यादिति विचार्यते। तत्रायं संशयः। जगन्निमित्तोपादानकारणाद् ब्रह्मणः परमपि किञ्चित्तत्वमस्ति न वेति। अतो ब्रह्मणः परमपि तत्वमस्ति। कुतः ? सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः। "अथ य आत्मा स सेतुर्विधृतिः" (छा० ८।४।१।) इति सेतुत्वेन व्यपदिष्टस्यात्मनः 'एतं सेतुं तीर्त्वा' (छा० ८।४। २) इति तरितव्यत्वव्यपदेशात्। एवञ्च तीर्त्वायदवाप्स्यति तदतः परमेवेत्यवगम्यते। 'चतुष्पाद्ब्रह्म' (छा० ३।१८।२।) इति श्रुतावुन्मानत्वपरिमितत्वव्यपदेशात्ततः परमपरिमितं तत्वमप्यस्तीति प्रतीयते। "अमृतस्यैष सेतुः" ( मु० २।२।५। ) इत्यमृतप्रापकात्सेतुशब्दनिर्दिष्टादस्मात्परं प्राप्यभूतममृतशब्दवाच्यं किमपि तत्वमस्तीतिप्राप्यप्रापकसम्बन्धादवसीयते।

---

* उपादाननिमित्तं यो जगतश्चास्य कारणम्। किं ततो राघवाच्चापि तत्त्वमस्ति परं न वा ? ॥२६॥ उन्मानसेतुसम्बन्धभेदानां श्रवणाच्छ्रुतौ। अस्ति तदिति चेन्नो यदुन्मानित्वमुपासितुम् ॥२७॥ असम्भेदाय सेतुत्वं तत्प्राप्तौ तदुपायता। सम्बन्धोक्तिस्ततस्तद्वत्तत्परस्य निषेधनात् ॥२८॥ भेदोक्तेश्चापि हेतुत्वं नास्त्येव परबोधने। तस्माद्रामात् परं तत्त्वं नास्तीति वैदिकं मतम् ॥२९॥

तथा 'परात्पर. पुरुषमुपैति दिव्यम्' ( मु० ३।२।८। ) 'परात्परं यन्महतो महान्तम्' (तै० १।५।) इति च भेदव्यपदेशादेतेभ्यो हेतुभ्यः परस्माद् ब्रह्मणोऽपि प ' किञ्चिदस्तीति ज्ञायते ॥३०॥

इति प्राप्तेऽभिधीयते–

## सामान्यात्तु ।३।२।३१।

तुशब्दः पूर्वपक्षनिरासार्थः। 'एषां लोकानामसम्भेदाय' (छा० ८।४।०।) इत्युत्तरवाक्यात् प्रसिद्धसेतुर्यथा जलमर्यादाव्यवस्थापकः। एवं ब्रह्मणोऽपि सर्वजगन्मर्यादाव्यवस्थापकत्वेन प्रसिद्धसेतुसामान्यात्सेतुत्वव्यपदेशो न तरितव्यत्वेनेति न ततः किञ्चित्परमस्ति। 'एतं सेतुं तीर्त्वेति तरतिरत्र' 'मीमांसाशास्त्रं तीर्त्वा वेदार्थमधिगच्छतो' इत्यादिवत्प्राप्त्यर्थक एव ॥३१॥

## बुद्ध्यर्थः पादवत् ।३।२।३२।

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० २।१) 'अणोरणीयान्महतो महीयान्' (का० १।१।२०) इत्यादिषु श्रुतस्यानन्तस्यापरिच्छिन्नस्यानुपमस्य जगत्कारणस्य ब्रह्मणः 'चतुष्पाद्ब्रह्म' (छा० ३।१८।२) इत्युन्मानव्यपदेशो बुद्ध्यर्थ उपासनार्थं एव। पादवत्। ब्रह्मप्रतीकस्य मनसो वाक्प्राणचक्षुः श्रोत्राण्युपासनार्थं पादत्वेन व्यपदिष्टानितद्वदित्यर्थः ॥३२॥

एवमपि स्वयमपरिच्छिन्नस्वरूपस्य ब्रह्मणः कथमुपासनायाप्युन्मानसम्भव इत्याशङ्कायामाह–

## स्थानविशेषात्प्रकाशादिवत् ।३।२।३३।

प्रतिपन्नदिक्पृथिव्यन्तरिक्षादिस्थानविशेषसम्बन्धित्वेनोन्मितत्वानुसन्धानं युज्यते। यथा विततस्यापि प्रकाशादेर्घटादिपरिच्छिन्नोपाध्यन्तर्गतस्य परिच्छिन्नत्वेन दर्शनं तद्वदित्यर्थः ॥ ३३ ॥

## उपपत्तेश्च ।३।२।३४।

'अमृतस्यैष सेतुः' इतिप्रापकसम्बन्धव्यपदेशात्परमस्तीत्यपि न युक्तम्। "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्" (मु० ३।२।३।) इति परमात्मनः प्राप्यभूतस्य स्वप्राप्तावनन्योपायत्वश्रवणात्स्वस्यैवोपायोपेयत्वोपपत्तेरिति ॥ ३४ ॥

## तथान्यप्रतिषेधात् ।३।२।३५।

यच्च 'परात्परं पुरुषमुपैति दिव्यम्" (मु० ३।२।८।) इति भेदव्यपदेशात्ततोऽपि परमस्तीत्युक्तं तन्निरस्यति। तथाऽन्यस्य ब्रह्मणः परस्य प्रतिषेधात्। 'यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोस्ति कश्चित्' (श्वे० ३।९।) 'न चास्य कश्चिज्जनिता न चाधिपः (श्वे० ६।६) 'न तत्समश्चाभ्यधिकश्च दृश्यते' (श्वे० ६।८।) इत्येवमादिभ्यो ब्रह्मपरस्यान्यस्य प्रतिषेधात् ॥ ३५ ॥

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ।३।२।३६।

अनेन 'अणोरणीयान्महतो महीयान्' इत्येवमादिभिर्ब्रह्मणः किञ्चिदपि परं नास्तीति प्रतिषेधद्वारा तस्य सर्वव्यापकत्वप्रतिपादनेन सर्वगतत्वमपि सिद्ध्यति। कुतः ? आयामशब्दादिभ्यः। सर्वव्याप्तिवाचिशब्देभ्यो ब्रह्मणः सर्वगतत्वं सिद्ध्यत्सर्वपरत्वमपि सिद्ध्यति। ते च शब्दाः "तेनेदं पूर्णं पुरुषेण सर्वम्" (श्वे० ३।९।) "नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनिम्" ( मु० १।१।६। ) "ब्रह्मैवेदं सर्वम्" (बृ० २।५।१।) इत्यादयः ॥ ३६ ॥

### * अथ फलाधिकरणम् ॥८॥

## फलमत उपपत्तेः ।३।२।३७।

एवं प्रापकस्य जीवस्योपासिषा सिध्यर्थं तत्स्वरूपमुपवर्ण्य तत्प्राप्यभू-

---

* फलं भोगापवर्गादि यागोपासादिकर्मणाम्। तेनैव कर्मणा किं वा

तस्य परमात्मन उभयलिङ्गत्वं सर्वपरत्वञ्चाभिधाय ततः परमपुरुषादेवो-पासकस्यापवर्गादिफलप्राप्तिरितीदानीं निश्चीयते । तत्रेदमिष्टानीष्टलक्षणं फलं भजनहवनादिरूपात्कर्मणो भवत्याहोस्वित्तत्कर्मभिः समाराधितात्परस्मात्पुरुषादिति संशये कर्मण इति । कुतः ? लोके कृष्यादिकर्मकारिण एव फलसम्पत्तिदर्शनात् । कर्माननुतिष्ठतश्च तददर्शनादिति प्राप्तेऽभिधीयते-फलमत इति । भोगापवर्गादिलक्षणं फलमतः परमपुरुषादेव सम्पद्यते । कुतः ? उपपत्तेः । क्षणप्रध्वंसिनः कर्मणोऽसम्बद्धस्याचेतनस्य च कालान्तरभाविफलप्रदत्वायोगात् । न चापूर्वकल्पनयापीष्टसिद्धिस्तस्याप्यचेतनत्वात् । तस्मात्सर्वसमीक्षाकारिणः परस्मात्पुंस एव फलं भवति ॥ ३८ ॥

## श्रुतत्वाच्च ।३।२।३८।

सर्वभोगापवर्गादिलक्षणं फलं परमात्मैव प्रयच्छतीति श्रूयते "स वा एष महानज आत्मान्नादो वसुदानः" (बृ ४।४।२४) इति ॥३८॥

## धर्मं जैमिनिरत एव ।३।२।३९।

अतः श्रुत्युपपत्तिभ्यामेव 'रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्' 'कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्" (छा० ५।१०।७) 'अथ खलु क्रतुर्मयः पुरुषो यथाक्रतुरस्मिल्लोके भवति तथेतः प्रेत्य भवति" (छा० ३।१४।१) "पुण्यः पुण्येन कर्मणा भवति पापः पापेन" इत्यादिषु पुण्यस्य कर्मणः पुण्यशरीरप्राप्तिहेतुत्वश्रवणात् पापकर्मणः पापशरीरहेतुत्वश्रवणात् तदतिरिक्तस्येश्वरस्याश्रवणाच्च । कृष्यादियज्ञादिकारिणामेव तत्तत्फलप्राप्तिदर्शनात् । तदकारिणां तत्तत्फलप्राप्त्यदर्शनाच्च कर्मण एव फलदातृत्वोपपत्तेरितिश्रुत्युपपत्तिभ्यां धर्ममेव फलदातारं जैमिनिराचार्यो मन्यते । कर्मणः क्षणिकत्वेऽप्यपूर्वद्वारा फलमिति जैमिनेर्मतम् ॥ ३९ ॥

---

तदाराधितराघवात् ॥३०॥ कृष्यादेः कर्मणो लोके वेदे यागादिकर्मणः । अपूर्वमचिवात्, कर्मराहित्ये तु फलं न हि ॥३१॥ अचेतनतया कर्मापूर्वयोस्तन्न सम्भवेत् । फलं तच्चेतनाद्रामादुपपत्तेः श्रुतेरपि ॥३२॥

## पूर्वन्तु बादरायणो हेतुव्यपदेशात् ।३।२।४०।

तुशब्दः पक्षनिवर्तकः । पूर्वं पूर्वोक्तं परमपुरुषमेव फलप्रदातारं भगवान् बादरायण आचार्यो मन्यते । कर्मणोऽपूर्वस्य वा ह्यचेतनत्वेन कर्मफलस्वरूपानभिज्ञतया तत्फलदानासमर्थत्वात्तयोरिति कर्मादिस्वरूपतद्विनियोगसाक्षात्कारवतोऽपरिच्छिन्नस्य चिदात्मनः स्वप्रकाशस्वरूपस्य सर्वज्ञसर्वशक्तिमतः परमपुरुषस्य तु फलदातृत्वं युक्ततरमेव । कुतः ? हेतुव्यपदेशात् । एष ह्येवैनं साधु कर्म कारयति तं यमन्वानुनेषत्येष एवैनमसाधु कर्म कारयति तं यमेभ्यो लोकेभ्यो नुनुत्सते" (कौषी० ३।८) इति परमपुरुषस्यैव कारयितृत्वेन कर्मसिद्धिहेतुव्यपदेशात् । तस्यैव च कर्मफलभूतोर्ध्वाधोगतिप्राप्तिहेतुव्यपदेशात् ॥ ४० ॥

## स्मर्यते च ।३।२।४१।

स्मर्यते च कर्मफलप्रदाता परमात्मैव ।

"स तया श्रद्धया युक्तस्तस्याराधनमीहते ।

लभते च ततः कामान् मयैव विहितान् हि तान् ।" (गी० ।५।३।)

इति । तस्मात्कर्मफलं परमात्मन एवेति सिद्धम् ॥ ४१ ॥

इति श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये तृतीयाध्यायस्य द्वितीयोः पादः ॥२॥



श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया
आनन्दभाष्ये

# तृतीयाध्यायस्य तृतीयः पादः ।

## * अथ सर्ववेदान्तप्रत्ययाधिकरणम् ॥१॥

### सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ।३।३।१।

सर्वेषु वेदान्तेषु तत्र तत्र श्रूयमाणाया दहरवैश्वानरादयो विद्यास्तासां सर्वासां किं विद्यान्तरत्वमाहोस्विदेकविद्यात्वमिति संशये विद्याभेदाभावे प्रकरणान्तरे पुनस्तत्पाठस्यायुक्तत्वात्प्रकरणान्तरस्य विद्याभेदहेतुत्वावगमाद्विद्यान्तरत्वमिति प्राप्तेऽभिधीयते-सर्ववेदान्तप्रत्ययमिति । सर्वेषु वेदान्तेषु प्रतीयमानमुपासनमेकमेव । कुतः ? चोदनाद्यविशेषात् । चोदनाद्यभेदात् । आदिशब्देन शाखान्तराधिकरणसूत्रान्तरोक्ता अभेदहेतुभूताः फलसंयोगरूपसमाख्या गृह्यन्ते । चोदनाफलसंयोगरूपसमाख्यानामविशेषादभेदादित्यर्थः । चोदना हि-'उपासीत विद्यात्' इत्युपासनवेदनयोः पर्यायवाचित्वेनाभिन्ना । फलसंयोगोऽप्युभयत्र ब्रह्मप्राप्तिरूप एक एव । उभयत्र वैश्वानरविद्येति समाख्या चैकैव । एषां चोदनादीनां सर्वासु शाखास्वविशेषात्तत्र तत्र शाखासु निरुक्तानामेकविद्यात्वमेव ॥१॥

यत्तूक्तं प्रकरणान्तरस्य विद्याभेदहेतुत्वं तदनूद्य परिहरति-

### भेदान्नेति चेदेकस्यामपि ।३।३।२।

प्रकरणान्तरात् विधेये भेदाच्च न विद्यैक्यमिति चेन्न, एकस्यामपि

---

* वेदान्ते श्रूयमाणा या विद्या वैश्वानरादयः । तासामनेकता यद्वा ह्येकता ? किं भवेदिह ? ॥१॥ प्रकरणान्तराद्धेतोरनेकत्वं न चान्यथा । चोदनाफलसंयोगरूपाख्यादेरभेदतः ॥२॥ एकत्वैवेति युक्तं स्यात् प्रकरणान्तरं पुनः । कर्तृभेदेन विज्ञेयं न तु विद्याविभेदतः ॥३॥

विद्यायां कर्तृभेदात्प्रकरणान्तरमुपपद्यते । एकस्मिन्नेव कर्तरि यदि प्रकरणान्तरं स्यात्तदा विधये भेदाद्विद्याभेदः स्यात् ॥२॥

## स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ३।३।३।

एवमप्याथर्वणिकानां शिरोव्रताद्यपेक्षा दृश्यतेऽन्येषाञ्च नास्तीति विद्याभेदः स्यादिति समाधीयते-शिरोव्रतं न विद्याङ्गमपि तु स्वाध्यायस्यैव यतः समाचारे वेदव्रतोपदेशपरे ग्रन्थे तथात्वेन स्वाध्यायाङ्गत्वेन शिरोव्रतमपि वेदव्रतत्वेन समामनन्ति "नैतदचीर्णव्रतोऽधीते" (मु० ३।२।११।) इत्यध्ययनशब्दाधिकारादित्यवगम्यते । सववच्च तन्नियमः । यथा हि सवसम्बन्धिनः सप्त होमाः सौर्यादयः शतौदनपर्यन्ता आथर्वणोक्तैकाग्निसम्बन्धित्वेन तत्रैवानुष्ठेया न शाखान्तरोक्तत्रेताग्निषु तथैवाधीतशब्दाच्च तदध्ययन एव शिरोव्रतस्य नियमो नान्यत्र ॥३॥

## दर्शयति च ।३।३।४।

"सर्वे वेदा यत्पदमामनन्ति" (का० २।१५।) इति श्रुतिर्दर्शयति सर्ववेदान्तप्रतिपाद्यस्य ब्रह्मण एकत्वेन तत्प्रतिपादकवाक्योक्तानां सर्वासां वेदान्तविद्यानामेकत्वम् । एवमन्यत्रापि योज्यम् ॥४॥

एवं विद्यैक्यं दृढीकृत्य तत्प्रयोजनमाह—

## उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ।३।३।५।

च शब्दोऽवधारणार्थः । एवं सर्ववेदान्तेषु दहराद्युपासने समाने सत्यन्यत्रोक्तानामन्यत्रोपसंहारः कर्तव्यः । कुतः ? अर्थाभेदात् । गुणानां विद्याङ्गत्वेन तदुपकाररूपप्रयोजनाभेदात् । गुणानां विद्योपकारित्वाच्च वेदान्तान्तरोक्तगुणानां वेदान्तान्तरेऽवश्यमुपसंहारः कर्तव्यः । विधिशेषवत् । यथा विधिशेषाणामग्निहोत्रधर्माणामग्निहोत्रस्य सर्वत्रैक्यात्सर्वत्रोपसंहारः क्रियते तद्वदिति ॥५॥

* अथान्यथात्वाधिकरणम् ॥२॥

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ।३।३।६।

वाजसनेयके "अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्" (बृ० १।३।७।) इत्युद्गीथविद्याम्नायते । तथा छान्दोग्येऽपि "अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" (छा० १।२।७।) इति सैव विद्या श्रूयते । तत्रायं संशयः । किमुभयत्रापि विद्यैक्यमेवाहोस्विद्विद्याभेद इति । चोदनाद्यविशेषाद्विद्यैक्यमिति पूर्वः पक्षः । सिद्धान्तस्तु—उभयत्र प्राणदृष्ट्यैवोद्गीथ उपासनमविशेषेण श्रुतम्-तथापि "ओमित्येतदक्षरमुद्गीथमुपासीत" (छा० १।१।१) उद्गीथमाजह्रुरनेनैतानभिहनिष्यामः" (छा० १।२।१।) इत्युद्गीथावयवे प्रणव एव प्राणदृष्ट्योपासनं छन्दोगानाम् । वाजिनान्तु समग्रोद्गीथे प्राणदृष्ट्योपासनम् "हन्तासुरान्यज्ञ उद्गीथेनात्ययामः" (बृ० १।३।१।) इति । तथा चोभयत्र रूपभेदाद्विद्याभेद एवेति । सूत्रार्थयोजना त्वेवम् । उभयत्र प्राणस्य-कर्तृकर्मत्वभेदेनान्यथात्वाद्भिन्नाकारत्वादाकारभेदेनोपास्यभेदादन्यथात्वमेव शब्दान्न विद्यैक्यमितीमां शङ्कामपरिहरति पूर्वपक्षी—इति चेन्नेति । कुतः ? अविशेषादुभयत्र विशेषाभावाद्विद्यैक्यमिति ॥६॥

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ३।३।७।

न वेतिपक्षनिवर्तकौ । न ह्यत्र विद्यैक्यमुपपद्यते । कुतः ? प्रकरणभेदात् । छान्दोग्येह्युद्गीथावयवप्रणवोपासना प्रक्रम्यते 'ओमित्येतदक्षरमुद्गीथेनात्ययामः' (बृ० १।३।१।) इति । ततश्च रूपभेदोऽस्त्येवेति विद्याभेदः । परोवरीयस्त्वादिवत् । यथा समानायामपि शाखायामुद्गीथोपासने हिर-

---

* एका भिन्नाऽथवोद्गीथविद्या छन्दोगवाजिनाम् । किं युक्तं स्यादिहाभिन्ना चोदनाद्यविशेषतः ॥४॥ उपास्यरूपभेदेन भिन्ना चैवेति निश्चयः । संज्ञैक्येऽपि च विद्यानां भिन्नत्वमग्निहोत्रवत् ॥५॥

ष्मयपुरुषदृष्टेः परोवरीयस्त्वादिविशिष्टदृष्टिर्भिन्नैव । तथैव प्रकृतेऽपि ज्ञेयम् ॥ ७ ॥

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ।३।३।८।

ननु शाखाद्वये विद्यैक्यमस्ति । कुतः ? संज्ञातः । उभयत्रोद्गीथविद्येति संज्ञाया एकत्वादितिचेत् तत्संज्ञैक्यं विधेयभेदेऽप्यस्त्येव यथा नित्याग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे चाग्निहोत्रसंज्ञाया एकत्वेऽपि कर्मणो भिन्नत्वम् ॥ ८ ॥

## व्याप्तेश्च समञ्जसम् ।३।३।९।

यथा प्रथमप्रपाठके उपक्रमवाक्ये प्रणवस्योपास्यत्वं तथेतरास्वपि विद्यासूद्गीथावयवभूतप्रणवस्यैवोपास्यत्वव्याप्तेः । एवं 'उद्गीथमुपासाञ्चक्रिरे' (छा० १।२।७।) इत्यादौ मध्येऽपि प्रणवविषयकोपासनमेव समञ्जसम् ॥९ ॥

### * अथ सर्वाभेदाधिकरणम् ॥३॥

## सर्वाभेदादन्यत्रेमे ।३।३।१०।

"यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च" (छा० ५।१।१।) इतिच्छन्दोगाः प्राणविद्यां समामनन्ति । वाजिनोऽप्येवम् । इत्युभयत्र समानरूपत्वाद्विद्यैक्यम् । परन्तु कौषीतकिनस्तु वसिष्ठत्वादिगुणराहित्येनेति सर्वत्र विद्यैक्यमुत नेति संशये न विद्यैक्यम् । कुतः ? रूपभेदात् । एकत्र ज्यैष्ठ्यवसिष्ठत्वादिगु-

---

* या कौषीतकिनाम्प्रोक्ता प्राणविद्याऽत्र सा किमु ? । छन्दोगवाजिनां प्राणविद्यातो भिद्यते न वा ? ॥६॥ भिद्यते रूपभेदेन नैतद् युक्तं प्रतीयते । सर्वाभेदाद्वसिष्ठादेः सम्बन्धोऽस्तीति निश्चयात् ॥७॥ वसिष्ठत्वादिकानाञ्च वागादिवर्तिनां यतः । ज्येष्ठत्वादि न सिद्धयेत प्राणहेतुकतां विना ॥८॥

र्गुणैर्वत उपास्यतया श्रूयते। अपरत्र तु तद्रहित इत्युपास्यरूपभेदो विद्याभेदसाधक इति प्राप्तेऽभिधीयते–सर्वाभेदादन्यत्रेम इति। न ह्यत्रविद्याभेदः अन्यत्र प्राणविद्यायामपीमे वसिष्ठत्वादयो गुणा उपास्यतया विहिता एवेति। कुतः ? सर्वाभेदात् यद्यपि कौषीतकिनां प्राणविद्यायां वसिष्ठत्वादिकं न शब्दतश्चोक्तं तथापि वागादिगतवसिष्ठत्वादिगुणानां प्राणहेतुकत्वानुसन्धानमन्तरेण प्राणस्य ज्यैष्ठयादिकमप्यनुपपन्नं स्यात्तस्मात्कौषीतकिनां प्राणविद्यायामपि वसिष्ठत्वादिसम्बन्धवतः एव प्राणस्योपास्यत्वमिति न रूपभेदोऽतो विद्यैक्यमेवेति ॥ १० ॥

## * अथानन्दाद्यधिकरणम् ॥४॥

## आनन्दादयः प्रधानस्य ।३।३।११।

पूर्वाधिकरणन्यायेन यैर्गुणैर्विना ब्रह्मस्वरूपस्यानुसन्धानमेव नोपपद्यते तेषां विचारः प्रस्तूयते। तत्र ब्रह्मस्वरूपनिरूपकाणां धर्माणां सर्वासु ब्रह्मविद्यासूपसंहारोऽस्ति न वेति संशये प्रकरणाधीतानान्तूपसंहार आवश्यको नत्वनधीतानाम्प्रमाणाभावादिति प्राप्तेऽभिधीयते–आनन्दादयः प्रधानस्येति पूर्वसूत्रादभेदादित्यनुवर्तते। प्रधानस्य गुणवतो ब्रह्मणः सर्वेपूपासनेष्वभेदादानन्दादयो गुणाः सर्वत्रोपसंहर्तव्याः। गुणानां गुण्यतिरिक्तेऽनवस्थानादितिभावः ॥११॥

नन्वेवं प्रियशिरस्त्वादीनामपि ब्रह्मगुणत्वात्सर्वत्रोपसंहारः कर्तव्य इत्याह–

---

* सर्वासु ब्रह्मविद्यासु चानन्दाद्युपसंहृतिः। नास्त्यथोऽस्त्यत्र किं युक्तं प्रमाणाभावतो न वै ॥९॥ नैतत् सर्वासु विद्यासु ह्यभेदो ब्रह्मणो यतः। कम्बुग्रीवादिमत्तापि तत्र यत्र घटो भवेत् ॥१०॥ किं न सा स्यात्तदानन्दादिस्वरूपानुबन्धिनाम्। यतः प्रियशिरस्त्वादेः स्वरूपगुणता न हि ॥११॥ नैवोपसंहृतिस्तेषां तस्मात् तत्रेति बुध्यताम्। अनुचिन्तयितुं ज्ञेयं तथा ब्रह्मनिरूपणम् ॥१२॥

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ।३।३।१२।

प्रियशिरस्त्वादीनां सर्वथाप्राप्तिस्तेषां ब्रह्मस्वरूपगुणत्वाभावात् केवलं ब्रह्मणः पुरुषविधत्वनिरूपणमात्रोपयोगित्वात्प्रियशिरस्त्वादीनाम् । नोचेच्छिरःपक्षादीनामवयवत्वे तदवयविनो ब्रह्मणोऽप्युपचयापचयौ स्याताम् । तथा सति निर्विकारत्वाभिधायिनीनां श्रुतीनां विरोधः स्यात् ॥१२॥

## इतरे त्वर्थसामान्यात् ।३।३।१३।

उपचयापचयकरेभ्यः प्रियशिरस्त्वादिभ्य इतरे ब्रह्मस्वाभाविकगुणत्वेन सदैकरसाः ज्ञानानन्दादयो ब्रह्मस्वरूपनिरूपकधर्मत्वेनार्थसामान्याद् ब्रह्मस्वरूपसमानत्वाद्ब्रह्मवद्ब्रह्मविद्यासु सर्वथानुसंधानायोपसंहर्तव्या एवेति ।१३॥

तर्हि प्रियशिरस्त्वादित्वेन ब्रह्मणो निरूपणं किमर्थमित्यत आह-

## आध्यानाय प्रयोजनाभावात् ।३।३।१४।

प्रियशिरस्त्वादीनां निरूपणस्य प्रयोजनान्तराभावादाध्यानायानुचिन्तनायोपासनासिद्धयर्थं तद्रूपेण ब्रह्मणः पुरुषविधत्वनिरूपणं कृतम् ॥१४॥

## आत्मशब्दाच्च ३।३।१५।

"अन्योऽन्तर आत्मानन्दमयः" (तै० २।३।) इत्यात्मशब्दादात्मनश्च शिरः पक्षपुच्छत्वाद्यसम्भवात्तस्य प्रियशिरस्त्वादिकथनमुपासकबुद्धौ सुखेनारूढार्थमिति गम्यते ॥१५॥

ननु प्राणमयादिष्वात्मशब्दस्यानात्मन्यपि प्राणादिषु प्रयोगात् 'अन्योऽन्तर आत्मानन्दमय' इत्यात्मशब्दस्य परमात्मवाचकत्वं कुतोऽवगम्यत इत्यत्राह-

## आत्मगृहीतिरितरवदुत्तरात् ।३।३।१६।

'अन्योऽन्तर आत्मानन्दमय" (तै० २।५) इत्यत्रत्येनात्मशब्देन परमात्मन एव गृहीतिर्ग्रहणम् । इतरवत्-यथेतरेण "आत्मा वा इदमेक एवाग्र आसीत्स ईक्षत लोकान्नु सृजा" इत्यात्मशब्देन परमात्मन एव ग्रहणम् ।

तद्वत् । कुतः ? उत्तरात् । 'सोऽकामयत बहु स्यां प्रजायेय' इत्याद्युत्तरात्तदेकार्थाद्वाक्यात् ॥१६॥

## अन्वयादिति चेत्स्यादवधारणात् ।३।३।१७।

प्रावतनेषु प्राणमयादिष्वप्यात्मशब्दस्यान्वयस्य सत्त्वात्कथमुत्तरवाक्यान्निर्णयः स्यादिति चेत "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" (तै० २।२।) इति प्राक्छ्रुतस्यात्मन एव प्राणमयादिवाक्येष्ववधारणात् परमात्मन एव निर्णयः। अन्नमयादिषु परमात्मबुद्धिरवतीर्णाऽपि तत्र तत्र विचार्यमाणायामानन्दमये विश्राम्यति। 'सोऽकामयत' इत्युत्तरवाक्यमस्मिन्नर्थे तात्पर्यग्राहकम् ॥१७॥

### * अथ कार्याख्यानाधिकरणम् ॥५॥

## कार्याख्यानादपूर्वम् ३।३।१८।

छान्दोग्यवाजसनेयकयोः प्राणोपासना विद्यते। तदनन्तरं सहोवाच 'किं मे वासो भविष्यतीत्याप इति होचुः' इत्यपां प्राणवासस्त्वमभिधाय "तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो भवति" (छा० ५।२।२।) इति च्छान्दोग्ये श्रूयते। तथा वाजसनेयकेऽपां प्राणवासस्त्वमुक्त्वा "तस्मादेवं विदशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदेनमनग्नं कुरुते" (बृ० ६।१।१४।) इति श्रूयते। अत्र किमाचमनमपूर्वं विधीयते आहोस्विदपां प्राणवासस्त्वमनुद्य पुरस्तादुपरिष्टाच्चाचमनं प्राणविद्याङ्गतया विधीयत एवेति प्राप्तेऽभिधीयते-कार्याख्यानादिति। अप्राप्तस्य विधान एव शब्दस्यार्थवत्वादत्राचमनस्य सदा-

---

* छन्दोगवाजिनाम्प्राणविद्या या विहिता श्रुतौ। तत्रा "पो वा स" इत्येषा श्रुतिः किं विदधाति वै ? ॥१३॥ आचमनमपूर्वं वा वासस्त्वमथवा ह्यपाम्। आचमनविधेः श्रुत्या पूर्वमेवेति निश्चयः ॥१४॥ प्राणवासस्त्वमेवेति ह्यप्राप्तेनं तथाऽऽदिमः। अप्राप्तस्य विधानेन शास्त्राणामर्थवत्त्वतः ॥१५॥

चारप्राप्तत्वादाचमनमनूद्याचमनीयानामपामप्राप्तं प्राणवासस्त्वानुसन्धानमेव विधीयते । अप्राप्तस्यैव विधाने शास्त्राणामर्थवत्त्वमिति ॥१८॥

## * अथ समानाधिकरणम् ॥६॥

## समान एवं चाभेदात् ।३।३।१९।

बृहदारण्यके शाण्डिल्यविद्याम्नायते "मनोमयोऽयं पुरुषो भाः सत्यम्" (बृ० ५।६।१) इत्यादिका । तथा वाजसनेयकेऽग्निरहस्येऽपि पुनः सैव विद्याम्नाता "सत्यं ब्रह्मेत्युपासीते" त्यारभ्य 'स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपम्" (वा० अग्निरहस्ये) इत्यादिका । अत्र संशयः किमुभयत्र विद्याभेदो न वेति । तत्र रूपभेदाद् भेद इति प्राप्तेऽभिधीयते-समान एवमिति । उभयत्र समान एव मनोमयत्वादिके वशित्वादेश्चाधिकस्य सत्यसंकल्पत्वगुणाभेदाद्विद्याया ऐक्यमेवेति ॥१९॥

## + अथ सम्बन्धाधिकरणम् ॥७॥

## सम्बन्धादेवमन्यत्रापि ।३।३।२०।

वाजसनेयके "तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्" (बृ० ५।५।१) इति प्रक्रम्यादित्यमण्डलेऽक्षणि च ब्रह्मण उपास्यत्वमभिधाय 'तस्योपनिषदहरित्यधिदैवतम्' तस्योपनिषदहमित्यध्यात्मम्' (बृ० ५।५।३) इति रहस्यनामनी द्वे उपनिषदावाम्नायेते ।

---

* बृहदारण्यके प्रोक्ता विद्या शाण्डिल्यनामिका । वाजसनेयके त्वग्निरहस्ये पठिताऽथ सा ॥१६॥ तयोर्भेदोऽथवा नेति सन्देहे समुपस्थिते । भेद इत्येव युक्तं स्याद् रूपभेदो द्वयोर्मतः ॥१७॥ सत्यसङ्कल्पतायाश्च वशित्वादेरभेदतः । ऐक्यान्मनोमयत्वादेरुभयोरेकरूपता ॥१८॥

+ वाजिनां द्वे रहस्याख्ये ये चोपनिषदी श्रुते । तत्रास्ति विचिकित्सेयं विद्यायां कार्यमत्र किम् ॥१९॥ आदित्यपुरुषस्याहश्चाक्षुषस्याहमित्यथ । ध्यानं यथाश्रुतं ? यद्वोक्तनाम्नोः पुरुषद्वये ॥२०॥ कर्त्तव्यश्चो-

तत्र संशयः किमस्यां विद्यायामादित्यपुरुषस्याहरिति नाम्ना ध्यानमक्षिपुरुषस्याहमिति नाम्ना यथाश्रुतं ध्यानं कर्तव्यमाहोस्विन्नामद्वयस्य पुरुषद्वयेऽप्युपसंहार इति। किं युक्तम्? उभयोः स्थानयोरेकस्यैव सत्यस्य पुरुषस्योपास्यत्वाद्रूपाभेदाद्विद्यैक्यादन्योऽन्यगुणोपसंहारः ॥२०॥

इति प्राप्तेऽभिधीयते—

## न वा विशेषात् ।३।३।२१।

विद्यैक्यान्नामद्वयस्य पुरुषद्वये उपसंहार इति न। कुतः? विशेषात्। उभयत्रोपास्यरूपविशेषात्। आदित्यस्थानसम्बन्धिनः सत्याद् ब्रह्मणोऽक्षिस्थानसम्बन्धिनः सत्यस्य ब्रह्मण उपाधिभेदेन रूपभेदे विद्याभेदात् ॥२१॥

## दर्शयति च ।३।३।२२।

किञ्च विद्यान्तरे हिरण्यश्मश्रुरित्यादिनाऽऽदित्यपुरुषस्य रूपमुक्त्वा तद्रूपमक्षिपुरुषेऽतिदिदेश "तस्यैतदेवरूपं यदमुष्य रूपम्" इति। अयमतिदेश एव विद्याभेदेन गुणानुपसंहारं दर्शयति। विद्यैक्ये हि रूपादीनां स्वतः प्राप्तत्वेनातिदेशापेक्षैव न स्यात्। तस्मादत्र विद्याभेदाद् गुणोपसंहाराभाव इति ॥२२॥

❀ अथ सम्भृत्यधिकरणम् ॥८॥

## सम्भृतिद्युव्याप्त्यपि चातः ।३।३।२३।

तैत्तिरीयके नारायणीयानां खिलेषु च श्रूयते—"ब्रह्मज्येष्ठा वीर्या-

---

पसंहारः? पक्षः को हि शुभो मतः?। रूपाभेदात् परः पक्षो विशेषादादिमो मतः ॥२१॥ सत्यस्य ब्रह्मणः स्थानोपाधिभेदेन भेदतः। रूपादेरतिदेशेन विद्याभेदः श्रुतौ मतः ॥२२॥ गुणानामुपसंहारो विद्याभेदे वरं न हि।

* ब्रह्मज्येष्ठेति वाक्ये ये सम्भृत्यादि गुणाः स्मृता ॥२३॥ शाण्डिल्यादिषु विद्यासु तेषाञ्चास्त्युपसंहृतिः। यद्वा तद्गुणकञ्चात्र भिन्नं

सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान । ब्रह्म भूतानां प्रथमोऽत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः" इति । अत्र संशयः । किमेषां सम्भृतिद्यु-व्याप्त्यादिगुणानां शाण्डिल्यादिब्रह्मविद्यासूपसंहार आहोस्वित्तद्गुणकमिद-मुपासनान्तरम् ? इति । किं युक्तम् ? अनारभ्याधीतत्वादेषां गुणानां सर्वासु विद्यासूपसंहार इति प्राप्तेऽभिधीयते-सम्भृतिद्युव्याप्त्यपीति । सम्भृतिद्युव्याप्तीति समाहारद्वन्द्वः । शाण्डिल्यादिविद्यास्वल्पस्थानत्वं ब्रह्मणः श्रूयते । अत्र त्वाकाशादिवीर्यद्युव्याप्तित्वेन महास्थानत्वं तस्य श्रूयतेऽतः स्थानभेदादनारभ्याधीतानामपि तेषां शाण्डिल्यादिविद्यासु नोप-संहारः । किन्तु सम्भृत्यादिगुणविशिष्टमुपासनान्तरमेवेदमिति ॥२३॥

## + अथ पुरुषविद्याधिकरणम् ॥६॥

## पुरुषविद्यायामपि चेतरेषामनाम्नात् ।३।३।२४।

छान्दोग्ये पुरुषविद्याम्नायते "पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंश-तिवर्षाणि" (छा० ३।१६।१) इति । तथा तैत्तिरीयकेऽपि पुरुषविद्या

---

हीदमुपासनम् ।।२४।। आद्यः पक्षो वरं तेष्वनारभ्याधीतता यतः । शाण्डि-ल्यादावुपास्यस्य स्थानं स्वल्पं यतः श्रुतम् ।।२५।। द्युव्याप्त्यादेस्ततस्त-त्रानन्वयादन्तिमः शुभः । तत्संनियोगशिष्टस्य सम्भृत्यादिगुणस्य च ।२६।। मतोपसंहृतिर्नास्ति शाण्डिल्यदहरादिषु ।

तैत्तरीयकछान्दोग्योक्तयोः पुरुषविद्ययोः ।।२७।। अभेदो ह्यथवा भेदः किं युक्तमाद्य एव हि । आख्यारूपफलानाञ्च ह्यत्रैक्यं विधते यतः ।।२८।। इतरेषामनाम्नानात्तयोरैक्यं न युक्तिभाक् कुतश्चेच्छ्रूयतां त्रेधा विभज्य पुरुषायुषम् ।।२९।। छान्दोग्ये क्रियते यस्मात् सवनत्रयकल्पनम् । दीक्षात्वमशानायादेः पुंसो यज्ञत्वकल्पनम् ।।३०।। नैतादृक्कल्पनाः क्वापि दृश्यन्ते तैत्तरीयके । तस्मात् प्रकारभेदाद्धि रूपभेदोऽपि सम्भवेत् ।।३१।। एकत्र ब्रह्मणः प्राप्तिरपरत्रायुरेव हि । फलं पुरुषविद्याया नैकताऽस्ति द्वयोस्ततः ।।३२।।

श्रूयते-"तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिः" (तै० ना० ५२) इत्यादिरूपा। अत्र विद्यैक्यप्रुतविद्याभेद इति। किं युक्तम्? विद्यैक्यम्। कुतः? उभयत्र पुरुषविद्येति समाख्यैक्याद्रूपफलयोरप्यैक्याच्चेति प्राप्तेऽभिधीयते-पुरुषविद्यायामपि चेति। पुरुषविद्यायामपि रूपादिभेदाद्विद्याभेद एव। कुतः? इतरेषामनाम्नात्। इतरशाखोदितानां गुणानामितरशाखायामनाम्नात्। छान्दोग्ये पुरुषस्य यज्ञत्वकल्पनं पुरुषायुषं त्रेधा विभज्य सवनत्रयकल्पनमशिशिपादीनां दीक्षात्वेन च कल्पनं कृतम्। तैत्तिरीयकेत्वेवं कल्पना न दृश्यते किन्तु रूपान्तरेण दृश्यते। तथा च प्रकारभेदाद्रूपभेदस्य स्पष्टत्वाद्विद्याभेदः तथा तैत्तिरीयके पुरुषविद्यायाः 'फलवत्सन्निधावफलं तदङ्गम्' इति न्यायाद्ब्रह्मविद्याङ्गत्वेन ब्रह्मप्राप्तिरूपमेव फलं दृश्यते। छान्दोग्ये त्वायुः प्राप्तिरूपं फलं पुरुषविद्याया इति फलसंयोगभेदोऽपि विद्याभेदसाधकः। एवञ्चोभयत्र विद्याभेदान्नह्येकत्र श्रुतानां गुणानामन्यत्रोपसंहार इति। ॥२४॥

* अथ वेधाद्यधिकरणम् ॥१०॥

## वेधाद्यर्थ भेदात् ।३।३।२५।

स्वस्वोपनिषदारम्भे सर्वेषां शाखिनां भिन्नभिन्नमन्त्राणामाम्नानं वर्तते। यथाथर्वणिकानाम्-'शुक्रं प्रविध्य हृदयं प्रविध्य' इत्यादिकम्।

---

* स्वस्वोपनिषदारम्भे चाम्नानं सर्वशाखिनाम्। मन्त्राणाञ्च विभिन्नानां प्रवर्ग्यादिककर्मणाम् ॥३३॥ मन्त्रादीनां किमेतेषां विद्याङ्गत्वमथो न हि। किं स्याद्? आद्य एवेति विद्यायाः सन्निधौ यतः ॥३४॥ एषामस्ति समाम्नानमितिप्राप्तेऽभिधीयते। सामर्थ्यादङ्गतैतेषामध्ययनाभिचारयोः ॥३५॥ ज्योतिष्टोमादिकाङ्गत्वं प्रवर्ग्यादिषु कर्मसु। विद्याङ्गता न तद्द्वयेषां सर्वत्र नोपसंहृतिः ॥३६॥

काठकानां तैत्तिरीयाणाञ्च 'शं नो मित्रः शं वरुण.' इत्यादिकम् । वाजसनेयिनां 'देवा ह वै सत्रं निषेदुः' इत्यादिप्रवर्ग्यब्राह्मणस्य । सामगानां रहस्यब्राह्मणारम्भे 'देव सवितः प्रसुव यज्ञं प्रसुव' इत्यादिकम् । तत्र संशयः । किमेषां मन्त्रादीनां विद्याङ्गत्वमाहोस्विन्नेति । किं युक्तम् । विद्याङ्गत्वम् । कुतः ? विद्यासन्निधौ समाम्नानादिति प्राप्तेऽभिधीयते-वेधाद्यर्थभेदादिति । 'शुक्रं प्रविध्य हृदयं प्रविध्य' इत्यादिभिर्लिङ्गैरभिचारादिपूक्तानां मन्त्राणां विनियोगाद्विद्याङ्गत्वं न सम्भवति । अत एव चैते मन्त्रा न सर्वासु विद्यासूपसंहार्या इति ॥२५॥

## * अथ हान्यधिकरणम् ॥११॥

## हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दः स्तुत्युपगानवत्तदुक्तम् ।३।३।२६।

ताण्डिनामुपनिषदि श्रूयते-'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि' (छा० ८।१३।१।) एवं शाट्यायनिनां श्रुतिः-कौषीतकिनान्तु-तत्सुकृतदुष्कृते धुनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्' (कौ० १।४।, तथाथर्वणिकानाम्-'तदा विद्वान् पुण्यपापे विधूय निर-

* श्रुतावेकत्र चाम्नातं हानं सुकृतपापयोः । अपरत्र पुनः प्राप्तिर्मित्रेऽमित्रे तथा तयोः ॥३७॥ अन्यत्रोक्तं द्वयं तस्य सर्वविद्यासु चाङ्गताम् । हानोपायनयोश्चाथोभयस्य चिन्तनं खलु ? ॥३८॥ विकल्पेन भवेदाहोस्वित् समुच्चयतो ननु । पृथगाम्नानसामर्थ्यादाद्यः पक्षो वरं मतः ॥३९॥ अन्यथाऽन्यश्रुतावन्यपठनं व्यर्थतामियात् । इति चेदुच्यते मैवं कुतश्चेदभिधीयते ॥४०॥ उपायनश्रुतौ यस्माद्धानवाक्यस्य शेषता । ततः समुच्चये न स्याच्चिन्तनं हि कुशादिवत् ॥४१॥ सत्यां गतौ न युक्तः स्याद्विकल्पस्त्वाप्टदोषभाक् । प्रतिपत्तुर्हि भेदेनैकत्रोभयविधिः खलु ॥४२॥

ञ्जनः परमं साम्यमुपैति' (मु० ३।१।३) इति श्रुतिः । अत्र कस्याञ्चित्सुकृतदुष्कृतयोर्हानिर्निर्दिश्यते कस्याञ्चिच्च सुहृद्द्विषत्सु तयोः प्राप्तिः क्वचिदुभयम् । एतदुभयमेकत्र श्रुतमपि सर्वासु विद्यास्वङ्गताम्भजते । तत्र संशयः । किमेषां हानिचिन्तनोपायनचिन्तनोभयचिन्तनानां विकल्पः समुच्चयो वेति । किं युक्तम् ? विकल्पः । कुतः ? एकैकस्य पार्थक्येन श्रवणात् सर्वत्रोभयानुसन्धाने तु कौषीतकिवाक्येनैव सिद्धे श्रुत्यन्तरपाठस्य वैयर्थ्यमेव स्यात् । तस्मात्क्वचिद्धानिचिन्तनम् क्वचिच्चोपायचिन्तनमिति विकल्प इति प्राप्तेऽभिधीयते–हानौ तूपायनशब्दशेषत्वादिति ।

तु शब्दः पूर्वपक्षव्यावर्तकः । हानावित्युपायन इत्यस्याप्युपलक्षकः 'तत्सुकृतदुष्कृते धुनुते' 'तस्य प्रिया ज्ञातयः' 'सुकृतमुपयन्त्यप्रिया दुष्कृतम्' (कौ० १।४।) इति हानिवाक्य उपायनस्यापि श्रवणात् केवले विमोचने केवले चोपायने श्रूयमाणेऽपि तयोरन्योऽन्यसमुच्चयोऽभिप्रेतः । कुतः ? उपायनशब्दशेषत्वात् । उपायनशब्दस्य हानिवाक्यशेषत्वादित्यर्थः । विद्वत्यक्तपुण्यपापनिवेशस्थानयोस्तत्प्रियाप्रिययोः श्रुतत्वादुपायनवाक्यस्य हानिवाक्यशेषत्वमुपपद्यते । एवं प्रदेशान्तराम्नातवाक्यस्य प्रदेशान्तरवाक्यशेषत्वे दृष्टान्तमाह-कुशाच्छन्दः स्तुत्युपगानवदिति । यथा "कुशाः वानस्पत्याःस्थ ता मा पात" इति भाल्लविनां निगमस्थवाक्यस्य 'औदुम्बर्यः' इति तद्विशेषवाचिप्रदेशान्तरवाक्यशेषत्वम् । यथा हि "देवासुराणां छन्दोभिः" इति सामान्येन देवासुराणां छन्दसां प्रसङ्गे "देवच्छन्दांसि पूर्वम्" इति क्रमपरं वाक्यं पूर्वतनोक्तवाक्यशेषतामुपयाति । यथा च "समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति" इति विशेषविषयकं वाक्यं "हिरण्येन षोडशिन स्तोत्रमुपाकरोति" इति सामान्येनागतार्थकस्य वाक्यस्य । यथा वा "नाध्वर्युरुपगायेत्" इत्येतद्वाक्यं "ऋत्विज उपगायंति" इति सामान्यप्राप्तार्थकस्य वाक्यस्य शेषत्वमुपगच्छति । एवमिहापि शेषशेषिभावात्सर्वार्थसंगतिर्बोध्या । उपायनवाक्यस्य हानिवाक्यशेषत्वेन

सिद्धायां गतौ विकल्पो नादरणीयः । तदुक्तम् । पूर्वतन्त्रे "अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात्" ( जै० सू० ) इति ॥२६॥

*अथ साम्परायाधिकरणम् ॥१२॥

## साम्पराये तर्तव्याभावात्तथा ह्यन्ये ।३।३।२७।

सुकृतदुष्कृतयोर्हानञ्च छान्दोग्ये शरीरवियोगकाले श्रूयते-"अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि" (छा० ।८।१३।१।) इति एवं शाट्यायनकेऽपि "तस्य पुत्राः दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति दायसंक्रमणकाल एव सुकृतदुष्कृतहानं श्रूयते तच्च देहवियोगसमय एव प्रतीयते । कौषीतकी ब्राह्मणे तु "स एतं देवयानं पन्थानमापद्याग्निलोकं गच्छतीत्युपक्रम्य" "स आगच्छति विरजां नदीं तां मनसात्येति तत्सुकृतदुष्कृते धुनुते" (कौ० ५।३।४। इति देहादपसृत्याध्वनि तद्धानमाम्नायते । तत्र संशयः । शरीरवियोगकाले वियुज्य गतस्य मार्गे च सुकृतदुष्कृतहानमाहोस्विच्छरीरवियोगसमय एवेति ? किं युक्तम् ? देहवियोगकालेऽशेषकर्मक्षये देवयानेन पथा गमनानुपपत्तेः । तदार्धं क्षीयतेऽर्धन्तु विरजातरणानन्तरमिति प्राप्तेऽभिधीयते-साम्पराये तर्तव्याभावादिति ।

---

* छान्दोग्ये साम्पराये हि हानं सुकृतपापयोः । श्रुतं विरजान्तु सम्प्राप्य मार्गो कौषीतकिश्रुतौ ॥४३॥ विचिकित्सा भवेदत्र यत् केषाञ्चिद्धि कर्मणाम् । साम्पराये विनाशः स्याच्छिष्टनाशो हि चाध्वनि ? ॥४४॥ अथवा साम्पराये हि विनाशः सर्वकर्मणाम् ? । किं युक्तम् ? पूर्व एवात्र कुतश्चेदभिधीयते ॥४५॥ वपुर्वियोगकाले चाशेषाणां कर्मणां क्षतौ । यतोऽर्चिरादिमार्गेण गमनं नोपपद्यते ॥४६॥ भोक्तव्यसुखदुःखानामभावादन्तिमः शुभः । गमनञ्च यथालोकं विद्यायोनिशरीरतः ॥४७॥

'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" मु० २।२।८। "आहार-शुद्धौ सत्वशुद्धिः सत्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्र-मोक्षः" (छा० ७।२६।२।) इति श्रवणात् विद्याविपाकाद्देहापक्रमणकाल एव ब्रह्मविदः सुकृतदुष्कृतयोर्हानम् । कुत. ? तर्तव्याभावात् । देहवियोगा-नन्तरं सुकृतदुष्कृताभ्यां तरितव्ययोः सुखदुःखात्मकभोक्तव्ययोरभावात् । तथा ह्यन्ये कर्मनिमित्तकसुखदुःखाभावमभिदधते 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' (छा० ६।१४।२) इति । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छा० ८।१२।१।) इति च ॥२७॥

## छन्दत उभयाविरोधात् ।३।३।२८।

एवं विद्यासामर्थ्यात् देहवियोगकाले सर्वकर्मक्षयानन्तरमुपासको देव-यानेन पथा ब्रह्म प्राप्नोतीति निश्चिते सति 'अश्व इव रोमाणि' इति श्रुतेः 'तस्य तावदेव चिरम्' इत्यस्याश्च श्रुतेरविरोधात् उभयश्रुत्यनु-रोधाच्चरमश्रुतोऽपि 'तत्सुकृतदुष्कृते धुनुते' इति वाक्यखण्डः 'एतं देव-यानं पन्थानमापद्य' (कौषी० १।३।) इति प्रथमश्रुतात्पूर्वं छन्दतो यथेष्टं योजनीय इति ॥२८॥

## गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ।३।३।२९।

अत्राशङ्कते देहवियोगकाले विरजातरणोत्तरकाले चेत्युभयथा कर्म-क्षये सत्येव देवयानगतिश्रुतेरर्थवत्त्वमुपपद्यते । अन्यथा देहोत्क्रान्तिकाले सर्वकर्मविनाशे सति सूक्ष्मशरीरस्यापि विनाशाद्गत्यनुपपत्तावर्चिरादि-गमनश्रुतेर्विरोधः स्यात् ॥२९॥

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ।३।३।३०।

प्रदर्शिताशङ्काम्परिहरति । परमपुरुषोपासकानां देहादुत्क्रमणकाले सर्वकर्मक्षयेऽपि देवयानः पन्था उपपन्नः एव । कुतः ? तल्लक्षणार्थोपलब्धेः । तल्लक्षणार्थस्तत्सजातीयार्थस्तस्योपलब्धेः । अकर्मलभ्यार्थोपलब्धेरित्यर्थः ।

अशेषकर्मक्षयेऽपि विद्ययाऽविर्भूतस्वरूपत्वाद्विदुषो देहसम्बन्धलक्षणार्थोपलब्धेः । "तस्य सर्वेषु लोकेषु कामचारो भवति" (छा० ७।२५।२।) यं कामं कामयते सोऽस्य संकल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते' (छा० २।२।१०) 'स एकधा भवति त्रिधा भवति' (छा० ७।२६।२) इति ब्रह्मविदोऽऽकर्मलभ्यार्थोपलब्धिश्रवणात् । तत्र दृष्टान्तः-लोकवदिति । यथा लोके राजसेवकानां प्रयत्नमन्तरेणापि पुरुषान्तरप्रयत्नालभ्यातिरमणीयानेकपदार्थानामुपलब्धिस्तद्वत् ॥३०॥

नचैवं ज्ञानवतां वसिष्ठादीनां कर्मफलरूपदेहान्तरसंयोगस्य पुत्रजन्ममरणादिहेतुकसुखदुःखानुभवस्य च दर्शनाद्ब्रह्मविद्यया कर्मणामपि ब्रह्मोपासकानां सुखदुःखानुभवोऽवर्जनीयः स्यादित्यत्राह-

## यावदधिकारमवस्थितिराधिकारिकाणाम् ।३।३।३१।

येषां ज्ञानिनां ब्रह्मविद्यया क्षीणकर्मणां प्रारब्धकर्मावसानकृतदेहवियोगानां शताधिकया नाड्या देहाद्विनिर्गतानामर्चिरादिना ब्रह्मलोकप्राप्तिस्तेषां हेतोरभावान्न पुण्यपापकर्महेतुकः सुखदुःखानुभवः । आधिकारिकाणान्तु वसिष्ठादीनां वेदप्रवर्तनादिषु लोकव्यवस्थाहेतुष्वधिकारेषु ब्रह्मणा नियुक्तानां यावदधिकारमवस्थितिस्तदारम्भकं कर्मापि यावदधिकारमवतिष्ठते । अतस्तेषां सुखदुःखानुभवोऽपि भवति । प्रारब्धकर्मवशात्सम्पन्नेस्त्वधिकारे तेषां तदैव ज्ञानोदयादर्चिरादिना ब्रह्मप्राप्तिरिति । ॥३१॥

### * अथानियमाधिकरणम् ॥१३॥

## अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ३।३।३२।

किमर्चिरादिना गतिर्यत्र विद्यासु श्रूयते तद्विद्यावतामेव तया गत्या

---

* अर्चिरादिकमार्गेण श्रुता यत्र गतिः खलु । तद्विद्याशालिनामेव ब्रह्मप्राप्तिस्तयाऽथवा ॥४८॥ सर्वविद्यावतां युक्तं किं भवेदाद्यमेव हि ।

ब्रह्मप्राप्तिराहोस्वित्सर्वविद्यावतामर्चिरादिना ब्रह्मप्राप्तिरिति संशये यासु विद्यासु गतिराम्नायते तद्विद्यावतामेव तद्गत्या ब्रह्मप्राप्तिर्नान्येषां प्रमाणाभावादिति प्राप्तेऽभिधीयते । अनियम इति । सर्वेषां सर्वविद्यावतामर्चिरादिना मार्गेणैव ब्रह्मप्राप्तिरितिसिद्धान्तात्तद्विद्यावतामेवेति नियमो नास्ति । सर्वविद्यावतां तया गमने शब्दानुमानाभ्यामविरोधः । नोचेद्विरोध इति भावः ।

श्रुतिस्तावद्-"य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभिसम्भवन्ति" (बृ० ६।२।१५। इति । 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति' (छा० ५।१०।१।) इति च स्पष्टमेव सर्वविद्यावतामर्चिरादिना गतिरभिधत्ते । तथा स्मृतिरपि-"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" (गी० ८।२४) इति सर्वेषां ब्रह्मविदामनयैव गत्या ब्रह्मप्राप्ति द्रढयति ॥३२॥

### ❀ अथाक्षरध्यधिकरणम् ॥१४॥

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौप सदवत्तदुक्तम् ।३।३।३३।

वाजसनेयके गार्गीम्प्रति याज्ञवल्क्यस्योत्तरम् 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घम्" (बृ० ३।८।८।) इत्यादिकं श्रूयते । एवं मुण्डकेऽपि "अथ परा यया तदक्षरमधिगम्यते यत्तदे-

---

अन्येषाञ्च तया प्राप्तौ प्रमाणं न हि विद्यते ॥४६॥ अविरोधाच्छ्रुति-स्मृत्योः सर्वविद्यावतां हि सा । तस्मादनियमः श्रेष्ठो न तदुपास्तिशालिनाम् ॥५०॥

* श्रुता येऽक्षरविद्यायामस्थूलत्वादयो गुणाः । तेषां तत्रैव चिन्ता स्यात् सर्वविद्यासु वा ननु.? ॥५१॥ प्रकरणस्य भेदाद्धि तत्रैवेति वरं

अदृश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादम्" (मु० १।१।५।० इति श्रूयते। तत्र संशयः। किमेषामस्थूलत्वादीनां गुणानां यत्र श्रुतिस्तत्रैव चिन्तनमाहोस्वित्सर्वासु ब्रह्मविद्यासूपसंहार इति। किं युक्तम् ? यत्रैतेषां श्रुतिस्तत्रैव। कुतः ? प्रकरणभेदात्। विद्यान्तररूपात्मकानां गुणानां विद्यान्तररूपत्वे मानाभावादिति प्राप्तेऽभिधीयते-अक्षरधियां त्ववरोध इति। यतः केवलमानन्दादिभिर्गुणैर्ब्रह्मणः प्रत्यगात्मनो व्यावृत्तिर्नोपपद्यते। प्रत्यगात्मनोऽप्यानन्दादिगुणकत्वात्। अतोऽस्थूलत्वादिविशेषितानन्दादिभिर्विशेषितस्य ब्रह्मणः प्रत्यगात्मनो व्यावृत्त्युपपत्तेः अस्थूलत्वादीनामप्यानन्दादिवत्स्वप्रकाशापरिच्छिन्नचिदेकरसब्रह्मस्वरूपानुसन्धान उपयुक्तत्वात्। अतस्तेषामप्यानन्दादिवत्सर्वासु ब्रह्मविद्यासूपसंहारः। कुतः ? सामान्यतद्भावाभ्याम्। सर्वास्वक्षरविद्यासूपास्यभूतस्याक्षरस्य ब्रह्मणः समानत्वात्। अस्थूलत्वादीनां गुणानां ब्रह्मस्वरूपानुसन्धानान्तर्भावाच्च। प्रधानानुवर्त्तित्वं हि गुणानां स्वभावः। औपसदवत्। यथा जामदग्न्यचतूरात्रपुरोडाश्युपसद्गुणभूतस्य मन्त्रस्य प्रधानानुवर्तितयोपसदनुवर्त्तित्वेनोपांशुगुणकत्वम्। तदुक्तम् 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' (जै० द० सू०) इति ॥३३॥

तर्हि 'सर्वकर्मा सर्वगन्धः सर्वरसः' (छा० ३।१४।४।) इत्येवमादीनामपि गुणानां प्रधानभूतब्रह्मगुणत्वात्सर्वत्रोपसंहारः स्यादित्यत्राह-

## इयदामननात् ।३।३।३४।

इयदस्थूलत्वादिविशेषितानन्दादिकमेव सर्वत्रोपसंहर्तव्यम। कुतः ?

---

मतम्। मैवं कुतो यतस्ते स्युः सर्वथा चोपयोगिनः ॥५२॥ ब्रह्मरूपानुसन्धाने यथाऽऽनन्दादयो गुणाः। आनन्दादिकवत्तेषां तत् सर्वत्रोपसंहृतिः ॥५३॥ सर्वास्वक्षरविद्यासु चाक्षरस्य समानता। ब्रह्मरूपानुसन्धानान्तर्भूतास्ते ततोऽपि च ॥५४॥ गुणानाञ्च स्वभावो हि प्रधानस्यानुवर्त्तिता। उपसद्गुणभूतस्य मन्त्रस्यैवेति सम्मतम् ॥५५॥

आमननात् । इयद्गुणविशिष्टस्यैव ब्रह्मस्वरूपस्यामननात् । येन गुणजातेन विना प्रत्यगात्मव्यावृत्तस्य ब्रह्मस्वरूपस्याननमनुसन्धानं नोपपद्यते तदेव सर्वत्रोपसंहृत्यानुसन्धेयम् नान्यत् प्रधानानुवृत्त्यपि सर्वकर्मत्वादिकम् । तत्तु प्रतिविद्यमेव व्यवस्थितमिति ॥३४॥

## * अथान्तरत्वाधिकरणम् ॥१५॥

## अन्तराभूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ।३।३।३५।

वाजसनेयके "यत्साक्षदपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्व" ( बृ० ३।४।१। ) इत्युषस्तेन पृष्टस्य याज्ञवल्क्यस्योत्तरं 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः' ( बृ० ३।४।१। ) इत्यादि । 'अतोऽन्यदार्तम्' ( बृ० ३।४।२। ) इत्यन्तम् । एवमग्रेऽपि "यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्व" ( बृ० ३।५।२। ) इतिकहोलप्रश्ने "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति" ( बृ० ३।५।१। ) इत्यारभ्य 'अतोऽन्यदार्तम्' ( बृ० ३।५।१। ) इत्यन्तं याज्ञवल्क्यस्योत्तरम् । तत्र किमुभयत्र विद्याभेद उताभेद इति संशयः । पूर्वपक्षस्तूभयत्रोपास्यरूपभेदाद्विद्याभेदः यद्यपि प्रश्नस्यैकरूप्यं परन्तूत्तरस्य प्रकारभेदस्तेन रूपभेदोऽस्त्येव । प्रथमे देहेन्द्रियादिव्यतिरिक्तस्य प्रत्यगात्मनः स्वरूपम् । द्वितीये तु अशनायापिपासादिरहितस्य जीवाद्विलक्षणस्य परमात्मनः स्वरूपमिति रूपभेदोऽस्त्येव । भूतग्रामवतस्त्वापेक्षिकमेव सर्वा-

---

*विद्या भिन्ने उताभिन्ने किमुषस्तिकहोलयोः । प्रत्युत्तरप्रकारस्य भेदाद्रूपविभेदतः ॥५६॥ वरञ्चाथ न चैव स्यात् कुतश्चेदभिधीयते । अशनायाद्यतीतत्वं सर्वप्राणनहेतुता ॥५७॥ इत्येतदुभयं यस्मादुपास्येऽत्र हि सम्भवेत् । प्रश्नप्रत्युत्तरावृत्तिः सद्विद्यावत् सुबुध्यताम् ॥५८ उत्तरव्यतिहारः स्याद् यतः प्रश्नकल्पता ।

न्तरत्वं परमात्मनस्तु न तथा। तथाप्युभयत्र प्रत्यगात्मपरमात्मनावेव ग्राह्यौ। अन्यथा प्रतिवचनभेदो नोपपद्येत। तस्मादत्र विद्या भिद्यत इति चेत्।

अत्राभिधीयते-नेति। नोभयत्र विद्याभेदः कुतः? 'यत्साक्षादपरोक्षादि' ति परमात्मविषयकप्रश्नस्यैकरूप्यात् तदुत्तरस्यापि सर्वत्राणिप्राणनादिकारणत्वस्याशनायाद्यतीतत्वस्यैकस्मिन्परमात्मन्युपास्यभूते सम्भवात्। तत्र दृष्टान्तमाह-उपदेशवत्। यथा सद्विद्यायामुपास्यस्यैक्येऽपि प्रश्नावृत्तिः-प्रतिवचनावृत्तिश्चोपास्यस्यार्थस्य दाढर्यसम्पादनाय तन्माहात्म्यख्यापनाय च दृश्यते तद्वत्। अतोऽत्र विद्यैक्यमेव ॥३५॥

ननु तथाप्युषस्तकहोलयोः प्रश्नकर्त्रोर्भेदः प्रश्नप्रतिवचनयोर्भेदसम्पादकः स्यादित्यत्राह--

## व्यतिहारो विशिंषन्ति हीतरवत् ।३।३।३६।

न ह्यत्र विद्या भिद्यते। उपस्तकहोलयोर्द्वयोरपि प्रश्नस्यैकरूप्यादेकविषयत्वे निश्चिते सत्युभयोः प्रतिवचनगतबुद्धिव्यतिहारः कर्तव्यः। उपस्तेनाशनायाद्यतीतत्वबुद्धिः स्वजिज्ञास्यभूत उपास्ये विधेया। तथा कहोलेन प्राणनादिहेतुत्वधीः सर्वान्तरात्मविषया स्वोपास्ये कर्तव्येति। एवमेवाचार्यस्य याज्ञवल्क्यस्य वचनानि विशिंषन्ति सर्वान्तर्यामिणमेकमेवोपास्यं परमात्मानम्। अत्र दृष्टान्तः-इतरवत्। सद्विद्याप्रकरणे सर्वाणि प्रतिवचनानि प्रतिपाद्यपरमकारणपरमात्मविषयकाण्येव तद्वदत्रापीति ज्ञेयम् ॥३६॥

सद्विद्यायामेव कथमैक्यम् यतस्तत्रापि प्रश्नप्रतिवचनभेद उपलभ्यत एवेत्याह--

## सैव हि सत्यादय. ।३।३।३७।

सैव-सत्पदाभिलप्यादिकारणरूपा परा देवतैव 'यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति' ( छा० ६।६।२। ) इत्याद्युत्तरवाक्येषु सर्वत्र प्रतिपा-

यते । हि-यतः 'तत्सत्यं स आत्मा' ( छा० ४।३।३। ) इति प्रथमवाक्ये श्रुताः सत्यादय उत्तरत्र प्रतिपाद्यं कस्मिन्नेवात्मन्युपसंह्रियन्त इति । तस्मादत्र भेदकारणाभावान्न भिद्यते विद्येति निरवद्यम् ॥३७॥

## * अथ कामाद्यधिकरणम् ॥१६॥

## कामादीतरत्र तत्र चायतनादिभ्यः ।३।३।३८।

छान्दोग्ये-"अथ यदिदमस्मिन्ब्रह्मपुरे दहरम् पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वावविजिज्ञासितव्यमिति" ( छा० ८।१।१। ) इति प्रकृत्य श्रूयते "एष आत्मापहतपाप्मा विजरो विमृत्युः" ।छा० ८।१।५।) इति । तथा बृहदारण्यके "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशान" ( बृ० ४।४।२२। ) इति श्रूयते । तत्र संशयः । किमुभयत्र विद्या भिद्यते न वेति । किं युक्तम् , भिद्यत इति । कुतः ? उभयत्र रूपभेदात् । छान्दोग्ये अपहतपाप्मत्वादिगुणविशिष्टस्य दहराकाशशब्दाभिहितस्य परमात्मन उपास्यत्वम् । बृहदारण्यके तु आकाशे शयानस्य वशित्वादिगुणयुक्तस्य तस्योपास्यत्वमिति रूपभेदाद्विद्याभेद इति प्राप्तेऽभिधीयते-कामादीतरत्र तत्र चेति । न ह्यत्र रूपभेदो येन विद्याभेदः स्यात् । तथा हि-सत्यकामत्वादिगुणजातमितरत्र वाजसनेयक उपसंहरणीयमेव तत्र छान्दोग्ये च सर्ववशित्वादिकमुपसंहर्तव्यम् । कुतः ? आयतनादिभ्यः । हृदयायतनत्वसेतुत्वादीनां गुणानामुभयत्र समानत्वात् । उभय-

---

* दहरोपासने भिन्ने वाऽभिन्ने ताण्डिवाजिनोः ॥५६॥ रूपभेदाद्वरञ्चाद्यम् मैवमायतनादितः । यतश्चान्यत्र कामादिगुणानामुपसंहृतिः ॥६०॥ अलोप श्रुतितस्तेषामादरेण विधानतः । 'नेह नानास्ति' वाक्यस्य विषया तत्र ते गुणाः ॥६१॥ सदोषा सगुणोपासा सांसारिकफलश्रुतेः । नैव तद्वचनात् पैत्रलोकाप्तेपुंक्तिता यतः ॥६२॥

त्राऽपि हृदयायतनं श्रूयते । तेनान्येऽप्युपास्यगुणा उभयत्रानुसन्धेया एवेति न रूपभेदः । एवम् फलसंयोगादिकमपि न भिन्नमतो न विद्याभेदः ॥३८॥

ननु 'मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन' ( बृ० ।४।४।१९ ) इत्यादेः पूर्वप्रकृतात् 'स एष नेति नेत्यात्मा' ( बृ० ४।४।२२ ) इति वक्ष्यमाणत्वात् ब्रह्मस्वरूपव्यतिरिक्तस्य सर्वस्य प्रतिषेध्यत्वावगमात्सर्ववशित्वसर्वेशानत्वादीनां ब्रह्मनित्यगुणत्वानुपपत्तेः । एवम् सत्यकामत्वादीनामपि न पारमार्थिकत्वमतः कथं मोक्षसाधनीभूतेषूपासनेष्वनुसन्धेयत्वमित्यत आह —

## आदरादलोपः ।३।३।३९।

'नेह नानास्ति किञ्चन' ( बृ० ४।४।१९ ) इत्यादिनिषेधविषयता न सर्ववशित्वसत्यकामत्वादिगुणानां सम्भवति । कुतः ? आदरात् । प्रमाणान्तराप्रतिपन्नास्ते हि सर्ववशित्वादयो ब्रह्मणोऽसाधारणगुणाः स्वयं भगवत्या श्रुत्यात्यादरेण विधानात् । स्वयमादरेण विहितानां तेषामपवारणे तु श्रुतेरुन्मत्तप्रलापित्वं दुर्वार स्यादिति भावः । तस्मात्तेषां गुणानामलोपः । 'नेह नानास्ति' ( बृ० ४।४।१९ ) इति वचनेन तु सर्वस्य ब्रह्मकार्यत्वेनैक्यात्तद्भिन्नम् नानात्वं नास्तीति बोध्यते प्रपञ्चितश्चायमर्थो जिज्ञासाधिकरण इति ॥३९॥

सगुणोपासनस्य "स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति" ( छा० ८।२।१। ) इति सांसारिकफलत्वेन न मोक्षफलत्वम् । अतो ब्रह्मप्रेप्सुना न सगुणोपासनं कार्यमिति सत्यकामत्वादीनां नानुसन्धेयत्वं विद्यास्वित्यत आह –

## उपस्थितेऽतस्तद्वचनात् ।३ ३।४०

उपस्थितिरुपस्थानम् । उपस्थाने ब्रह्मोपासने कर्मबन्धापगमानन्तरं ब्रह्मसम्पत्तिः स्वरूपाविर्भावश्च भवति । अतो ब्रह्मसम्पत्तेरनन्तरमेव तद्व-

चनात्पितृलोकादिप्राप्तिवचनान्न तस्याः सांसारिकफलत्वमपितु मोक्षफलत्वमेवेति 'कुतोऽवगम्यते , एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति जक्षन् क्रीडन्रममाणः' ( छा० ८।१२।३। ) इत्यशेषक्लेशविमुक्तस्य स्वेन रूपेणाभिनिष्पन्नस्यैव स्वेच्छाविहरणमाम्नायते । तस्मात्सत्यकामत्वादीनां गुणानां मोक्षोपयोगित्वादुपसंहार्यत्वमेवेति ॥४०॥

* अथ तन्निर्धारणानियमाधिकरणम् ॥१७॥

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ।३।३।४१

कर्माङ्गाश्रयमुद्गीथाद्युपासनं छान्दोग्ये श्रूयते' 'ओमित्येतदक्षरमुद्गीथमुपासीत" ( छा० १।१।१। ) इति । तत्रायं संशयः । किमिदमुपासनं तत्कर्मणि पर्णतादिवन्नियमेनानुसन्धेयमुत गोदोहनादिवदनियमेनेति । तत्र 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' ( छा० १।१।१०। ) इति फलस्य श्रूयमाणत्वात्तस्य पृथक् प्रतिपादनायोगात् क्रत्वर्थत्वेनावगतत्वान्नियमेनोपादेयमिति प्राप्तेऽभिधीयते–तन्निर्धारणानियम इति । निर्धारणञ्च निश्चयेन मनसो धारणं ध्यानापरपर्यायमुपासनम् । तस्य क्रतुषु गोदोहनादिवदनियमेनोपादानम् । कुतः ? तद्दृष्टेः । 'तेनोभौ कुरुतो यश्चैतदेव वेद यश्च न वेद' ( छा० १।१।१०। ) इति तदुपासनविदुषोऽपि कर्मानुष्ठानदर्शनात् । एवञ्चोपासनस्यानङ्गत्वे निश्चिते तत्फलजिज्ञासायां रात्रिसत्रन्यायेनार्थवादिकम् वीर्यवत्तरत्वम् फलं क्रतुफलात्पृ-

---

*कर्माङ्गमाश्रितोपास्तिः कर्मणि पर्णतादिवत् । नियमेनानुसन्धेयाऽथवा गोदोहनादिवत् ॥६३॥ अनियमेन, किं सुष्ठु नियमेनेति सम्मतम् । क्रत्वार्थता यतो नास्याः श्रूयते हि पृथक् फलम् ॥६४॥ अविद्यस्य जनस्यापि कर्मानुष्ठानदर्शनात् । पृथक् फलं श्रुतं वीर्यवत्त्वमन्त्यं ततो वरम् ॥६५॥

अन्भूतमेव प्रतीयते । तच्च कर्मफलस्याप्रतिबन्धस्वरूपम् । अयं भावः । एकस्य कर्मणो यत्फलं तत्प्रबलकर्मान्तरस्य फलेन प्रतिबध्यते यावत्तदुपभोगः । इदन्तु न तथेत्यतः क्रतुफलात्पृथक्फलत्वेन कर्माङ्गाश्रयाणामपि कर्मसूद्गीथाद्युपासनानामनियमेनोपसंहार इति ॥४१॥

## ॐ अथ प्रदानाधिकरणम् ॥१८॥

## प्रदानवदेव तदुक्तम् ।३।३।४२।

दहरविद्यायां श्रूयते 'तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्" ( छा० ८।१।६। ) इति । तत्र दहराकाशस्वरूपस्य परमात्मान उपासनमभिधाय तद्गुणानामप्युक्तवचनेन पृथक्तया चिन्तनम् विहितम् । तत्कि गुणचिन्तने तत्तद्गुणविशिष्टतया परमात्मचिन्तनस्यावृत्तिराहोस्विन्नेति संशये एकस्यैव परमात्मनोऽपहतपाप्मत्वादिसर्वगुणाश्रयत्वेन सकृदेव चिन्तनोपपत्तेर्नावृत्तिरिति प्राप्तेऽभिधीयते प्रदानवदेवेति ।

सर्वगुणाश्रयस्य गुणिनः परमात्मनः स्वरूपस्यैक्येऽपि तत्तद्गुणविशिष्टाकारभेदात्सकृच्चिन्तनेन तत्तद्गुणविशिष्टतत्तदाकाराणां चिन्तनानुपपत्तेरावृत्तिः करणीयेति । तत्र दृष्टान्तः । प्रदानवदेवेति । यथा 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेत्' ( यजु० २। ) 'इन्द्रायाधिराजाय' 'इन्द्राय स्वराज्ञे' ( यजु० २ ) इत्यत्र राजत्वादिगुणविशिष्टस्यैकस्यैवेन्द्रस्य

---

*छान्दोग्ये दहराकाशरूपस्य परमात्मनः । उक्त्वोपासनमुक्तं वै गुणानाञ्चिन्तनञ्च हि ॥६६॥ तत्र शङ्का भवेदेवं गुणानाञ्चिन्तने खलु । तत्तद्गुणविशिष्टत्वेन रूपेणेशचिन्तनम् ॥६७॥ आवर्त्तते न वा किं स्यादाद्यः पक्षो वरम् यतः । एकस्य ब्रह्मणः सर्वगुणानामाश्रयत्वतः ॥६८॥ चिन्तनस्योपपत्तिर्हि सकृदेवेति चेन्न यत् । सर्वगुणाश्रयस्य ब्रह्मणश्चैक्येऽपि न क्षतिः ॥६९॥ एकगुणविशिष्टाकारयुक्ते चिन्तिते सकृत् । तदन्यगुणयुक्ताकारस्य नो चिन्तनं यतः ॥७०॥

तत्तद्गुणसम्बन्धादाकारस्य भेदात्प्रदानावृत्तिर्भवति । तदुक्तम् जैमिनीये 'नाना वा देवता पृथक्त्वात्' इति ॥४२॥

## * अथ लिङ्गभूयस्त्वाधिकरणम् ॥१९॥

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ।३।३।४३।

वाजसनेयकेऽग्निरहस्ये केचिन्मनश्चितादयः साम्पादिका अग्नतः श्रूयन्ते–"मनश्चितो वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचितः" इति । तत्रायम् संशयः । किमेतेषामग्नीनां क्रियामयक्रत्वङ्गत्वमाहोस्विद्विद्यामयक्रत्वङ्गत्वमेवेति ? । तत्र कर्मप्रकरणे पठितत्वात्कर्माङ्गभूता एतेऽग्नय इति प्राप्तेऽभिधीयते–लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपीति । न हि क्रियामयक्रत्वङ्गत्वमेषां किन्तु विद्यामयक्रत्वङ्गत्वमेव । कुतः ? लिङ्गभूयस्त्वात् । ऐतस्मिन्प्रकरणे भूयांसि लिङ्गान्येषां विद्यामयत्वमाविष्कुर्वन्ति "तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते" इत्यादीनि । तद्धि लिङ्गम् प्रकरणाद्बलीयः तदपि चोक्तम् पूर्वकाण्डे "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" ( जै० सू० ३।३।१३। ) इति ॥४३॥

## पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ।३।३।४४।

अत्र पूर्वपक्षी समाशङ्कते–

न स्वतन्त्रोऽग्निः किन्तु क्रिया–क्रियामयक्रत्वङ्गः स्यात् । इष्टकाभिरग्निं चिनुते' इति प्रकृतस्य पूर्वस्य क्रियामयस्याग्नेरयं मनः संकल्पात्मको मनश्चिदाद्यग्निर्विकल्पः प्रकरणात्स्यात् । क्रियामयाग्निविकल्पत्वेन

---

*वाजसनेयके प्रोक्ता मनश्चितादिकाग्नयः । क्रियामयक्रतूनां किं स्यादेषामङ्गताऽथवा ॥७१॥ विद्यामयक्रतूनां किं युक्तमत्र भवेन्मतम् । कर्मप्रकरणे पाठादाद्यस्यैव मनोज्ञता ॥७२॥ नैव किन्तु वरञ्चान्त्यम् लिङ्गभूयस्त्वहेतुना । प्रकरणाद्बलीयो हि लिङ्ग जैमिनिसूत्रतः ॥७३॥

क्रियामयक्रत्वङ्गः स्यादित्यर्थः । विद्यारूपाणामप्येषां क्रियामयक्रत्वङ्गत्वमुपपद्यत एव । तत्र दृष्टान्तः । मानसवदिति । यथा द्वादशाहे दशमेऽहन्यविवाक्ये विद्यारूपस्यापि मानसग्रहस्य क्रियायाः प्रकरणात्तदङ्गता सम्पद्यते तद्वदिहापि ॥४४॥

## अतिदेशाच्च ।३।३।४५।

मनश्चितादीनां 'तेषामेकैकोऽग्निस्तावान् यावानसौ पूर्वः' इति पूर्वेणेष्टिकान्वितेनाग्निना मानसाग्नीनां सादृश्यस्यातिदेशाच्च तेषां क्रियाशेषत्वं प्रतीयते ॥४५॥

एवं प्राप्ते सिद्धान्तमाह—

## विद्यैव तु निर्धारणाद्दर्शनाच्च ।३।३।४६।

तुशब्दः पक्षव्यावर्तकः । विद्यैव मनश्चितादयो विद्यामयक्रत्वङ्गभूता एव न कर्माङ्गभूता इत्यर्थः । कुतः ? निर्धारणात् । 'ते हैते विद्याचित एव' इति निर्धारणं विद्यामयक्रत्वङ्गतयैवैतेषां विद्यामयत्वं द्योतयति । न कर्माङ्गत्वम् । एवम् विद्यामयक्रतुदर्शनाच्च विद्यामयक्रत्वङ्गत्वमेतेषाम् । दृश्यते च "मनसैवाधीयन्त मनसैवाचीयन्त मनसैषु ग्रहा अगृह्यन्त मनसा स्तुवन्तो मनसा शंसन्" इत्यादौ विद्यामयः क्रतुरेषामङ्गीति मनश्चितादीनां विद्यामयक्रत्वङ्गत्वमेव ॥४६॥

ननु क्रियामयक्रतुप्रकरणावगतानां मनश्चितादीनामग्नीनां क्रियामयक्रत्वङ्गत्वमेव न्याय्यम् न तु विद्यामयक्रत्वनुप्रवेशाद्विद्यारूपत्वमित्यत्राह—

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ।३।३।४७।

प्रकरणाद्धि श्रुतिलिङ्गवाक्यानां बलीयस्त्वाच्छ्रुत्यादिभिर्विद्यामयक्रत्वङ्गत्वेऽवगते न ततो दुर्बलेन प्रकरणेन बाधः । तत्र श्रुतिः—'ते हैते विद्याचित एव' इति । लिङ्गमपि 'तान् हैतानेवंविदे सर्वदा सर्वाणि

भूतानि चिन्वन्त्यपि स्वपते' इति । एवं 'एवं विदे चिन्वन्ति' इति वाक्यमपि । तस्मादेभिः प्रमा र्णैर्विद्यामयक्रत्वङ्गत्वमेवैतेषामिति ॥४७॥

पृथक्फलसम्बन्धा श्रवणाद्विधिप्रत्ययाभावाच्च न विद्यामयक्रत्वङ्गत्वमित्यत्राह--

## अनुबन्धादिभ्य. प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ।३.३.४८।

अत्र विद्यामयक्रतुविधिरवश्यं कल्पनीयः । कुतः? 'मनसैव ग्रहा अगृह्यन्त' इत्यादिष्वनुबन्धात् पूर्वोक्तश्रुत्यादिभ्यश्च । यथा दहरविद्यादीनां क्रियामयत्वात्पृथक्त्वम् तथात्रापि । दृष्टश्चानुवादसरूपे वाक्येऽपि क्वचिद्विधिर्यथा 'यदेव विद्यया करोति' इत्यादौ । तदुक्तमेव 'वचनानि त्वपूर्वत्वात्' ( जै० सू० ) इति ॥४८॥

यदप्यतिदेशात्क्रियामयक्रतुशेषताभिहिता तत्रोच्यते-

## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ३.३.४९।

न ह्यतिदेशमात्रेष्टकचिताग्निसादेश्यमेषां सम्भवति । केनचिदपि सामान्येनातिदेशस्योपलब्धेः । यथा "स एष मृत्युर्य एष एतस्मिन्मण्डले" इत्यादौ मृत्युवत्सर्वसंहारकारित्वमात्रेणातिदेशो न मण्डलपुरुषस्य तल्लोकापत्तिरप्यतिदिश्यते । तथात्रापि फलसामान्येनाप्यतिदेशस्योपपत्तेः ॥४९॥

## परेण चशब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ३.३.५०।

परेण च ब्राह्मणेन मनश्चिताद्यग्न्यभिधायिनः शब्दस्यापि ताद्विध्यं विद्यामयप्रतिपादकत्वं प्रतीयते ।

"अयं वाव लोक एषोऽग्निश्चितस्तस्यापि एव परिश्रिता." इत्यादिना "स यो हैतदेवं वेद लोकम्पृणानामेनं भूतमेतत्सर्वमभिसम्पद्यते" इति पृथक्फला विद्यैव विधीयते । अथैवं तर्हि बृहदारण्यके एवैष.मनुबन्ध आवश्यक इत्यत आह-

क्रियाप्रकरण एषामनुबन्धस्तु सम्पादनीयानामन्यङ्गानामत्र भूयस्त्वा-त्कृतः । तस्माद्विद्यामयक्रत्वंगत्वमेवैतेषां मनश्चितादीनां भावामिति ॥५०॥

* अथात्मनः शरीरभावाधिकरणम् ॥२०॥

## एक आत्मनः शरीरे भावात् ।३ ३ ५१।

'आत्मेति तूपगच्छन्ति' ( अ० सू० ४।१।३। ) इत्यत्र प्रत्यगात्मनः आत्मत्वेन परमात्मोपास्य इति वक्ष्यते । तत्र शरीरे वर्त्तमानस्य कर्मबद्धस्य प्रत्यगात्मनः कर्तृत्वभोक्तृत्वादिविशिष्टम् रूपमनुसन्धेयमुत कर्मबन्धाद्विमुक्तम् प्रजापतिवाक्योदितापहतपाप्मत्वादिगुणविशिष्टम् यथावस्त्वरूपमिति संशये, शरीरे वर्तमानस्य यादृशं रूपं तादृशेनैव रूपेण कर्मविधाविवोपासनविधावपि साधनानुष्ठानफलानुभवयोः सम्भवात्तादृशमेव तद्रूपमनुसन्धेयमिति पूर्वः पक्षः ॥५१॥

अत्राभिधीयते–

## व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ।३।३।५२।

न कर्तृत्वादिविशिष्टोऽनुसन्धेयो मुमुक्षुभिरपि तु सांसारिकादात्मनो यो व्यतिरेकः कर्मबन्धविनिर्मुक्तस्वरूपाविर्भूतापहतपाप्मत्वादिगुणविशिष्टोऽनुसन्धेयः । अस्य वास्तविकं यत्स्वरूपं तदेवानुसन्धेयमुपासनायामिति भावः । कुतः ? तद्भावभावित्वात् । 'यथा क्रतुरस्मिन् लोके पुरुषो भवति 'तथेतः प्रेत्य भवति (छा० ३।१४।१,' तं यथा यथोपासते तथैव भवति"(मुद्गल० ३ ख ) इति श्रुतेः । "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् तं तमेवैति कौन्तेय ! सदा तद्भावभावितः" (गी०)इति स्मृतेश्च ।

---

*कर्तृत्वभोक्तृतायुक्तमात्मरूपं विचिन्त्यताम् । यद्वाऽपहतपाप्मत्वविशिष्टं तत्र किं वरम् ॥७४॥ शरीरं वर्त्तमानत्वादाद्यमेव वरं मतम् । यथाक्रतुश्रुतेर्नैवमन्तिम त्विन्त्वनुत्तमम् ॥७५॥

उपलब्धिवत् । यथा यथावस्थितब्रह्मस्वरूपोपासने तथैवोपलब्धिर्भवति तथा प्रकृतोपासनेऽपीति ॥५२॥

## ॐ अङ्गावबद्धाधिकरणम् ॥२१॥

## अङ्गावबद्धास्तु न शाखा हि प्रतिवेदम् ।३।३।५३।

"ओमित्येतदक्षरमुद्गीथमुपासीत" ( छा० १।१।१ ) इतिच्छान्दोग्ये काश्चित्क्रत्वङ्गभूता उपासनाः श्रूयन्ते । तत्र संशयः । किमेता उपासना यत्र शाखासु श्रूयन्ते तास्वेव सम्बन्ध्यन्त आहोस्वित् सर्वशाखागतोद्गीथादिष्विति । किं युक्तम् ? प्रतिशाखमुद्गीथादेः स्वरभेदेन भेदाद् यत्र श्रूयन्ते तच्छाखास्थोद्गीथादिना सम्बध्यन्ते सन्निधानादिति प्राप्तेऽभिधीयते अङ्गावबद्धास्त्विति पक्षव्यावर्तकस्तुशब्दः । एता अङ्गावबद्धा उद्गीथाद्यङ्गाश्रिता उपासना न तस्यां तस्यां शाखायां विद्यमानोद्गीथादिष्वाश्रिताः किन्तु प्रतिवेदं सर्वशाखासु विद्यमानोद्गीथादिष्वाश्रिताः । हि हेतौ यस्मादुद्गीथमुपासीतेत्युद्गीथत्वजात्यविशेषस्य श्रुतेः । सर्वासु शाखासु विद्यमानानामुद्गीथादीनामुद्गीथत्वाद्यवच्छिन्नत्वेनाभेदः ॥५३॥

## मंत्रादिवद्वाऽविरोधः ।३।३।५४।

वाशब्दश्चार्थे-यथैकैकशाखावगतानां क्रत्वङ्गभूतानां मन्त्रादीनां सर्वशाखासु क्रतोरेकत्वेन सम्बन्धस्याविरोधः । आदिपदेन प्रयाजादयो ग्राह्याः तथैकशाखाविहितानामुपासनानां शाखान्तरगतोद्गीथादिषु प्राप्तेरविरोधः ॥५४॥

---

*छान्दोग्ये हि श्रुताः याश्चिद्विद्याः क्रत्वङ्गमाश्रिताः । स्वशाखास्वेव सम्बन्धस्तासां सर्वासु वा ननु ? ॥७६॥ उद्गीथादिः स्वशाखोक्तो यत्र तत्रैव बुध्यताम् । उद्गीथत्वाविशेषस्य श्रुतेश्चान्त्यं वरम् मतम् ॥७७॥ क्रत्वंगभूतमन्त्राणां क्रतवेकत्वेन सम्मतः । सम्बन्धः सर्वशाखासु तद्वदत्राप्यवेयताम् ॥७८॥

## * अथ भूमज्यायस्त्वाधिकरणम् ॥२२॥

## भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ।३।३।५५

वैश्वानरविद्यायां द्युलोकादित्यवाय्वाकाशापृथिवीषु व्यस्तेषु वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि" ( छा० ५।११।६। ) इत्यादौ समस्तस्यापि वैश्वानरस्योपासनं श्रूयते । तत्र सन्देहः । किमत्रोभयथाप्युपासन विवक्षितामुतसमस्तोपासनमेवेति । किं युक्तम् ? व्यस्तोपासनम् । कुतः ? व्यस्तोपसनस्यासकृत्प्रशंसा श्रूयते 'यः प्रशंस्यते स विधीयते' इति न्यायात्साक्षादपि विधिप्रत्ययश्रवणाच्चेति व्यस्तोपासनविवक्षितमिति प्राप्तेऽभिधीयते- भूम्न इति ।

'मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्यः' ( छा० ५।१२।२ ) इत्यादिना व्यस्तोपासनस्य निन्दया समस्तोपासनस्य दृढीकरणात्समस्तोपासनस्यैवात्र ज्यायस्त्वम् प्रतिपाद्यते न व्यस्तोपासनस्य । क्रतुवत् । यथादर्शपूर्णमासादिकस्य क्रतोः साङ्गप्रधानस्यैकस्यैव क्रतोः साङ्गप्रधानस्यैकस्यैव प्रयोगो विवक्षितो न व्यस्तानामपि प्रयाजादीनां तद्वत् । तथा हि दर्शयति समस्तोपासनस्य ज्यायस्त्वम् श्रुतिः । प्राचीनशालादिभिरुक्तानि व्यस्तोपासनानि मूर्धादिपतनानिष्टफलकत्वेन विनिन्द्य वैश्वानरात्मनः स्वर्गलोकादिपृथिव्यन्तानां मूर्धादिपादान्तावयवत्वम् विधाय "यस्त्वेतमेवं प्रदेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" ( छा० ५।१८। १। ) तथा "तद्यथेषीकातूलमग्नौ प्रोतं

---

* वैश्वानराख्यविद्योक्तम् वैश्वानरमुपासनम् । व्यस्तस्य वा समस्तस्य कार्यं तदुभयस्य वा ? ॥७९॥ असकृच्छंसितत्वेन फलोक्तेश्चादिमं वरम् । पृथक् फलाभिधानेन समस्तस्यापि वा हि तत् ॥८०॥ मूर्धादिपतनानिष्टफलकत्वेन हेतुना । निन्दितं मुनिभिः सम्यग यद् व्यस्तोपासन ततः ॥८१॥ ज्यायस्त्वं क्रतुवद् भूम्नो वेदे तस्य च दर्शनात् । वाक्यभेदप्रसंगेन पक्षस्त्वन्त्यो वरं न हि ॥८२॥

प्रदूयेतैवम् हास्य सर्वे पाप्मानः प्रदूयन्ते" ( छा० ५।२२।३। ) इति समस्तोपासनस्यैव फलम् दर्शयति तस्मात्समस्तोपासनस्यैव ज्यायस्त्वमिति ॥५५॥

### ❀ अथ शब्दादिभेदाधिकरणम् ॥२३॥

## नाना शब्दादिभेदात् ।३।३ ५६।

अत्र परमपुरुषप्राप्तिरूपमुक्तिफलिकाः वैश्वानराद्याः सर्वा विद्या अधिकृत्य विचार्यते। किमासां विद्यानामैक्यमाहोस्विन्नानात्वमिति । किं युक्तम् ? विद्यादुपासीतेत्यादिविधिप्रत्ययानां पर्यायत्वादुपास्यस्य ब्रह्मणस्तत्प्राप्तिरूपफलस्य च सर्वत्रैक्याद्विद्यैक्यमिति प्राप्तेऽभिधीयते नानेति। उक्ता विद्या नानैव। कुतः ? उपास्यस्य ब्रह्मण एकत्वेऽपि शब्दादिभेदात्। आदिनाभ्याससंख्यागुणप्रक्रियानामधेयानि ग्राह्याणि। विधेयभेदकानुबन्धभेदेभ्य इति। अर्थाज्जगदेककारणत्वजगत्सेतुत्वापहतपाप्मत्वादिभिर्विशेषणैर्विद्या भिद्यन्त इति ॥५६॥

### ❀ अथ विकल्पाधिकरणम् ॥२४॥

## विकल्पोऽविशिष्टफलत्वात् ।३ ३।५७।

ब्रह्मप्राप्तिफलानां दहरादिविद्यानामनुष्ठाने समुच्चयो विकल्पो वेति संशये किं युक्तम् ? अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादीनां स्वर्गकफलभूयस्त्ववाञ्छया समुच्चयेनानुष्ठानदर्शनवदासामपि विद्यानां ब्रह्मानुभवफलभू-

---

* वैश्वानरादिविद्यानामेकताऽनेकताऽथवा ? । उपास्यफलयोरैक्यात् पूर्व- पक्षोऽस्ति सुन्दरः ॥८३॥ मैवं कुतो यतो नाना विद्याः शब्दादिभेदतः। आदिशब्देन गृह्यन्तेऽभ्याससंख्यागुणादयः ॥८४॥

ब्रह्मप्राप्तिफलानां हि विद्यानां किं मुमुक्षुणा। समुच्चयो विकल्पो या कार्यः किञ्चात्र युज्यते ? ॥८५॥ मोक्षैकफलभूयस्त्ववाञ्छया स्यात्

यस्त्वापेक्षया समुच्चयेनानुष्ठानं सम्भवतीति प्राप्तेऽभिधीयते विकल्प इति। विकल्प एवानुष्ठाने समाश्रयणीयो न तु समुच्चयः। कुतः ? अविशिष्टफलत्वात्। सर्वासां विद्यानामपरिमितज्ञानानन्दब्रह्मानुभवरूपस्यैकस्यैव फलत्वात्। तत्रैकया विद्यया ब्रह्मानुभवे सिद्धे विद्यान्तरानुष्ठानस्य व्यर्थत्वान्नानुष्ठाने समुच्चयः ॥५७॥

## काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ।३।३।५८।

काम्या ब्रह्मप्राप्तिव्यतिरिक्तफला विद्यास्ताश्च यथेच्छं समुच्चीयेरन् विकल्प्येरन्वा। कुतः ? पूर्वहेत्वभावात्। दहरादिविद्यानामपरिमितानन्दब्रह्मानुभवरूपफलस्येव काम्यानां विद्यानां फलस्यापरिमितत्वाभावात् फलभूयस्त्वापेक्षया समुच्चयोऽपि सम्भवतीति भावः ॥५८॥

### ※ अथ यथाश्रयभावाधिकरणम् ॥२५॥

## अंगेषु यथाश्रयभावः ।३।३।५९।

कर्माङ्गाश्रयाणामुद्गीथोपासनादीनां गोदोहनादिवदधिकारान्तरत्वेनोपादाननियमः पूर्वोक्तः सम्भवति नवेति संशये उच्यते—अङ्गेष्विति। अङ्गेषूद्गीथादिष्वाश्रितानामुपासनानां यथाश्रयभावः। यथोद्गीथादय उपासनाश्रयाः क्रत्वङ्गतया प्रयोगविधिना नियमेनोपादीयन्त एव। तथोद्गीथाद्याश्रितानामुपासनानामप्युद्गीथाश्रितत्वेन क्रत्वङ्गतया नियमेनोपादानमेवेति ॥५९॥

---

समुच्चयः। फलभूयस्त्ववाञ्छातो ज्योतिष्टोमाग्निहोत्रवत् ॥८६॥ मैवं यतो विकल्पः स्यादविशिष्टफलत्वतः। फलापरिमितेः काम्यानां यथेच्छं समुच्चयः ॥८७॥

अनियतमुपादानम्प्रोक्तं गोदोहनादिवत्। कर्मांगाश्रितविद्यानां सम्भवेदथवा न तत् ॥८८॥ श्रूयते फलसम्बन्धो ह्यत्रोपासने विधौ। कर्मां-

## शिष्टेश्च ।३।३।६०।

शिष्टिः शासनम् विधानमिति यावत् । 'उद्गीथमुपासीत' इति यथांगानां प्रतिवेदं विधानं तथा तदाश्रितानामुपासनानां विधानाविशेषाच्च तदंगभावो न विरुध्यतेऽत्र उपादाननियमः ॥६०॥

## समाहारात् ।३।३।६१।

ऋग्वेदोक्तप्रणवस्य सामवेदोक्तोद्गीथस्य चैक्योपासने फलमाह श्रुतिः "होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति" ( छा० १।५।५। ) इति । अत्रोपासनस्य समाहारनियमो दृश्यते । वेदनराहित्येऽन्येन समाधानं ब्रुवती श्रुतिर्वेदनस्य नियमेनोपादानम् दर्शयति ॥६१॥

## गुणसाधारण्यश्रुतेश्च ।३।३।६२।

इतश्च नियमेनोपादानम् । उपासनाश्रयस्योंकारस्योपासनगुणस्य च "तेनेयं त्रयी विद्यावर्तते ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति" ( छा० १।१।६। ) इति साधारणश्रुतेः समाहारोऽत्र दृश्यते । तच्छब्देन प्रकृतस्य सोपासनस्य प्रणवस्यैव परामर्शात्तस्यैव च सर्वत्र सञ्चारः तथा चोपासनस्य प्रणवसहभावनियमादुद्गीथादिवदुपासनानामप्युपादाननियमः ॥६२॥

एवम् चतुर्भिः सूत्रैः प्राप्ते पक्षे सिद्धान्तयति-

## न वा तत्सहभावाश्रुतेः ।३।३।६३।

वाशब्दस्त्वर्थकः पूर्वपक्षव्यावृत्यर्थः । अङ्गाश्रितोपासनानामंगवत्स-

---

गमाश्रितत्वेन चासां क्रत्वंगता ततः ॥५९॥ शिष्टेः समाहृतेश्चाथ पक्षश्चान्यो मनोहरः । एतादृशं न वाच्यं तत्सहभावाश्रुतिर्यतः ॥६०॥ 'यदेव विद्यये'त्यस्माच्छ्रूयतेऽपि फलान्तरम् । 'यस्य पर्णमयी'त्यादेरिव नास्यार्थवादता ॥६१॥ साक्षात् साधनता यस्माद् विद्यतेऽत्र फलं प्रति । श्रुतावनियमो दृष्टः पक्षश्चायस्ततः शुभः ॥६२॥ 'एवं विद्व' इति श्रुत्यो

माहारस्य नियमो नास्ति । कुतः ? तत्सहभावाश्रुतेः । "ग्रहं वा गृहीत्वा चमसम् वोन्नीय स्तोत्रमुपाकरोति" इति यथांगानां तत्सहभावः श्रूयते । तथांगाश्रितोपासनानां तत्सहभावस्योद्गीथांगभावस्याश्रुतेः ॥६३॥

## दर्शनाच्च ।३।३।६४।

अंगाश्रितोपासनानां समुच्चयाभावस्य श्रुतौ दर्शनाच्च नोपासनोपादाननियमः । तथाहि श्रुतिः "एवं विद्ध वै ब्रह्मा यज्ञं यजमानम् सर्वांश्चर्त्विजोऽभिरक्षति" ( छा० ४।१७।१० ) इति । अत्र केवलम् ब्रह्मणो वेदनाद्यज्ञस्य यजमानस्यर्त्विजाञ्च रक्षणमुच्यते । तेनोद्गातृप्रभृतीनां वेदनाभावमवगम्यते । एतच्चोद्गीथोपासनस्यानंगत्वे सत्येवोपपद्यते । तस्मादुपादानानियमः सिद्धयति । पूर्वपठितानां समुच्चयादिलिंगानान्तु सम्भवाभिप्रायकत्वम् ॥६४॥

इति श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये तृतीयाध्यायस्य तृतीयः पादः ॥३॥

---

पास्तिर्ब्रह्मण एव हि । अपार्थत्वं श्रुतेर्नो चेत् स्याहत्विजां स्वरक्षणात् ॥६३॥ एतच्च प्रणवोपास्तेरंगाभावे हि सिध्यति । समाहारादिलिंगानां तस्मात् प्रायिकता मता ॥६४॥



श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया
आनन्दभाष्ये

# तृतीयाध्यायस्य चतुर्थः पादः ।

* अथ पुरुषार्थाधिकरणम् ॥१॥

## पुरुषार्थोऽतः शब्दादिति बादरायणः ।३।४।१।

किं कर्मणः पुरुषार्थ आहोस्विद्विद्यात इति संशयः किं युक्तम् ? कर्मणः। कुतः ? "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम्" ( छा० १।१।१० ) इति श्रुत्या सर्वकर्मसु विद्याया विनियुक्तत्वात्तस्याः कर्माङ्गत्वावगमात् । तत्त्वमसीत्यादीनां का गतिरिति चेत्तानि वाक्यानि कर्मसु कर्तृभूतप्रत्यगात्मनो याथात्म्यं बोधयन्ति कर्माङ्गभूतकर्तृयाथात्म्यानुसन्धानपूर्वककर्मानुष्ठानेन समीचीनपुरुषार्थावाप्तिरिति विद्यायाः कर्माङ्गत्वावगमेन कर्तृसंस्कारत्वनिष्पत्त्या तत्फलश्रुतेरर्थवादत्वोपपत्तेः कर्मण एव पुरुषार्थः इति प्राप्तेऽभिधीयते-पुरुषार्थोऽत इति । अतो ब्रह्मविद्यातः पुरुषार्थो ब्रह्मानुभवलक्षणः । कुतः ? "ब्रह्मविदाप्नोति परम्" इत्येवमादिशब्दात् इति भगवान् बादरयणो मन्यते ॥१॥

एवं सिद्धान्तमुपक्रम्य पूर्वपक्षयति-

---

*कर्मणः पुरुषार्थो वा विद्यातः ? किं वरं मतम् । आद्यमेव हि विद्यायाः कर्माङ्गत्वेन हेतुना ॥१॥ कर्माङ्गत्वञ्च विद्याया 'यदेव विद्यया' इति । सर्वकर्मसु विद्याया विनियुक्तत्वहेतुतः ॥२॥ आचारदर्शनाच्छ्रुत्याः समन्वारम्भणादथ । विद्यावतो विधानाद् यावज्जीवं नियमात्तथा ॥३॥ विद्यायाः पुरुषार्थस्य वादोऽर्थवाद एव हि । मैव 'ब्रह्मविदाप्नोति परमि' त्यादिशब्दतः ।४॥ उपास्यत्वेन रामस्य चोपदेशस्य दर्शनात् । कर्माङ्गता न विद्यायाः समीचीनेति बुध्यताम् ॥५॥ अनङ्गत्वेऽपि विद्यायास्तुल्यमा-

## शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ।३।४।२।

तत्त्वमस्यादिवाक्यजाततयात्म्यस्वरूपस्यात्मनः कर्मांगत्वेन कर्मकर्तृत्वेन कर्मशेषत्वात्तद्विद्याया अपि कर्तृसंस्कारत्वेन कर्तृद्वाराकर्मशेषत्वोपपत्तेः। तत्र पुरुषार्थवादोऽर्थवादः। यथाऽन्येषु पर्णमयीद्रव्ययजमानस्थाञ्जनादिसंस्कारप्रयाजादिरूपेषु द्रव्यसंस्कारकर्मस्वपापश्लोकादिफलश्रुतिरर्थवादस्तथात्रापि पुरुषार्थश्रुतिरर्थवाद इति जैमिनिराचार्यो मन्यते ॥२॥

## आचारदर्शनात् ।३।४।३।

"जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे" ( बृ० ३।१।१। ) "यक्ष्यमाणो वै भगवन्तोऽहमस्मि" ( छा० ५।११।५। ) इत्यादौ ब्रह्मविदां जनकादीनामाचारदर्शनाल्लिगाद्विद्यायाः कर्मांगत्वम् ॥३॥

## तच्छ्रुतेश्च ।३।४।४।

"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम् भवति" ( छा० १।१।१० ) इति विद्यायाः कर्मांगत्वश्रवणात्। प्रकरणादियमुद्गीथमात्रविषयेति न शक्यमभ्युपगन्तुम्। प्रकरणाच्छ्रुतेर्बलवत्त्वात्। 'यदेव विद्यया करोती"ति साक्षाच्छ्रवणम् ॥४॥

## समन्वारम्भणात् ।३।४।५।

तं विद्याकर्मणी समन्वारभेते" ( बृ० ४।४।२ ) इति श्रुतिर्विद्याकर्मणोः सामानाधिकरण्यमवगमयन्ती विद्यायाः कर्मांगत्वं ज्ञापयति ॥५॥

---

चारदर्शनम्। प्रकृतोद्गीथविद्यं वोक्तश्रुतेर्विषयः खलु ॥६॥ विभागः शतवज्ज्ञेयः समन्वारम्भणे तथा। कर्माविबोधिनः कर्मविधिनं विदुषस्ततः ॥७॥ अविशेषाद्य कर्मैव विषयो नियमस्य हि। विद्यांगमेव तत् किन्त्वनुमतिः स्तुतयेऽथवा ॥८॥ कामकारेण गार्हस्थ्यत्यागमेके वदन्ति च। सर्वकर्मोपमर्दं यच्छ्रूयते विद्यया ततः ॥९॥ आश्रमेषूर्ध्वरेतस्सु सत्वाद्विद्या न चांगकम्। विद्यायाः पुरुषार्थोस्य वादे तत्रार्थवादता ॥१०॥

## तद्वतो विधानात् ।३।४।६।

निखिलवेदार्थविज्ञानवतः कर्मण्यधिकारः श्रुतिभिरुपदिश्यते । "आचार्यकुलाद्वेदमधीत्य यथाविधान गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे" ( छा० ८।१५।१। ) इति । अतोऽपि न विद्यायाः स्वातन्त्र्येण फलजनकत्वम् किन्तुकर्मांगतयैवेति ॥६॥

## नियमाच्च ।३।४।७।

इतोऽपि विद्यायाः कर्मांगत्वम् । "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ॥ ( ई० २ ) "जरामर्यं ह्वै एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ जरया वा ह्येतस्मान्मुच्यते मृत्युना वा" इति यावज्जीवं कर्माचारनियमदर्शनात्कर्मण एव पुरुषार्थो न विद्यात इति विद्यायाः कर्मांगत्वमेव ॥७॥

इत्येवं प्राप्ते समाधानमुच्यते-

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ।३।४।८।

तुशब्दः पूर्वपक्षव्यावर्तकः । न विद्यायाः कर्मांगत्वमपितु विद्यात एव पुरुषार्थं इत्येवं भगवतो बादरायणस्य मतम् । कुतः ? अधिकोपदेशात् । वेदान्तेषु कर्मकर्तुर्जीवादधिकस्याखिलोपासकजनमनोरथपूरकस्य परब्रह्मण उपास्यतयोपदेशात् । कथमवगम्यते ? तद्दर्शनात् । वेद्यतयोपदेशस्य श्रुतिषु दर्शनात् । "तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" ( पु० सू० ) "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरणः" ( बृ० ४।४।२२। . "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" ( श्वे० ६।७ ) इति । तस्माद्ब्रह्मानुभवलक्षणस्य फलस्यावाप्तिर्विद्यात एवेति ॥८॥

यदुक्तमाचारदर्शनाद्विद्यायाः कर्मांगत्वमिति तत्राह-

## तुल्यन्तु दर्शनम् ।३।४।९।

विद्यायाः कर्मांगत्वाभावेऽप्याचारदर्शनं तुल्यम् "एतद्धस्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इत्यादिकाः श्रुतयो विदुषः कर्माचाराभावं दर्शयन्ति । तुशब्दश्चैतस्य मतस्य प्राबल्यमुपपादयन् जनकादिज्ञानिनां कर्माचारस्य लोकसंग्रहार्थत्वेनान्यथासिद्धिं दर्शयति । मुमुक्षुभिस्तु सकामस्य कर्मणो विद्याविरोधितया लोकसंग्रहार्थमनुष्ठानं त्यागो वा निष्कामस्य कर्मणस्तु विद्यांगत्वेनानुष्ठानमिति विवेकः । विद्यायाः कर्मांगत्वे तु कथमपि न कर्मत्याग उपपद्यते ॥९॥

यच्चोक्तं श्रुतिरेव विद्यायाः कर्मांगत्वमवबोधयति-तत्राह-

## असार्वत्रिकी ।३।४।१०।

'यदेव विद्यया करोती' ति श्रुतिरसार्वत्रिकी सर्वविद्याविषया न भवति, किन्तु प्रकृतोद्गीथविद्यामात्रविषयता हि तस्याः । अतो न श्रुतिबलेन विद्यायाः कर्मांगत्वं सिद्धयति ॥१०॥

यदपि समन्वारम्भणादित्युक्तं तत्राह-

## विभागः शतवत् ।३।४।११।

'तं विद्या कर्मणि समन्वारभेते' इत्यत्रापि विद्याकर्मणो विभागो ज्ञेयः। विद्या हि स्वफलाय विद्यावन्तं समन्वारभते कर्म च कर्मानुष्ठातारमिति । शतवत् । यथाऽभ्यां शतंदीयतामित्युक्ते विभज्य पञ्चाशदेकस्मै पञ्चाशदेकस्मै दीयते तद्वदित्यर्थः ॥११॥

यत्तूक्तं विद्यावत एव कर्मण्यधिकारस्तस्माद्विद्या कर्मांगमिति-तत्राह--

## अध्ययनमात्रवतः ।३।४।१२।

'आचार्यकुलाद्वेदमधीत्ये' ति वाक्यं स्वाध्यायस्य फलवदर्थावबोधि-

त्वदर्शनेन कर्मविबोधिनश्च कर्म विधीयते न विद्यावतः । मात्रपदेन विद्याया व्यावर्तनात् । न च मात्रपदेन कर्मज्ञानमपि व्यावृत्यताम् । कर्मज्ञानं विना कर्मानुष्ठानासम्भवात् । तस्मान्न विद्यायाः कर्माङ्गत्वम् ॥१२॥

यत्पुनः 'कुर्वन्नेवेह कर्माणी' ति वाक्यमविशेषेण यावज्जीवं कर्मानुष्ठानं दर्शयति तत्राह—

## नाविशेषात् ।३।४।१३।

'कुर्वन्नेवेह कर्माणी' ति नियमस्य न केवलकर्मविषयत्वमुपपद्यते । कुतः ? अविशेषात् फलसाधनाय स्वातन्त्र्येण कर्मविषयोऽयं नियम इति न कश्चिद्विशेषो हेतुः । प्रकृतवाक्ये तु फलप्राप्त्युपायभूतविद्याया अङ्गतामुपगतानि कर्माण्येव विहितानीति सुगमः पन्थाः । अत एव "सत्त्वशुद्धौ ध्रुवा स्मृतिः" (छा० ७।२६।२) 'अनन्यचेताः सततं यो मां स्मरति नित्यशः'(गी० १२।) इति श्रुतिस्मृतिभ्यो ध्रुवस्मृतिमतोऽनन्यचेतस्त्वेन नित्यशः परमपुरुषस्य सातत्येन स्मरणपरस्य तन्नित्ययुक्तस्य तदेकभक्तेस्तदेकात्यर्थप्रियस्य ब्रह्मज्ञानिनो मनसः क्षणमपि ब्रह्मचिन्तनव्यतिरिक्तवस्त्वन्तरचिन्तनपरत्वानुपपत्तेः कर्मानुष्ठानकालालाभादिति भगवदुपासनाविरोधिकर्मणा न तस्य प्रयोजनम् । तस्मान्न विद्यायाः कर्माङ्गत्वम् ॥ १३ ॥

## स्तुतयेऽनुमतिर्वा ।३।४।१४।

'कुर्वन्नेवेह कर्माणी' ति वाक्यार्थं सैद्धान्तिकेनार्थेन योजयति । वाशब्दोऽवधारणार्थकः । "ईशावास्यमिदं सर्वम्" (ई० १) इति विद्याप्रकरणाद्ब्रह्मविद्यास्तुतय एवेयं विदुषः कर्मानुमतिः । सद्विद्याबलेन कर्माण्यनुतिष्ठन्नपि कर्मफलेन न बध्यत इति भावः ॥ १४ ॥

## कामकारेण चैके ।३।४।१५।

इतोऽपि न विद्या कर्माङ्गम् । यत एके शाखिनो ब्रह्मविद्यावतः कामकारेण गार्हस्थ्यत्यागमामनन्ति । "एतत्पूर्वे प्रजां न कामयन्ते किं प्रजया

करिष्यामो येषां नोऽयमात्माऽयं लोकः" (बृ० ४।४।२२।) इति विदुषः स्वेच्छया कर्मसाधनप्रजादित्यागो विद्यायाः कर्माङ्गत्वाभावे लिंगम् ॥१५॥

## उपमर्दञ्च ।३।४।१६।

इतश्च न कर्मांगत्वं विद्यायाः । "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" (मु० २।२।८।) इति विद्यायाः सर्वकर्मोपमर्दञ्च श्रूयते । तथा च ब्रह्मविद्यायाः कर्मविनाशकत्वेन तद्विरोधित्वान्न विद्यायास्तदंगत्वमुपपद्यते । दृष्टे-इति दर्शनसमानाकारतां नीते सतीत्यर्थः ॥ १६ ॥

## ऊर्ध्वरेतस्सु च शब्दे हि ।३।४।१७।

इतोऽपि न विद्यायाः कर्मांगत्वम् । ऊर्ध्वरेतस्सु चाश्रमेषु विद्यायाः सत्वात्तेषामग्निहोत्रादिकर्मानुष्ठानानधिकारान्न विद्या कर्मांगम् । नह्यंगिनोभावेंगसत्वं दृष्टचरम् । ननूर्ध्वरेतसः केचिदाश्रमा एव न सन्ति , यतः "जरामर्यं ह वै एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ जरया वा ह्येतस्मान्मुच्यते मृत्युना वा'' 'यावज्जीवमग्निहोत्रं जुहोति (आप० श्रौ० ३।१४।८) इत्यादिश्रुतिभ्यो यावज्जीवमग्निहोत्रादिकर्मणोनुष्ठानस्यावगमादित्यत आह शब्दे हीति । वैदिकशब्दे हि उर्ध्वरेतस आश्रमा उपलभ्यन्ते "त्रयो धर्मस्कन्धाः" (छा० ५।१०।१।, "तपः श्रद्धे येऽह्युपवसन्त्यरण्ये" (मु० १।२।११) "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" (बृ० ४।४।२२।) "ब्रह्मचर्यादेव प्रव्रजेत्" (जा० ४। ) इत्यादौ । यावज्जीवश्रुतिहि विरक्तिरहितानामेवाग्निहोत्रादिकर्मानुष्ठेयतया विधत्ते । अत एव "यदहरेव विरजेत् तदहरेव प्रव्रजेत्" (जा० ४) इत्यस्या अपि सामञ्जस्यम् । 'जायमानो ह वै ब्राह्मणस्त्रिभिऋ'णैऋ'णवानि' त्यादिब्राह्मणस्यापि जायमानो-गृहस्थः सम्पद्यमान इत्यादिरर्थोऽवगन्तव्य इत्यन्यत्र विस्तरः ॥१७॥

## परामर्शं जैमिनिरचोदनाच्चापवदति हि ।३।४।१८।

'त्रयो धर्मस्कन्धा' इत्यनेनोर्ध्वरेतसामाश्रमाणामविधानाद्ब्रह्मसंस्थ-

त्वस्य स्तुत्यर्थं परामर्शमनुवादं जैमिनिराचार्यो मन्यते। यतोऽन्या श्रुतिरपवदति चाश्रमान्तरम् 'वीरहा वा एष देवानां योऽग्निमुद्वासयते" (यजु० १।५।२।) "आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः (तै० १।११।१। ) इत्यादिका श्रुतिराश्रमान्तरं नानुष्ठेयमित्यवगमयतीति जैमिनिः ॥ १८ ॥

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ।३।४।१६।

आश्रमान्तरमप्यनुष्ठेयं गृहस्थाश्रमवदेवेति भगवान् बादरायणो मन्यते। कथमवगम्यते। साम्यश्रुतेः। अवश्यानुष्ठेयगृहस्थाश्रमसाम्यमाश्रमान्तराणामपि श्रूयते। तथाहि-त्रयो धर्मस्कन्धाः यज्ञोऽध्ययन दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति"। (छा० २।२३।१) इति वाक्यस्य ब्रह्मसंस्थस्तुतितात्पर्यकतयाऽभिधानम्। तच्च गृहस्थाश्रमवदितरेषामपि समानम्। धर्मस्कन्धाः धर्मसाधकाश्रमरूपास्त्रयः पन्थानः। तत्र यज्ञाध्ययनदानैर्गृहस्थाश्रमोऽभिधीयते तपःपदाभिधेये च वैखानसपारिव्राज्ये एवोभयत्रापि तपसोऽनुष्ठेयतया प्राधान्यात्। तृतयो ब्रह्मचर्याश्रमो ब्रह्मचारिपदेनोच्यते। एते च पुण्यलोका भवन्ति। एषां चतुर्णामाश्रमाणां मध्ये यो ब्रह्मसंस्थः ब्रह्मणि सम्यगवस्थितिर्यस्य स एवामृतत्वमेतीत्यर्थः। ब्रह्मसंस्थत्वञ्च चातुराश्रम्येष्वधिकज्ञानिनः कस्यचिदपि परमपुण्यकृपापात्रस्य सम्भवत्येवेति समानम्। अयमर्थो गीताशास्त्रेऽपि विस्तरेणाभिहितः। "ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः। अनन्येनैव योगेन मां ध्यायन्त उपासते" "तेषामहं समुद्धर्त्ता" "ईश्वरः सर्वभूतानाम्" "तमेव शरणं गच्छ" "सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज" (गी. ) इत्यग्निहोत्रादिसर्वाश्रमधर्मपरित्यागपूर्वकभगवदेकशरणस्य भगवदेकोपायस्य ब्रह्मसंस्थस्याश्रमान्तरेभ्यः पृथक्कृत्याभिहितत्वात्। तस्मात्तत्तदाश्रमधर्मेऽरुचिमतः परमविरक्तस्य परमपुरु-

पैकचिन्तकत्य तदेकशरणस्य ज्ञानिभक्तस्य सर्वाश्रमश्रेष्ठतया गीताशास्त्रेऽसकृदुक्तत्वात्परमात्मानुरक्तिरसिकः स एव विरक्ताश्रमोऽनुष्ठेयो मुमुक्षुभिः । वीरहेत्यादिश्रुतेर्ज्ञानिभक्तव्यतिरिक्ताज्ञपुरुषविषयत्वान्न विरोध इति ॥१९॥

यच्चोक्तं "त्रयो धर्मस्कन्धा" इत्यस्यानुवादकत्वमिति तन्निराकृत्य "विधित्वमे" व तस्येत्युपपादयति—

## विधिर्वा धारणवत् ।३।४।२०।

वाशब्दोऽवधारणार्थः । सर्वेषामाश्रमाणामस्मिन्वाक्ये विधिरेव नानुवादः । नन्वनेकाश्रमविधाने वाक्यभेदः स्यादितिचेन्न विध्यविषयाणामाश्रमाणामपूर्वविधेरावश्यकत्वेन वाक्यभेदस्येष्टत्वात । एकवाक्यताप्रतीतावपि तत्त्यागेनापूर्वार्थविधौ दृष्टान्तमाह–धारणवदिति । यथा "अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति" इत्यत्राधो धारणेनैकवाक्यता ज्ञाताऽपि परित्यज्यते विधीयते च स्रुग्दण्डस्योपरि समिद्धारणमपूर्वार्थतया । श्रुतौ हिशब्दश्चानुवादत्वद्योतकोऽप्यसम्भवदर्थकत्वादुपेक्ष्यत इति स्पष्टमेतत् "विधिस्तु धारणेऽपूर्वत्वात्" (जै० सू० ३।४।१५।) इति प्रकरणे । तथाऽत्राप्याश्रमपरामर्शश्रुतिर्विधिरेवेत्यवगम्यते । अन्ये तु ज्ञानिनो विरक्तस्य भगवद्भक्तस्य विशुद्धाश्रमावस्थितत्वेन तल्लक्षणमस्मिन्वाक्ये ब्रह्मसंस्थत्वमेव विधीयते । गृहस्थाद्याश्रमाननूद्यानित्यफलत्वेन तेषामनुष्ठान आदरातिशयाभावमभिधाय ब्रह्मसंस्थत्वस्यैवाविनाशिफलत्वेनात्र स्तूयमानत्वाद् । यत्स्तूयते तद्विधीयत इति न्यायादिति सर्वं समञ्जसम् । तस्मादूर्ध्वरेतस्स्वाश्रमेषु ब्रह्मविद्याया विधानाद्विद्यायाः कर्माङ्गत्वाभावात्तस्या एव पुरुषार्थ इति सिद्धम् ॥ २० ॥

❀ अथ स्तुतिमात्राधिकरणम् ॥२॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ।३।४।२१।

उद्गीथेत्यादिविद्यासु या रसतमता श्रुता । किमुद्गीथस्तुतिः सा

उद्गीथादिविद्यासु श्रूयते "स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः" ( छा० १।१।३। ) इति। तत्र किमिदं रसानां रसतमत्वादिकं कर्माङ्गोद्गीथस्तुतिमात्रमाहोस्विदुद्गीथोपासनायां गुणस्य विधानमिति संशये किं युक्तम् ? रसतमत्वादिवाक्यं सर्वमपिकर्माङ्गविधिस्तुतिमात्रम्। "इयमेव जुहूरादित्यः कर्मः स्वर्गोलोक आहवनीय" इतिवत् कर्माङ्गभूतोद्गीथादिसम्बन्धित्वेनोपादानादिति चेन्न। कुतः ? अपूर्वत्वात्। जुह्वादिविधिवदुद्गीथमुपासीतेतिप्रकरणान्तरगतस्योद्गीथादिविधेरत्रासन्निधानात्। विधिशेषत्वा सम्भवेनं तत्स्तुतिपरत्वानुपपत्तेः। उद्गीथाद्युपासनानांरसतमत्वादिगुणानचापूर्वत्वात् प्रमाणान्तराप्राप्तत्वाद्यागादिवद्विधेयत्व मेवेति ॥२१॥

## भावशब्दाच्च ।३।४।२२।

इदानीं विधेयत्व स्फुटयति। 'उद्गीथमुपासीत' 'सामोपासीत' इत्यादिविधिशब्दाच्चकारादपूर्वत्वाच्च विधयेत्वमेवेत्युपासनायां गुणविधानार्थकमेवेदं वाक्यम् ॥२२॥

### * अथ पारिप्लवार्थाधिकरणम् ॥३॥

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ।३।४।२३

वेदान्तेषु 'प्रतर्दनो ह वै दैवोदासि" ( कौ० ३।१। ) "अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः" ( बृ० ४।५।१ ) इत्येवमाद्या आख्यायिकाः श्रूयन्ते। ताः किं पारिप्लवार्था आहोस्वित्सन्निहितविद्यास्तुत्यर्था इति

---

च विधानं वा गुणस्य हि ॥११॥ स्तुतिमात्रमुपादानान्नैवमपूर्वता यतः। उपास्तिविधिशब्दाच्च तादृग्दृष्टिर्विधीयते ॥१२॥

* 'प्रतर्दनो ह वै दैवोदासि' रित्यादिकाः कथाः। ताः किं पारिप्लवार्थाः स्युर्विद्यायाः स्तुतयेऽथवा ? ॥१३॥ अखिलाख्यायिकानां पारिप्लवे विनियोगतः। आद्यो, मैवं यतस्तत्र कादिचदेव विशेषिताः ॥१४॥ एकवाक्योपबन्धात्तद् विद्याविशेषशेषता।

संशये किं युक्तम् ? पारिप्लवार्था इति । 'आख्यानानि शंसतीति समेपामाख्यानानां पारिप्लवे विनियोगात् । इति प्राप्त उच्यते-इति चेन्नेति-नैव भवितुमर्हति । कुतः ? विशेषितत्वात् । 'पारिप्लवमाचक्षीतेत्युपक्रम्य 'मनुर्वैवस्वतो राजा' इत्याद्यश्वमेधयज्ञवाक्यशेषे कासांचित्कथानां पारिप्लवशेषत्वेन विशेषितत्वात् । अत औपनिषदकथानां न पारिप्लवशेषत्वम् ॥२३॥

तर्हि किमर्था औपनिषदकथा इत्यत आह—

## तथा चैकवाक्योपबन्धात् ।३।४।२४।

एवं रीत्या पारिप्लवार्थत्वाभावे सत्येकवाक्यतोपबन्धात् ।औपनिषदाख्यायिकानां "आत्मावारे द्रष्टव्यः श्रोतव्यो निदिध्यासितव्यः" ( बृ० ४।५।६। ) इत्यादिविधिनैकवाक्यत्वदर्शनाद् विद्यास्तुतिपरत्वेन विद्यासौकर्यार्थत्वावगमाद्विधिसंनिधिपठिततत्तद्विद्याशेषत्वमेवेति सिद्धम् ॥२४॥

### * अथाग्नीन्धनाद्यधिकरणम् ॥४॥

पुरुषार्थोतः शब्दादित्यधिकरणे विद्यायाः स्वातन्त्र्यं प्रदर्श्य तत्प्रसङ्गेन प्राप्त विचारं परिसमाप्य पुरुषार्थाधिकरणस्य फलमाह -

## अत एव चाग्नीन्धनाद्यनपेक्षा ।३।४।२५।

किं ब्रह्मविद्यायाः स्वफलब्रह्मप्राप्तौ शेषत्वेन यज्ञादिकर्मणामपेक्षास्ति आहोस्विन्नेति संशये अस्तीति पूर्वः पक्षः । कुतः ? "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" । इत्यादि श्रुतेरिति प्राप्तेऽभिधीयते-अत एवेति । ब्रह्मविद्यायाः स्वातन्त्र्येण ब्रह्मप्राप्तिरूपपुरुषार्थहेतुत्वादेवा-

---

*आश्रमेपूर्ध्वरेतस्सु विद्या स्वफललब्धये ॥१५॥ अग्निहोत्रादिकर्माण्यपेक्षते चाथवा न हि । विप्रा वेदितुमिच्छन्ति वेदानुवचनादिना ॥१६॥ तस्मादाद्यो न चैवं स्याद् विद्यावत्त्वश्रुतियंतः अपेक्षा सर्वदा तत्र परञ्चाश्रमकर्मणाम् । ॥१७॥

न्नीन्धनादिसाध्ययज्ञादिकर्मापेक्षा नास्ति। आदिपदं कर्मसाधनभूतान्नघृतादिपरम्। विविदिषायामेव यज्ञादिकर्मणां विनियोगश्रवणात्। निष्पन्नायां ब्रह्मविद्यायां प्रयोजनाभावाद्। तत्तदाश्रमोचितकर्मणामेवापेक्षेति निरवद्यम् ॥२५॥

ॐ अथ सर्वापेक्षाधिकरणम् ॥५॥

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ।३।४।२६।

किं ब्रह्मविद्यायाः स्वोत्पत्तौ यज्ञादिकर्मणामपेक्षास्ति न वेति संशये यथा ब्रह्मविद्यायाः स्वफले मोक्षे यज्ञादिकर्मापेक्षा नास्ति तथा स्वोत्पत्तावपि न कर्मापेक्षेति प्राप्तेऽभिधीयते—सर्वापेक्षेतिविद्यायाः--स्वोत्पत्तौ सर्वेषामाश्रमकर्मणामपेक्षास्ति । कुतः ? यज्ञादिश्रुतेः । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' । इति वेदानुवचनेन ब्रह्मचारिणः यज्ञेन दानेन गृहस्थास्तपसा वानप्रस्था अनाशकेन चतुर्थाश्रमिण इति सर्वेषां ब्रह्मचर्याद्याश्रमकर्मणां ब्रह्मविद्योत्पत्तिसाधनत्वश्रवणात्। ब्रह्मज्ञानोत्पत्तिप्रतिबन्धकान्तःकरणमालिन्यनिवृत्त्यादिपरम्परया ब्रह्मज्ञानस्य यज्ञादिजन्यत्वेन यज्ञादीनां ब्रह्मविद्योत्पत्तिसाधनत्वमवगम्यते। विविदिषन्तीत्यत्र वर्तमाननिर्देशेऽपि विधिः कल्प्यते । विविदिषासन्निधानात् यज्ञादीनां बहिरंगत्वम्। यथा विद्योत्पत्तौकर्मापेक्षा तथा विद्याफलभूत मोक्षेऽपि स्यादित्यत आह-अश्ववदिति । यथाऽश्वो योग्यताबलाद्रथचर्यायां विनियुज्यते न लांगलाकर्षणादौ। तथा योग्यताबलात्कर्माणि ज्ञानोत्पत्तावुपयुज्यन्ते न मोक्षे योग्यताभावादिति ॥२६॥

---

*स्वोत्पत्तौ ब्रह्मविद्याया ननु यज्ञादिकर्मणाम्। अपेक्षाऽस्ति न वा ? किं स्यादाद्य एव कुतः शृणु ॥१८॥ अपेक्षा स्वफले चेन्न स्यात् स्वोत्पत्तौ कुतश्च सा ? इति चेदुच्यते ब्रह्मज्ञाने यज्ञादिजन्यता ॥१९॥ यज्ञादिकर्मणां तस्मादपेक्षा ज्ञानजन्मनि । योग्यत्वाद्रथचर्यायां यथा चाश्वो नियुज्यते ॥२०॥ विद्योत्पत्तौ तथा कर्म, न मुक्तावुपयुज्यते ।

## * अथ शमदमाद्यधिकरणम् ।।६।।

## शमदमाद्युपेतःस्यात्तथापि तु तद्विधेस्तदंगतया तेषामवश्यानुष्ठेयत्वात् ।३।४।२७।

यज्ञादीनां ज्ञानोत्पत्तौ बहिरंगत्वमुक्त्वा शमादीनामन्तरंगत्वमुच्यते । किं विद्यानिष्पत्तये गृहस्थैः शमादयोऽनुष्ठेया न वेति संशये गृहस्थानां करणव्यापाररूपकर्मांगत्वेन तदनुष्ठानपरत्वात्कर्मासक्तमानसैर्गृहस्थैः कर्मानुष्ठानविपरीतशमाद्यनुष्ठानासम्भवात् । ऊर्ध्वरेतस्सु च *शमादिविनियोगस्य चोपपत्तेर्गृहस्थैरननुष्ठेयाः शमादय इति प्राप्तेऽभिधीयते-समाद्युपेतस्स्यादिति । यद्यपि गृहस्थः यज्ञादिकर्मसु विनियुक्तत्वेन तदासक्तस्तथापि मुमुक्षुर्ब्रह्मविद्यार्थी गृहस्थः शमाद्युपेतः स्यादेव । कुतः ? तदंगतया तद्विधेः । "तस्मादेवं विच्छान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वात्मन्येवात्मानं पश्यति" ( बृ० ४।४।२३। ) इति सामान्येन विद्यांगतया तेषां शमादीनां विधानात् । विहितानां चैषामवश्यानुष्ठेयत्वात् । यथा यज्ञादीनां बहिरंगानां विद्योत्पत्तिहेतुत्वेनानुष्ठानं तथा 'तस्मादेवं विद्' ति विद्यासान्निध्याच्छमादीनामपि विद्योत्पत्त्यन्तरंगसाधनत्वेनावश्यानुष्ठेयत्वादिति ।।२७।।

## + अथ सर्वान्नानुमत्यधिकरणम् ।।७।।

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ।३।४।२८

---

*विद्यानिष्पत्तयेऽनुष्ठेया गृहस्थैः शमादयः ।।२१।। अथवा न हि ? किं युक्तमत्यमेव वरं मतम् । कर्मासक्ता गृहस्था हि कर्मणि विनियुक्तितः ।।२२।। तस्माच्छमाद्यनुष्ठाने तेऽसमर्था विरोधतः । अनुष्ठेया गृहस्थैस्ते विद्याऽङ्गत्वेन विद्यते ।।२३।। विधान हि शमादीनां 'शान्तो दान्त' इतिश्रुतेः । विरोधोऽपि न कश्चिद्यत् तेषां विषयभेदता ।।२४।।

+सम्प्रोक्ता प्राणविद्यायां सर्वान्नानुमतिः किल । सर्वदा साऽथवा

बृहदारण्यके श्रूयते-प्राणविद्यायां "न ह वास्यानन्नं जग्धं भवति (बृ० ६।१।१४।) इति। अस्य प्राणोपासकस्य सर्वं पदार्थजातमनन्नमनदनीयं न भवति किन्त्वदनीयमेव भवतीत्यर्थः। तत्र संशयः। किमियं प्राणोपासकस्य सर्वान्नानुमतिः सर्वदा आहोस्वित्प्राणात्ययापत्तावेवेति किं युक्तम्? अविशेषश्रवणात्सर्वदेति प्राप्तेऽभिधीयतेसर्वान्नानुमतिश्च प्राणात्यय इति। प्राणात्यय एव परस्यामापदि विद्वांसमविद्वांसं प्रति सुरावर्ज्यं सर्वमन्नमदनीयत्वेनानुमतं नानापदि। कुतः? तद्दर्शनात्। श्रुतावापत्काले प्राणात्यये चाक्रायणर्षेरभक्ष्यभक्षणत्वदर्शनात्। तथा हि-मटचीहतेषु कुरुषु दुर्भिक्षे जाते क्षुत्तृड्भ्यां पीडितः सभार्यश्चाक्रायण उषस्तिर्ब्रह्मविदग्रेसरः कदाचिद्धस्तिपालकदेशमाश्रितोऽनशनेन प्राणसंशयमापन्नो हस्तिपालकेन प्रदत्तान् तदुच्छिष्टान् कुल्माषान् भक्षितवान्। पुनरनुपानायेभ्येनोक्ते 'उच्छिष्टं वै मे पीतं स्यादि'ति प्रतिषेधः कृतः। पुनश्चैते कुल्माषा नोच्छिष्टा इतीभ्येन पृष्टेनेत्याह' चाक्रायणस्तत्र हेतुमभिदधौ। कुल्माषभक्षणं यद्यहं न कुर्यां तर्हि मे जीवनमेव न स्यादुदपानन्तु तडागादिषु स्वतो भविष्यतीति स्पष्टमेतच्छान्दोग्योपनिषदः प्रथमस्य दशमखण्डे। तस्मात्प्राणात्ययापत्तौ विदुषां सर्वान्नानुमतिदर्शनात् प्रकृते प्राणोपासकस्य सर्वदा सर्वान्नानुज्ञानं तत्स्तुत्यर्थतयार्थवादमात्रम् ॥२८॥

## अबाधाच्च ।३।४।२६।

इतश्च नानापदि सर्वान्नीनत्वं ब्रह्मविदः। "आहार शुद्धौ सत्वशुद्धिः सत्वशुद्धौ ध्रुवा स्मृतिः" (छा० ७।२६।२।) इत्याहारशुद्धिविधेरबाधाच्च न सर्वदा सर्वान्नानुमतिः किन्तु प्राणात्यय एव ॥२६॥

---

प्राणात्ययापत्तौ? वरञ्च किम् ॥२५॥ आद्यमेव समीचीनं विशेषस्याप्रतीतितः। मैवं कुतो यतश्चात्र ह्यन्त्य तद्दर्शनाद्वरम् ॥२६॥ आहारशुद्धिवाक्यस्य बाधाभावात् स्मृतेऽपि। सुरापाननिषेधेन स्वेच्छाचारस्य वर्जनात् ॥२७॥

## अपि च स्मर्यते ।३।४।३०।

अपि च प्राणसंशय एव सर्वान्नीनत्वं स्मर्यते तत्वविदाम् । "प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" इति ॥३०॥

## शब्दश्चातोऽकामकारे ।३।४।३१।

यतः सर्वान्नीनत्वमापद्विषयकमेव विदुषामतः कामकारे स्वेच्छाचारे प्रतिषेधकः शब्दोऽस्ति "तस्माद्ब्राह्मणः सुरां न पिबेदि' ति कठसंहितायाम् । तस्मात्प्राणात्ययापत्तावेव सर्वान्नानुमतिरिति सिद्धम् ॥३१॥

### * अथ विहितत्वाधिकरणम् ॥८॥

## विहितत्वाच्चाश्रमकर्मापि ।३।४।३२।

सर्वापेक्षेत्यादिसूत्रे यज्ञादीनां विद्यांगत्वमुक्तम् । इदानीं तानि यज्ञादीनि कर्माणि किममुमुक्ष्वाश्रमस्यांगभूतान्युत नेति संशये केवलाश्रमस्याप्यंगत्वे नित्यानित्यसंयोगविरोधः स्यादिति न केवलाश्रमधर्मत्वमिति प्राप्तेऽभिधीयते-विहितत्वाच्चाश्रमकर्मापीति । केवलाश्रमिणाप्यनुष्ठेयानीति । कुतः ? 'यावज्जीवमग्निहोत्रं जुहोति' इति जीवननिमित्ततया विहितत्वात् । एकेनैव कर्मैकेनैव विनियोगेनोभयाङ्गत्वे नित्यानित्यसंयोगविरोध उपपद्यते । इह तु यावज्जीवमित्यमुमुक्ष्वधिकारत्वात् 'ब्राह्मणा विविदिषन्ति यज्ञेने' ति मुमुक्ष्वधिकारत्वाद्विनियोगपृथक्त्वेन न विरोधः ॥३२॥

नन्वेवं यज्ञादिकर्मणां मुमुक्ष्वनुष्ठेयत्वं न स्यादित्यत आह—

---

* अमुमुक्ष्वाश्रमाङ्गानि यज्ञादीन्युत नैव हि । इत्येवं संशये युक्तं किं भवेदन्तिमं वरम् ॥२८॥ नित्यानित्यत्वसंयोगविरोधश्चान्यथा भवेत् । यावज्जीवं श्रुतौ तेषां विधानादादिमं वरम् ॥२९॥ विरोधपरिहारस्तु ह्यधिकारविभेदतः । किञ्च सिद्धे विरोधोऽयं न च साध्ये कथञ्चन ॥३०॥

## सहकारित्वेन च ।३।४।३३।

'तमेत' मित्यादिश्रुत्या यज्ञादीनां विद्यार्थत्वेन विहितत्वात् सत्त्वशुद्धिद्वारा विद्यासहकारित्वेन मुमुक्षुणाऽपि तान्यनुष्ठेयानीत्यधिकारभेदप्रदर्शनेनोक्तविरोधः परिहृतः सूत्रकारेण । यथा 'खादिरो यूपो भवति' 'खादिरं वीर्यकामस्य' इत्येकस्यैव खादिरत्वस्य शास्त्रद्वयात् क्रत्वर्थत्वेन नित्यत्वं वीर्यार्थत्वेनानित्यत्वञ्च विरुध्यते तथेहाऽपि ॥३३॥

## सर्वथाऽपि त एवोभयलिंगात् ।३।४।३४।

नापि कर्मान्तरत्वम् । यज्ञादिकर्मणां विद्यार्थत्वमाश्रमार्थत्वं वा भवेत् सार्वथापि त एव यज्ञादय इत्येव प्रत्ययः । न कर्मस्वरूपभेदः । कथमवगम्यते । उभयलिङ्गात् । उभयत्रापि यज्ञादिशब्दैरेव श्रुतौ समुपस्थाप्य विनियोगदर्शनात् । कर्मभेदकानां प्रमाणानाञ्चादर्शनात् ॥३४॥

## अनभिभवञ्च दर्शयति ।३।४।३५।

विद्योत्पत्तिप्रतिबन्धकरूपाभिभवाभावं च दर्शयति श्रुतिः "धर्मेण पापमपनुदति" इति । कर्मानुष्ठानेनान्तःकरणविशुद्धौ प्रकृष्टा विद्योपजायते । तस्मात्त एवोभयत्र यज्ञादयस्ते च केवलाश्रमिणाप्यनुष्ठेया एवेति ॥३५॥

### ❀ अथ विधुराधिकरणम् ॥९॥

## अन्तरा चापि तु तद्दृष्टेः ।३।४।३६।

---

विद्यायां विधुराणां किं नाधिकारोऽस्ति वा ननु । विद्यासाधनभूतानामाश्रमयोग्यकर्मणाम् ॥३१॥ अभावान्नास्ति, नैतद्धि कुतस्त्वेदमिष्यते । श्रुतौ संवर्त्तरैक्वादेर्विद्यानिष्ठत्वदर्शनात् ॥३२॥ जपादिभिश्च धर्मैर्हि विद्याऽनुग्रहसम्भवात् । लिङ्गात् साधनबाहुल्याच्चाश्रमित्वं वरं मतम् ॥३३॥

आश्रमधर्माणां विद्यासहायकत्वमभिहितम् । इदानीमाश्रमविधुराणामन्तरालानां ब्रह्मविद्यायामधिकारोऽस्ति न वेति संशये 'यज्ञेन दानेन तपसानाशकेन' स्वाश्रमकर्मणामेव विद्यासाधनत्वश्रवणादनाश्रमिणां न तत्राधिकार इति प्राप्तेऽभिधीयते-अन्तरेति । आश्रममन्तरा वर्तमानस्य विद्यायामस्त्येवाधिकारः । कुतः ? तद्दृष्टेः । श्रुतावनाश्रमिणामपि रैक्वभीष्मसंवर्तवाचक्नवीप्रभृतीनां विद्यानिष्ठत्वदर्शनात् । आश्रमानाश्रमसाधारणैर्जपोपासनादिभिरेवानाश्रमिणामपि विद्यानुग्रहो भविष्यतीत्यतोऽस्त्येव विधुराणामपि ब्रह्मविद्यायामधिकारस्ततस्तेषां मोक्षसिद्धिरिति ॥३६॥

## अपि स्मर्यते ।३।४।३७।

"जप्येनापि च संसिद्ध्येद्ब्राह्मणो नात्र संशयः ।

कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते" ॥ (मनु. २।८७) इत्यनाश्रमिणामपि जपादिभिरेव विद्यासिद्धिः स्मर्यते ॥३७॥

## विशेषानुग्रहश्च ।३।४।३८।

किञ्चानाश्रमिधर्मैर्जपोपवासदेवाराधनादिभिरपि विद्याया अनुग्रहः श्रुतावप्युपलभ्यते "तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मान मन्विष्यात्" ( प्र० १।१० ) इति ॥३८॥

कस्तत्र 'भयोविशेष' इत्याशङ्क्याह—

## अतस्त्वितरज्ज्यायो लिंगाच्च ।३।४।३९।

तुशब्दश्चोद्यनिवर्तकः । अतोऽनाश्रमित्वादितरदाश्रमित्वं ज्यायः । बहुज्ञानसाधनाधिकारित्वात् । शीघ्रमेव विद्योपलब्धिराश्रमवतः स्यादितिभावः । लिङ्गाच्च-"अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः । "संवत्सरमनाश्रमीस्थित्वा कृच्छ्रमेकं चरेत्" इत्याद्यनाश्रमिगण्याश्रमग्रहणो-

पदेशपरस्मार्तलिङ्गादनाश्रमित्व आश्रमित्वं ज्यायः । मृतभार्यस्य गृहिणः पुनर्दारसंग्रहस्त्वापद्धर्म इति बोद्धव्यम् ॥३९॥

* अथ तद्भूताधिकरणम् ॥१०॥

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रू-पाभावेभ्यः ।३।४।४०।

एवमनाश्रमिणो गार्हस्थ्यविधुरस्य ब्रह्मविद्यायामधिकारोऽस्तीत्यभिहितम् । इदानीं नैष्ठिकवानप्रस्थपरिव्राजकानां स्वाश्रमेभ्यः प्रच्युतानां कर्म्माणि विद्यासाधनानि सन्ति न वेति विशये तेषामपि कानिचिज्जपादिरूपकर्माणि विद्यासाधनानि विधुरकर्मवत्स्युरिति प्राप्तेऽभिधीयते-तद्भूतस्य तु नातद्भाव इति । नैष्ठिकाद्यु्त्तमाश्रमस्थस्यातद्भावोऽतथाभावोऽनाश्रमित्वेनावस्थानं न कथमपि सम्भवतीति । जैमिनेरपीत्यपिशब्दात्स्वस्य बादरायणस्य च सम्मतं दर्शितम् । मम सम्मतं जैमिनेरपि सम्मतमिति भावः । कुतः ? तद्रूपाभावेभ्यो नियमात् । नैष्ठिकादिधर्माभावास्तेभ्यः शास्त्रनियमनात् "ब्रह्मचार्याचार्यकुलवासीतृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्" ( छा० २।२३।१। ) इति नैष्ठिकस्य नियमात् । "अरण्यमियात्ततो न पुनरेयात्" इति वैखानसस्य । तथा 'सन्न्यस्याग्निं न पुनरावर्तयेत्'' ( यजु० का० ) इति परिव्राजकस्य नियमात् । तस्मादनाश्रमित्वेनावस्थानस्य नैष्ठिकादेरप्रामाणिकत्वान्न तेषां ब्रह्मविद्यायामधिकारः ॥४०॥

---

*नैष्ठिकाद्याश्रमभ्रष्टानां किं विद्याधिकारिता । अस्ति वा नास्ति वा किं स्यादस्त्येवेति परम् मतम् ॥३४॥ जपादिभिश्च ते यस्माद्विद्यार्हा विधुरा यथा । धर्माभावान्नियम्यन्ते यस्माच्च नैष्ठिकादयः ॥३५॥ ततो भ्रष्टाश्रमाणां हि नैव विद्याधिकारिता । आरूढपतितानाञ्च प्रायश्चित्तनिषेधनात् ॥३६॥ निष्कल्मषाय तस्थै चाप्याचारान्न च सा भवेत् ।

यदि प्रमादान्नैष्ठिकादेः स्वधर्मात्प्रच्यवस्तर्हितत्प्रायश्चित्तमनुष्ठाय निष्कल्मषस्य तस्य विद्यायामधिकारः स्यादित्यत्राह—

## न चाधिकारिकमपि पतनानुमानात्तदयोगात् ।३।४।४१।

नैष्ठिकादीनामधिकारे यत्प्रायश्चित्तमभिहितं तदपि तद्भ्रष्टानां न सम्भवति । कुतः ? पतनानुमानात्तदयोगात् । स्वाश्रमधर्मप्रच्युतानां नैष्ठिकादीनां पतनस्मरणात् पतितानाञ्च प्रायश्चित्तस्यायुक्तत्वात् । "आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः । प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा, इति । तस्मादुपकुर्वाणब्रह्मचारिविषयमाधिकारिकं प्रायश्चित्तमिति ॥४१॥

## उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ।३ ४।४२

मतान्तरमुत्थापयति । एक आचार्यास्तूपपूर्वमुपपातकमिदं ब्रह्मचर्यप्रच्यवनमित्यभिधाय तत्र प्रायश्चित्तस्य भावं सत्वमेवाशनवदाहुः । यथा मध्वशननिमित्तकं प्रायश्चित्तमुपकुर्वाणनैष्ठिकयोरुभयोरपि विद्यते । तथान्यनिमित्तकमपि प्रायश्चित्तम् । तदुक्तम् "उत्तरेषां चैतदविरोधि" (गौत० १।३।४।) एवञ्च ब्रह्मचर्यप्रच्युतो प्रायश्चित्तस्य विद्यमानत्वात् कृतप्रायश्चित्तानाञ्च नैष्ठिकादीनां ब्रह्मविद्यायामप्यधिकारोऽस्ति ॥४२॥

## बहिस्तूभयथापि स्मृतेराचाराच्च ।३।४।४३।

तुशब्दः पूर्वमतं निवर्तयति । नैष्ठिकादीनां स्वाश्रमात्प्रच्युतिरुपपातकं महापातकं वेत्युभयथापि अकृतप्रायश्चित्ता वेत्युभयथापि ब्रह्मविद्याधिकारिभ्यो बहिर्भूता एव । कुतः ? स्मृतेः । 'प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा" ( आग्नेय १६।५।२३। ) इति । आचाराच्च-स्वधर्मप्रच्युतानां नैष्ठिकादीनां कृतप्रायश्चित्तानामपि वेदाध्यापने यज्ञादिकर्मणि च शिष्टाः परिवर्जनं कुर्वन्तीति शिष्टाचारादपि । तस्मान्नाधि-

कारः स्वाश्रमधर्मभ्रष्टानां नैष्ठिकादीनां ब्रह्मविद्यायामिति' सिद्धम् ॥४३॥

* अथ स्वाम्यधिकरणम् ॥११॥

## स्वामिनः फलश्रुतेरित्यात्रेयः ।३ ४।४४।

किमङ्गाश्रितोपासनानि यजमानानुष्ठेयान्याहोस्विदृत्विगनुष्ठेयानीति संशये किं युक्तम् ? यः कर्त्ता स फलभोक्तेति न्यायमनुसृत्य पूर्वपक्षमाह-स्वामिन इति । स्वामिनो यजमानस्यैवाङ्गाश्रितोपासनान्यनुष्ठेयानि । कुतः ? तस्यैव फलश्रुतेरित्यात्रेय आचार्यो मन्यते ॥४४॥

अत्र समाधत्ते-

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ।३।४।४५।

ऋत्विगधिकृतस्यैवास्मिन्नुपासनेऽधिकारात् अतोरार्त्विज्यत्वेनैव तदङ्गोपासनमप्यार्त्विज्यमृत्विक्कर्तृकमेवेत्यौडुलोमिराचार्यो मन्यते । यजमानफलसाधनभूतस्य साङ्गस्य क्रतोर्निष्पादनाय यजमानेनर्त्विक् परिक्रियते । अतो यजमानपरिक्रीतर्त्विगनुष्ठितस्य कर्माङ्गाश्रितोपासनस्य फलं यजमानगामि भवतीति फलश्रुतेरप्यविरोधः ॥४५

+ अथ सहकार्यन्तरविध्यधिकरणम् ॥१२॥

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ।३४ ४६।

बृहदारण्यके श्रूयते-"तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन

---

*विधेया यजमानेन यद्वर्त्विग्भिर्विधीयताम् ॥३७॥ कर्माङ्गमाश्रितोपास्तिरित्यत्र किं वरम् मतम् । यजमानेन कर्त्तव्या तस्यैव च फलश्रुतेः ॥३८॥ आर्त्विज्यत्वात् क्रतोः क्रत्वङ्गोपास्तिश्च तथा मता । ऋत्विग्भिस्तदनुष्ठेया पक्षश्चायमनुत्तमः ॥३९॥ क्रीतत्वादृत्विजां चात्राविरोधश्च फलश्रुतेः ।

+अथ मुनिरितिश्रुत्या मौनं विधीयते न वा ? ॥४०॥ मौनपाण्डित्य-

तिष्ठासेद्बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिरमौनञ्च मौनञ्च निर्विद्याथ ब्राह्मणः" ( बृह० ३।५।१। ) इति। तत्र मौनं विधीयते नवेति विशय। पूर्वतने वाक्ये बाल्येन तिष्ठासेदित्यत्रैव विधिसमाप्तावत्र मौनं न विधीयते किन्तु पाण्डित्यं निर्विद्येति विहितस्यायमनुवादः। मौनपाण्डित्यशब्दयोश्च ज्ञानाभिधायकत्वादिति पूर्वः पक्षः

अत्रोच्यते-सहकार्यन्तरविधिरिति। यद्यपि यज्ञादिवद्बाह्यकरणैर्निदिध्यासनमननुष्ठेयं तथापि मानसजपादिवद्ब्रह्मानकुचिन्तनरूपस्य निदिध्यासनस्यान्तःकरणधर्मत्वेन सम्भवत्येवात्र मौनस्य विधानम्। एवञ्चात्र पाण्डित्यं बाल्यं मौनञ्चेत्येतत्त्रितयमपि ब्रह्मविद्यायाः सहकार्यन्तरं विधीयते विध्यादिवत्। विधीयत इति विधि। यज्ञादानादिक आश्रमधर्मः। आदिपदेन श्रवणमननयोर्ग्रहणम्। तद्वतोऽध्ययनजब्रह्मसामान्यज्ञानवतः श्रवणमननवतो वा तद्विशेषज्ञानप्राप्तावाश्रमधर्मवच्छ्रवणमननवच्च फलभूतब्रह्मसाक्षाद्दर्शने श्रवणमननद्वयापेक्षया तृतीयमिदं सहकार्यन्तरम् निदिध्यासनात्मकं मौनमपूर्वं विधीयते। विद्यासहकारितयार्थप्राप्तयोरपि श्रवणमननयोर्यथा 'श्रोतव्यो मन्तव्य' इत्यत्र ग्रहणम्। तथात्रापि सहकार्यन्तरविधाने निदिध्यासनमेव विधीयत इत्यत आह पक्षेणेति। निदिध्यासनपदस्य निरन्तरब्रह्मचिन्तनापरपर्यायस्य श्रवणमननाभ्यामत्यन्तोत्कृष्टत्वम्। अत एव पाण्डित्याद्भिन्नमेव मौनमत्र विधीयते तत्र पण्डा शास्त्राध्ययनजा शास्त्रीया ब्रह्मसामान्यधीस्तद्वान् पण्डितस्तत्कृतम् श्रवणं पाण्डित्यं तन्निर्विद्य निश्चयेन प्राप्य बाल्येन बलभावेन ज्ञानबलभावेन मननेन बालस्य भावेन शुद्धान्तःकरणेन वा स्थातुमिच्छेत् बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिः मननशीलो ब्रह्मैकचिन्तनशीलस्तन्निदिध्यासनपरो भवेत्

---

योर्ज्ञानार्थत्वेन हेतुना तथा। विधायकपदाभावादनुवादः प्रतीयते ॥४१॥ निदिध्यासनमुक्तं हि मौनेतिपदतस्ततः। पाण्डित्यबाल्यधर्माभ्यां मौनस्य व्यतिरिक्तता ॥४२॥ तस्मादप्राप्तता मौने विधिरेव ततोऽत्र हि।

अमौनञ्च श्रवणमनने मौनञ्च निदिध्यासनं निर्विद्य तत्सिद्धयवस्थाम्प्राप्याथ ब्राह्मणो भवतीत्यर्थः । ब्राह्मणः श्रवणमनननान्तरं निदिध्यासनपरो भवेदिति भावः ॥४६॥

ननु यदि सर्वाश्रमेषु मौनतृतीयसचिवा ब्रह्मप्राप्तिसाधनीभूता विद्योपदिश्यते कथं तर्हि "स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते" ( छा० ८।१५।१। ) इति गार्हस्थ्येन यावदायुषं स्थितिः सम्भवतीत्याशङ्कायामाह —

## कृत्स्नभावात्तु गृहिणोपसंहारः ।३।४।४७।

तुशब्दः शंकाव्यावर्तकः । सर्वेष्वाश्रमेषु विद्यायाः सम्भवात् सर्वेऽप्याश्रमिणः स्वाश्रमकर्मानुष्टानं कुर्वन्तः परमात्मानं चिन्तयन्तः कैमुत्यन्यायेन ब्रह्मलोकं सम्पद्य न पुनरावर्तन्त इत्यस्यार्थस्य प्रदर्शनार्थं गृहस्थधर्मेणोपसंहार इति ॥४७॥

## मौनवदितरेषामप्युपदेशात् ।३।४।४८।

"तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः" 'ब्रह्मसंस्थोऽमृतत्वमेति" इत्यत्र "अथ मुनिरित्यत्र च वाक्ये "पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" ( बृह० ३।५।१। ) इति परिव्राजकधर्मेणोपसहारः सर्वाश्रमधर्मप्रदर्शनार्थः । कुतः ? मौनादिवदितरेषामप्याश्रमधर्माणां यज्ञदानतप आदीनामुपदेशात् । तस्मादत्र मौनं विद्यासहकारितया विधीयते ॥४८॥

❀ अथानाविष्काराधिकरणम् ॥१३॥

## अनाविष्कुर्वन्नन्वयात् ।३।४।४९।

"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" (बृह० ३।५।१)

---

*बाल्येन विदुषोऽवस्थानं प्रोक्तं तत्र संशय ॥४३॥ कामचारादिकं सर्वं ग्राह्यं बालककर्म किम् ? । स्वमाहात्म्यानविष्कारमात्रम् वा तत्र

इत्यत्र ब्रह्मविदा स्वस्मिन् बाल्यमाविष्करणीयमिति श्रूयते। तत्र बालस्य क्रीडनादिकं सर्वं कर्म विदुषोपादेयमाहोस्वित्तदवमानादिरहितत्वमेव विशेषकर्मेति संशयेऽविशेषादखिलं बालकर्मोपादेयमितिप्राप्तेऽभिधीयते–अनाविष्कुर्वन्निति। यथाबालः स्वभावशुद्धिपूर्वकं स्वामिजनादिकमनाविष्कुर्वन् मानापमानौ परिहाय वर्तते तथा विदुषा वर्तितव्यम्। तदेव तस्य कर्म चोपादेयं न तु शौचाचाररहित्यं तिष्ठन्मूत्रोच्चारादिकमपि। कुतः ? अन्वयात्। विद्यानुकूलानामेव बालकर्मणामन्वयात्। शौचाचाररापित्यादीनान्तु विद्या विरधितयाऽनन्वयात्। तथा च श्रुतिः "नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्" ( का० २।२४। ) इति। "आहारशुद्धौ सत्वशुद्धिरिति च ॥४९॥

❀ अथैहिकाधिकरणम् ॥१४॥

## ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात ।३।४।५०

किं विद्योत्पत्तिरिहैव जन्मन्युतामुष्मिन्नपीति संशये किं युक्तं ? इहैव जन्मनि विद्या ममास्त्विति कामनयाऽनुष्ठितैः कर्मभिरैहिकमेव विद्याजन्मेति प्राप्तेराह–ऐहिकमपीति। विद्यार्थमनुष्ठितं फलोन्मुखं कर्म प्रस्तुतमित्युच्यते। तेन कर्मणा प्रतिबन्धाभावे सत्यैहिकं विद्याजन्म भवति। प्रति–

---

किं वरम् ? ॥४४॥ अविशेषविधिनेन सर्वमित्येव सुन्दरम्। विशेषविधिना विद्यामाहात्म्येन च बाधिताः ॥४५॥ निषेधश्रुतयः सर्वा भवेयुरितिचेन्न हि। कुतश्चेदन्वयाद्विद्याऽनुकूलानाञ्च कर्मणाम् ॥४६॥ अन्वेतुं कामचारादिविरोधान्न च शक्नुयात्। पक्षश्च चरमस्तस्मात् समाचीनतया मतः ॥४७॥

*विद्योत्पत्तिरिहैवोत एमुष्मिन्नपि जन्मनि ?। इहैव मम विद्या स्या–

वन्धे सति त्वमुत्रापीत्यनियम एव नत्विहैवेति नियमः । कुतः ? तद्दर्शनात् । । श्रुतौ प्रतिवन्धाप्रतिवन्धाभ्यामनियमस्य दर्शनात् गर्भस्थ एव । च वामदेवः प्रतिबुबुधे ब्रह्मभावमिति जन्मान्तरानुष्ठितस्य कर्मणः फलं जन्मान्तरे दर्शयति । सतिप्रतिवन्धे तु विद्योत्पत्तिदुर्लभा । "यदेव विद्यया करोति" ( छा० १।१।१० ) इत्युद्गीथविद्यावतः कर्मणोऽप्रतिवन्धस्य दर्शनात् ॥५०॥

* अथ मुक्तिफलाधिकरणम् ॥१५॥

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ।३।४।५१।

किं विद्यायामुत्पन्नायामिहैव जन्मनि मुक्तिर्जन्मान्तरे वेति संशये विद्योत्पत्तौ सत्यामिहैव मुक्तिर्भवतीति प्राप्तेराह-एवं मुक्तिफलानियम इति । यथा कर्मणां पौष्कल्ये इहैव विद्याजन्म भवति न चान्यथा । तथा सततस्मृतिरूपायां विद्यायां सत्यामिहैव जन्मनि ब्रह्मप्राप्तिरूपा मुक्तिरुपपद्यते । अन्यथा जन्मान्तरेऽपि सम्पद्यते । अतोऽनियमः । कुतः ? तदवस्थावधृतेः । "सत्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" ( छा० ७।२६।२। ) इति ध्रुवायाः स्मृतेरेव कर्मबन्धविमुक्तिहेतुत्वाव-

---

दिति कामनया कृतैः ॥४८॥ कर्मभिरैहिकं विद्याजन्म स्यादिति निश्चयः । साधननिर्वृतौ किञ्चिद्विलम्बे नास्ति कारणम् ॥४९॥ मैवमप्रतिवन्धे यद् विद्याजन्मैहिकं भवेत् । प्रतिवन्धे त्वमुत्रापि भवेत्तच्छ्रुतिदर्शनात् ॥५०॥

* विद्योत्पत्ताविहैव स्यान्मुक्तिर्जन्मान्तरेऽथवा ? । सति विद्योदये मुक्तिरस्मिन्नेव हि जन्मनि ॥५१॥ मैवमनियमो यद्वद् विद्याजन्मनि वर्त्तते । तथैवात्रापि स ज्ञेयः कुतश्चेदुच्यते यतः । ५२॥ छान्दोग्ये कथिता

धारणादिति सर्वमनवद्यम् । अभ्यासोऽध्यायसमाप्त्यर्थः ॥५१॥

इति श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये
तृतीयाध्यायस्य चतुर्थः पादः ॥४॥
समाप्तश्चायं तृतीयोऽध्यायः ॥३॥

---

मुक्तिर्ध्रुवस्मृत्या न चान्यथा । ध्रुवस्मृतिस्ततो यत्र मुक्तिः स्यात्तत्र जन्मनि ॥५३॥

इति पण्डितसम्राट् स्वामिश्रीवैष्णवाचार्य वेदान्तपीठाचार्य
प्रणीतायामधिकरणरत्नमालायां
तृतीयोध्यायः ॥३॥



## श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये

# चतुर्थाध्यायस्य प्रथमः पादः ।

### *अथावृत्त्यधिकरणम् ॥१॥

एतावता ग्रन्थेन चिदचितोर्ब्रह्मणः शरीरभूतयोःस्वरूपं चिदचिद्विशिष्टस्याखिलहेयप्रत्यनीकानन्तकल्याणगुणसागरस्य परात्परस्य पुरुषोत्तमादिपदवेद्यस्य परब्रह्मणश्च स्वरूपमवधारितम् । एवं परमपुरुषानुभवलक्षणमोक्षैकफलकसहकारिकर्मकलापालंकृतं विद्यापदबोध्यं ब्रह्मोपासनमपि गतेनैव ग्रन्थेन विचिन्तितम् । तदन्तः पातिप्रसङ्गानुमोदितमन्यदपि विचारितम् । अथाधुनाऽस्मिन्नध्याये परमपुरुषार्थमोक्षरूपं विद्याफलमेव विविच्यते । तत्र प्रथमद्वितीयाभ्यां पादाभ्यां विद्यास्वरूपम् फलञ्च तदुद्दिश्य विदुषः समुत्क्रमणप्रकारश्च विचिन्त्यते । तृतीयचतुर्थाभ्याञ्चार्चिरादिमार्गस्य गतेश्चनिर्णयः समुपासनस्यान्तिमफलविचारश्च क्रियते । तत्रादिमेनानेनाधिकरणेन विद्यास्वरूपं विचार्यते ।

### आवृत्तिरसकृदुपदेशात् ।४।१।१।

"आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यः ( बृ० ४।५।६।। "ब्रह्मवेद ब्रह्मैव भवति" ( मु० ३।२।९। ) "यदा पश्यः पश्यते रुक्मवर्णम्" ( मु० ३।१।३। ) 'तमेव विदित्वातिमृत्युमेति" ( श्वे० ३।८। ) इत्या-

---

*उपासनमनुष्ठेयं सकृदेवाथवाऽसकृत् । तस्यच सकृदाचाराच्छास्त्रार्थः सफलो यतः ॥१॥ सकृदेव ततः कार्यं ज्योतिष्टोमादिकर्मवत् । असकृदुपदेशादावृत्तिः कार्या स्मृतेरपि ॥२॥

दिव्योपनिषदेषु वाक्येषु ब्रह्मप्राप्तिसाधनतया विहितं ध्यानवेदनादिकं किं सकृदेव कर्तव्यम्, आहोस्वित्तस्यावृत्तिरिति संशये सकृत्कर्त्तव्यम्। कुतः ? 'ब्रह्मविदाप्नोति पर' मिति , ब्रह्मवेदनमात्रस्य तत्प्राप्तिहेतुत्वश्रवणादतो ज्योतिष्टोमादिवद्यथाश्रुतम् सकृदेवकर्त्तव्यमितिप्राप्तेऽभिधीयते – आवृत्तिरसकृदुपदेशादिति । ध्यानवेदनाद्यभिहितस्यावृत्तिः कर्तव्या । कुतः ? असकृदुपदेशात् "निदिध्यासितव्यः" ( बृ० ४।५।६। ) इति यज्ञावल्क्येनात्मदर्शनसाधनत्वेनासकृद्ध्यानस्यकर्तव्यत्वोपदेशात् । निदिध्यासनपदस्यासकृद्ध्यानार्थकत्वात् । असकृन्निदिध्यासनमन्तरेण परमात्मसाक्षात्कारानुपपत्तेः । "सत्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" ( छा० ७।२६।२। ) इत्यत्र सर्वग्रन्थिविप्रमोक्षहेतुत्वेन श्रुताया ध्रुवस्मृतेरपि ध्रुवत्वमचलत्वं तैलधारावदविच्छिन्नत्वमन्यथानुपपद्यमानं स्मृतेः सातत्यमुपपाद्य तदावृत्तिं ज्ञापयति । उपास्यविषयिणी स्मृतिरेव तत्र तत्रोपासनवेदनादिपदैरभिधीयते । वेदनोपासने च समानप्रकरणाधीतत्वात्समानार्थक एवेत्यावृत्तिः कर्तव्येति ॥१॥

## लिङ्गाच्च ।४।१।२।

इतश्च वेदनादेरावृत्तिर्विधेया । यतः स्मृतेरयमर्थोऽवसीयते । "अनन्यचेताः सततं यो मां स्मरति नित्यशः । तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः । ( गी० ) "तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा । तद्ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते तथा । ( वि० पु० ६।७।६१ ) इत्यादिका स्मृतिरत्रासकृदावृत्तिमेव वेदनादेरवगमयतीति ॥२॥

### * अथात्मत्वोपासनाधिकरणम् ॥२॥

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ।४।१।३।

* उपासकेन चोपास्यं ब्रह्म किं स्वपृथक्तया । यद्वा स्वात्मतया ? किं स्यादाद्यमेव मतं वरम् ॥३॥ उभयोः श्रुतिसूत्रैश्च भेदस्यैवावबोध-

अथैवं ध्यानावृत्तिनिष्पत्त्यनन्तरं किं निदिध्यासनकाल उपास्यं ब्रह्मो-पासकेन स्वान्यत्वेनोपासनीयमाहोस्वित्स्वात्मनेति संदेहे स्वान्यत्वेनेति कुतः ? "ज्ञाज्ञौ द्वावजावीशानीशौ" ( श्वे० १।९। ) "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः । ( श्वे० ४।९। ) "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्य-मीशमस्य" ( श्वे० ४।७। ) इत्यादिश्रुतिभिः । अधिकं तु भेदनिर्देशात्" ( ब्र० सू० २।१।२२ ) "नेतरोऽनुपपत्तेः" ( ब्र० सू० १।१।१७ ) इत्या-दिसूत्रैश्चोभयोर्भेदस्यावगमात् । अतो यथाशास्त्रमेव यथावस्थितं ब्रह्मो-पास्यम् । नान्यथा । यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः । न स सिद्धिमवाप्नोति न सुखं न परां गतिम्" ( गी० १।६।२२ ) इति भगव-द्वचनविरोधात् । तस्मादन्यत्वेनोपास्यमिति प्राप्तेऽभिधीयते—आत्मेति त्विति । तुशब्दोऽवधारणार्थकः । उपासकेन स्वात्मतयैवोपास्यं ब्रह्म । यथा स्वीयशरीरस्यात्मोपासिता प्रत्यगात्मा तथोपासितुरप्यात्मा ब्रह्मेति ममात्मा ब्रह्मेत्येवमुपासीतेति तदर्थः । कथमवगम्यते ? उपगच्छन्त्येव-मेव पूर्वतनाः समुपासकाः । "त्वं वा अहमस्मि भगवो देवते अहं वै त्व-मसि" इत्युपासकस्य स्वरूपेण स्वभावेन भिन्नमपि ब्रह्माहमित्येवोपासका अभ्युपगच्छन्तीति । कथञ्च तदभ्युपगम इत्याह ग्राहयन्ति चेति । एवमेव श्रुतय उपासकानवबोधयन्ति । "ऐतदात्म्यमिदं सर्वम्" ( छा० ६।८। ४। ) "य आत्मनि तिष्ठान्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येप त आत्मान्तर्याम्यमृतः" ( बृ० ३। ७।२२ ) इत्यादिश्रुतयस्सर्वस्य चिदचिदात्मकस्य जगतः शरीरतया पर-

---

नात् । मैवमुपासिता यद्वदात्मा स्ववपुषः किल ॥४॥ ब्रह्म जीवात्मन-श्चात्मा तथैव श्रुतिवाक्यतः । ततस्तत् स्वात्मरूपेणैवोपास्यं नान्यथा खलु ॥५॥ स्वरूपेण स्वभावेन स्वभिन्नमपि राघवम् । 'त्वं वाऽहमस्मि' इत्येवं प्राञ्चश्चाभ्युपयन्ति हि ॥६॥

मात्मनश्च तदात्मतया प्रतिपादयन्ति । यथा स्वशरीरं प्रति प्रत्यगात्मन आत्मत्वात् 'देवोऽहम्' मनुष्योऽहमित्यनुसन्धानं तथा परमात्मनोऽप्यात्मत्वादहमित्येवानुसन्धानम् । एतच्च "त्वम् वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते" 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योहमस्तीति न स वेद" ( बृ० १।४।१०। ) सर्वं तं परादाद्योऽन्यत्रात्मनस्सर्वं वेदः' । बृ० ४।५।७। ) इत्याद्यनेकश्रुतिभिरुपपादितम् । तथा चायमर्थः फलितः । स्वात्मनः स्वशरीरादाधिक्येनानुसन्धानम् । ततोऽप्याधिक्येनात्मशरीरस्य परमात्मनोऽनुसन्धानमिति पार्थक्यमपि "पृथगात्मानं प्रेरितारञ्च मत्वा" ( श्वे० १।६। ) इति श्रुत्युपदिष्टमनुष्ठितम्भवति । तस्मादुपासकेनात्मतया ब्रह्मोपासनीयमिति ॥३॥

* अथ प्रतीकाधिकरणम् ॥३॥

न प्रतीके न हि सः ।४।१।४।

"मनो ब्रह्मेत्युपासीत" ( छा० ३।१८।१। ) इत्येवमादिप्रतीकोपासनेषु संशयः । किं प्रतीके मनआदावात्मत्वबुद्धिः कर्तव्या, आहोस्विन्नेति । तत्र सर्वामुपासनामुपासनत्वसाम्याद् ब्रह्मणश्च स्वात्मत्वान्मनो ब्रह्मेति वचनेन मनआदीनां ब्रह्मरूपत्वादुपासकस्यात्मभूतब्रह्माभिन्नत्वान्मनआदावात्मबुद्धिः कर्तव्येति प्राप्तेऽभिधीयते—न प्रतीक इति । मनआदौ प्रतीके नात्मबुद्धिः कर्तव्या । तत्र हेतुर्न हि स इति । यतः स प्रतीको नह्युपासकस्यात्मा । प्रतीकोपासनेषु प्रतीकस्यैवोपासनमभिमतं न

---

* 'मनो ब्रह्मेत्युपासीत' इत्याद्या या श्रुतौ श्रुताः । प्रतीकोपासनास्तत्र विचिकित्सा भवेदियम् ॥७॥ मन आदौ प्रतीके किं कर्त्तव्याऽऽत्मत्वधीर्न वा ? । ब्रह्मोपास्तित्वसाम्येन पूर्वमेव वरं मतम् ॥८॥ मैवं यतः प्रतीकस्य प्रत्यगात्मात्मता न हि । उत्कर्षाद् ब्रह्मदृष्टिस्तु श्रेयसी मन आदिषु ॥९॥

ब्रह्मणः । मनो ब्रह्मेति मनः सामानाधिकरण्येन ब्रह्मपदपाठस्तु मनआदौ ब्रह्मदृष्टिविशेषणार्थम् । अत्र प्रतीकोपासनं हि अब्रह्मणि ब्रह्मदृष्ट्या भावनम् ॥४॥

अथैवं मनसि ब्रह्मदृष्टिरुत ब्रह्मण्येव मनोदृष्टिः कर्तव्येत्यत्राह—

## ब्रह्मदृष्टिरुत्कर्षात् ।४।१।५

ब्रह्मणो मनआदिभ्य उत्कृष्टत्वान्मनआदिषु ब्रह्मदृष्टिरेव साधीयसी। निकृष्ट अमात्यादावुत्कृष्टराजत्वादिबुद्धेः सफलत्वस्य दृष्टत्वात् । राज्ञि ततो हीनस्यामात्यदृष्टेर्हानिकरत्वाच्च । तस्मादकृष्टेषु मन आदिषूत्कृष्टस्य ब्रह्मण एव दृष्टिः कर्तव्येति सिद्धम् ॥५॥

## * अथादित्यादिमत्यधिकरणम् ॥४॥

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ।४।१।६।

"य एवासौ तपति तमुद्गीथमुपासीत" ( छा० १।३।१। ) इत्यादिषु कर्माङ्गोपासनेषु संशयः । किमादित्यादिषद्गीथादिदृष्टिः कार्या, आहोस्विदुद्गीथादिषु कर्माङ्गेष्वादित्यादिदृष्टिरिति । तत्र पूर्वतनन्यायेनोत्कृष्टदृष्टिर्निकृष्टे कर्तव्येति नियमादुद्गीथादीनां कर्मरूपत्वेनफलवत्त्वादफलेभ्य आदित्यादिभ्य उत्कृष्टत्वादादित्यादिषूद्गीथादिदृष्टिरिति प्राप्तेऽभिधीयते-आदित्यादिमतयश्चाङ्ग इति । चोऽवधारणार्थकः । कर्माङ्ग उद्गीथादावादित्यादिमतयो दृष्टय एव कर्तव्याः । कुतः ? उपपत्तेः ।

---

* कर्माङ्गाश्रयविद्यायां संशयो भास्करे ननु । उद्गीथादिकदृष्टिः कार्योद्गीथे भानुताऽथवा ? ॥१०॥ फलसाधनकर्माङ्गतया फलदता यतः । आदित्यापेक्षयोद्गीथस्योत्कृष्टत्वं ततस्ततः ॥११॥ चरमाद्यं न चैवं किन्त्वन्त्यमेव वरं मतम् । कर्मणां फलदत्वं यद् देवताराधनेन हि ॥१२॥ उद्गीथादौ तदुत्कर्षात् कार्या भान्वादिदृष्टयः । प्रोक्षणेन यथा व्रीहेः फलिता कर्मणस्तथा ॥१३॥

यथा प्रोक्षणादिना संस्कृतेषु व्रीह्यादिषु प्रकृतेन कर्मणाऽपूर्वरूपं फलमुत्पद्यते । तथादित्यादिदेवतादृष्टिभिः संस्कृतेषु कर्माङ्गेषूद्गीथादिषु प्रकृतस्य कर्मणः फलाधिक्यलक्षणा समृद्धिरुत्पद्यते । आदित्यादिदेवताराधनेन कर्मणां फलजनकत्वमन्यथा नेति अत आदित्यादिदृष्टिरेवोद्गीथादिष्विति ॥६॥

* अथासीनाधिकरणम् ॥५॥

## आसीनः सम्भवात् ।४ १।७।

पूर्वत्र मोक्षसाधनतया यदुपासनं वेदनध्याननिदिध्यासनादिपदबोध्यं विहितं तत्तिष्ठन्नासीनः शयानो गच्छन् वाऽनियमेनानुतिष्ठेदुत नियमेनासीन एवेति संशये मनोधर्मत्वादुपासनस्य शरीरस्थितेरनियम इति प्राप्तेऽभिधीयते । आसीन इति । आसीन एवोपासनं विदध्यात् । कुतः ? सम्भवात् । समानप्रत्ययपरम्परालक्षणस्योपासनस्यासीन एवोपासके सम्भवात् । नहि तिष्ठत पुंसः सम्यगुपासनं सम्भवति शरीरधारणप्रयोजकप्रयत्नापेक्षया चित्तविक्षेपात् । न वा गच्छतोऽनेकधा वस्तुदर्शनेन चित्तस्य चाञ्चल्यात् । शयानस्य निद्राप्रसङ्गात् । तस्मान्नासाग्रदृष्टिः सन्नासीन एवोपासनं कुर्यात् ॥७॥

## ध्यानाच्च ।४।१।८।

"निदिध्यासितव्यः" ( बृ० ४।५।६। ) "ततस्तु तं पश्यते निष्कलं ध्यायमानः" ( मु० ) इत्यादिश्रुतिभ्य उपासनस्य ध्यानरूपत्वात् ध्यानस्य च विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहलक्षणस्यानन्यचे-

---

* उपासनं विदध्यात् किं नियमाभावतः खलु । आसीन एव वा ? किं स्यादाद्यमेव वरं यतः ॥१४॥ नापेक्षते मनोधर्मो देहस्थितिमुपासनम् । नैवमुपासनं यस्मादासीन एव सम्भवेत् ॥१५॥ यदुपासनं तुल्यानां प्रत्ययानाम्परम्परा चित्तस्यैकाग्रता यत्र ध्यायेत्तद्देशकालयोः ॥१६॥

तत्त्वेन ब्रह्मैकसततचिन्तनात्मकस्यासीनेष्वेव सम्भवादासीन एवोपासीत इति ॥८॥

## अचलत्वं चापेक्ष्य ।४।१।९।

"ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौर्ध्यायन्तीवापो ध्यायन्तीव पर्वता ध्यायन्तीव देवमनुष्याः" ( छा० ७।६।१। ) इत्येवमादीनां श्रुत्युक्तानां ध्यानोपचारवतां पृथिवीपर्वतादीनां यदचलत्वं दृश्यते तदपेक्ष्य ध्यायमानस्याचलत्वमावश्यकम् । तच्चासीनस्यैव सम्भवति । तस्मादासीन एवोपासीतेति ॥९॥

## स्मरन्ति च ।४।१।१०।

"शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ गी० ६।११।
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये । गी० ६।१२।

इत्यासीनस्यैव परमात्मनः योगाख्यं ध्यानं स्मरन्ति गीताचार्या इति ॥१०॥

तच्च ध्यानमासीनेन कुत्रदेशे कदा कर्तव्यमित्यत आह—

## यत्रैकाग्रता तत्राविशेषात् ।४।१।११।

यत्र देशे काले वा चित्तस्यैकाग्रता सजातीयप्रत्ययप्रवाहोन्मुखता भवेत्तत्रैवोपासीत । कुतः ? प्राच्यादिदिशो नदीतीरादिदेशस्य ब्रह्ममुहूर्तादिकालस्य च विशेषरूपेणाश्रवणात् । "समे शुचौ शर्करावह्निवालुकाविवर्जिते" इति वचनन्तु चित्तस्यैकाग्रतानिरूपकमेव देशममिधत्ते ॥११॥

* अथाप्रायणाधिकरणम् ॥६॥

## आप्रायणात्तत्रापि हि दृष्टम् ।४।१।१२।

एतन्मोक्षसाधनमुपासनमेकस्मिन्नेवाह्नन्यनुष्ठेयमाप्रायणादहरहर्वेति विषये कियत्कालमेव ध्यानमभ्यस्य पुनस्त्यजेत्तावताप्यावृत्तस्योपासनस्य सम्पादितत्वादिति प्राप्तेऽभिधीयते-आप्रायणादिति । आमरणादावृत्त्यानुष्ठेयमुपासनम् । कुतः ? तत्रापि हि दृष्टम् । उपासनमारभ्याप्रायणान्मध्ये यः कालस्तत्रापि हि दृष्टमुपासनम् 'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते" ( छा० ८।१५।१। ) इत्याप्रायणमुपासनावृत्तिः कर्तव्येति ॥१२॥

+ अथ तदधिगमाधिकरणम् ॥७॥

## तदधिगम उत्तरपूर्वाघयोरश्लेष विनाशौ तद्व्यपदेशात ।४।१।१३।

अतीतेन ग्रन्थेनावशिष्टं विद्यास्वरूपमेव विचारितम् । अथ तत्फलमिदानीं चिन्त्यते । तत्र ब्रह्मविदो विद्याफलतो विरुद्धफलस्याघस्य क्षयो भवति नवेति संन्देहः । न भवति । कुतः ? "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" ( अ० वै० प्र० ख० २७।७०। )

---

* कुर्यादुपासनं चैकदिवसे ह्यसकृज्जनः । आवर्त्तामृतेर्यद्वा ? किं युक्तमाद्यमेव यत् ॥१७॥ उपासनस्य चावृत्तिस्तत एव कृता भवेत् । नैवमुपासनं दृष्टमाप्रायणाद् यतः श्रुतौ ॥१८॥

× विद्याफलामिदानीं हि चिन्त्यते तत्र संशयः । विद्याफलविरुद्धोऽघो विदुषः क्षीयते न वा ? ॥१९॥ 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।' इत्येवं कथनान्नाघो नैवं भवितुमर्हति ॥२०॥ प्राप्तायां ब्रह्मविद्यायां तद्बलाद्धि श्रुतौ श्रुतौ । अश्लेषविनाशावघयोरुत्तरपूर्वयोः ॥२१॥

इति प्राप्तेऽभिधीयते-तदधिगम उत्तरपूर्वाघयोरश्लेपविनाशाविति । ब्रह्मविद्याप्राप्तौ तद्बलादुत्तरपूर्वयोरघयोरश्लेपविनाशौ सम्भवत एव । कुतः ? तद्व्यपदेशात्-व्यपदिशन्त्येवमेव श्रुतयः । "यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेव विदि पापं कर्म न श्लिष्यते" ( छा० ४।१४।३। ) इत्युत्तरस्याघस्याश्लेषम् । तथा "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" ( छा० ५।२४।३। ) "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" ( मु० २।२।८। ) इति च पूर्वसञ्चितस्याघस्य विनाशञ्च व्यपदिशन्ति । न च "नाभुक्तं क्षीयते कर्म" इत्यस्य विरोध इति वाच्यम् । तस्य च फलोत्पत्तौ दार्ढ्याभिधायकत्वात् । अश्लेपविनाशप्रतिपादकानाञ्च वचसां कर्मणि या फलोत्पत्तिशक्तिरस्ति तस्या विनाशसामर्थ्यमुत्पत्त्यवरोधसामर्थ्यञ्च विद्यायामस्तीत्यभिप्रायः । एवञ्चोभयोर्भिन्नविषयत्वान्न विरोधः । केचित्तु ' नाभुक्तं क्षीयते कर्म' ति वचनं प्रारब्धपरम् । तस्य च भोगादेव क्षय इत्याहुः । अत्र दुरितकर्मणां फलानुकूला शक्तिश्च भगवदननुकम्पैव । तस्याश्च भगवद्भजनादिरूपया भगवत्प्रियतमया विद्यया निवारणमुत्पत्तेरवरोधश्चेत्यन्यत्र विस्तरः ॥१३॥

## * अथेतराधिकरणम् ॥८॥

## इतरस्याप्येवमश्लेपः पाते तु ।४।१।१४।

उक्तन्यायं पुण्याश्लेपविनाशेऽप्यतिदिशति-इतरस्याप्येवमिति । एवं पापाश्लेपविनाशवत् पापादितरस्य पुण्यस्याप्यश्लेपविनाशौ स्याताम् ।

---

'नाभुक्तमि' तिवाक्येन फलोत्पत्तौ च कर्मणः । दार्ढ्यं निगद्यते तस्मान्नो विरोधः श्रुतेर्यतः ॥२२। फलजननसामर्थ्यं कर्मणि यच्च विद्यते। श्रुत्योच्यते हि तन्नाशावरोधौ ब्रह्मविद्यया ॥२३॥

*असंश्लेपविनाशौ किं पुण्यस्य स्तो न वाथवा ? । मुख्यरूपतया पुण्यं

पुण्यस्यापि विद्याफलमोक्षविरोधित्वेन दुष्कृतसाम्यात्। पुण्यविनाशस्यापि व्यपदेशाच्च-"तत्सुकृतदुष्कृते धुनुते" (कौ० १।४।) उभे ह्येवैष एते तरति" (बृ० ४।४।२२।) "तदा विद्वान् पुण्यपापे विधूय" (मु०) इति। एवं विदुष उत्तरपूर्वयोः पुण्यपापयोः शरीरान्तरहेतुभतयोर्विद्याप्रभावेणाश्लेषविनाशाभ्यां प्रारब्धकर्मणश्च भोगेनैव क्षयाद् देहपातेऽवश्य मुक्तिरित्याह पाते त्विति। तु शब्दोऽवधारणार्थकः ॥१४॥

## ॐ अथानारब्धकार्याधिकरणम् ॥६॥

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ।४।१।१५।

पूर्वं ब्रह्मविद्यया पूर्वकर्मणां सर्वेषां विनाश उक्तः। स किं प्रारब्धकर्मसहितानां भवत्युत प्रारब्धकर्मव्यतिरिक्तानामिति संदेह "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे" इत्यविशेषेण सर्वकर्मणां क्षयश्रवणात्सर्वेषां कर्मणां क्षय इति प्राप्तेऽभिधीयते। अनारब्धकार्य इति। न आरब्धं न निष्पादितं कार्यं शरीरं याभ्यां पुण्यपापाभ्यां ते अनारब्धकार्ये अप्रवृत्तफले पूर्वे विद्योत्पत्तेः पूर्वतने अनादिकालतः संचिते पुण्यपापे। एवकारः प्रारब्धकार्यव्यवच्छेदार्थः। न तु प्रारब्धकार्ये विद्यया विनश्यत इत्यर्थः। कुतः? तदवधेः "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" (छा० ६।१४।२।) इति देहपातावधिश्रवणादित्यर्थः। तथा च 'तस्य तावदेवे' ति विशेषश्रुत्यनुसारेण 'क्षीयन्ते चास्य कर्माणी' त्यस्या अवि-

---

मानिष्टं विदुषो यतः ॥२४॥ ततश्चान्त्यं वरं मैवं कुतश्चेदुच्यते यतः। मोक्षस्य हि विरोधित्वात् पुण्येऽप्यघसमानता ॥२५॥

"उदीरितो विनाशो हि विद्यया पूर्वकर्मणाम्। प्रारब्धरहितानां स यद्वा निखिलकर्मणाम् ॥२६॥ 'क्षीयन्ते चास्य कर्माणि' इत्येवमविशेषतः। कर्मक्षयश्रुतेश्चान्त्यं वरं मैवं कुतो यतः ॥२७॥ 'तावदेव चिरं यावन्न विमोक्ष्य' इति श्रुतौ। देहपातावधिश्रुत्या पूर्वमेव मतं शुभम् ॥२८॥

शेषश्रुतेर्नयनात् प्रारब्धकार्यव्यतिरिक्तयोरनादिसंचितपूर्वपुण्यपापयोर्विद्यया विनाश उपपद्यते नत्वारब्धकर्मणोरित्यवधेयम् ॥१५॥

## * अथाग्निहोत्राद्यधिकरणम् ॥१०॥

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ।४।१।१६।

आदिना यज्ञदानतपसां ग्रहणम् । तेषां विद्यासाधनत्वश्रुतेः । पूर्वमनारब्धकार्याणां कर्मणां विद्यया विनाशोऽभिहितः । इदानीमग्निहोत्रादिरूपाणां नित्यानामाश्रमधर्माणामप्यनारब्धकार्यत्वात्तेषां विद्यया विनाशो भवति नवेति सन्देहे । अनारब्धकार्यत्वाविशेषादग्निहोत्रादीनामपि विद्यया विनाशः स्यादिति प्राप्तेऽभिधीयते–अग्निहोत्रादीति । धर्मान्तरेभ्यो विशेषणार्थस्तुशब्दः । अग्निहोत्रादिकं कर्म तु तत्कार्यायैव विद्याकार्यायैव । कुतः ? तद्दर्शनात् । "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" ( बृ० ४।४।२२। ) इत्येवमादिश्रुतिष्वग्निहोत्रादीनां विद्यासाधनत्वदर्शनात् । अतो विद्योत्पत्त्यर्थमहरहरप्यग्निहोत्रादिकर्मानुष्ठेयमन्यथा वर्णाश्रमधर्मविलोपे कल्पमानसस्य विद्योत्पत्तिरेव न स्यादतो विद्यार्थत्वेन तदनुष्ठानमावश्यकम् ॥१६॥

ननु यद्यग्निहोत्रादिकं विद्योदयैकफलं तदा "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति वचनं किंविषयकमित्यपेक्षायामाह—

---

अविशेषश्रुतिर्नेया विशेषमनुसृत्य हि ।

*प्रारब्धव्यतिरिक्तानां कर्मणां विद्यया खलु ॥२९॥ विनाशोऽभिहितः पूर्वं विचिकित्सा भवेत्ततः । नित्यानामाश्रमस्थानामग्निहोत्रादिकर्मणाम् ॥३०। प्रारब्धव्यतिरिक्तत्वाद् विनाशः सम्भवेन्न वा ? । पूर्वं वरं यतस्तेषामस्त्यनारब्धकार्यता ॥३१॥ मैवं कुतो यतस्तेषां विद्यासाधनता श्रुता । विदुषा न च कार्याणि ननु तथापि तानि हि ॥३२॥ यस्मान्मो-

## अतोऽन्यापि ह्येकेषामुभयोः ।४।१।१७।

अतोऽग्निहोत्राद्याश्रमधर्मस्वरूपायाः साधुकृत्याया अन्यापि ह्यस्ति साधुकृत्या । या च विद्याधिगमात्पूर्वोत्तरयोरुभयोरपि पुण्यकर्मणोर्बलवत्-कर्माविरुद्धफलिका । तद्विषयकमेवेदमेकेषां शाखिनां वचनम् । अतो न दोषः ॥१७॥

## यदेव विद्ययेति हि ।४।१।१८।

"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" ( छा० १।१।१८। ) इत्युक्तं ह्युद्गीथविद्यायाः फलं कर्मान्तरप्रतिबन्धा-भावरूपम् । तस्मात्प्रतिबद्धफलायाः साधुकृत्याया एव सुहृत्सूपयानमिति ॥१८॥

* अथेतरक्षपणाधिकरणम् ॥११॥

## भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते ।४।१।१९।

पूर्वविचारिताभ्यामश्लेषविनाशशालिभ्यां पुण्यपापाभ्यामितरे प्रार-ब्धकार्ये पुण्यपापे किं विद्योपार्जितशरीरावसाने आहोस्वित्तच्छरीरावसाने शरीरान्तरावसाने अपि वेत्यनियम इति सन्देहः । तत्र "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" ( छा० ।६।१४।२। ) इति श्रवणा-न्मुक्तिशरीरावसाने एवेति पूर्वः पक्षः ।

अत्राभिधीयते–भोगेन त्वितरे इति । तुशब्दः पूर्वपक्षनिवर्त्तकः । इतरे त्वारब्धकार्ये पुण्यपापे प्रारब्धफलोपभोगेन विनाश्य विद्वान् तत्फल-

क्षयविरोधित्वात् पुण्याश्लेषः समीरितः । स्वर्गादिफलायैव पुण्यञ्च क्रियते नरैः ॥३३॥ इति चेत्राग्निहोत्रादेरश्लेषत्वेन हेतुना । मोक्षविरोधिता तस्मात् कार्याणि मोक्तुमिच्छुभिः ॥३४॥ आश्रमधर्मलोपे तु कल्मषमानसस्य हि । उत्पन्नायाश्च विद्याया विनाशः सम्भवेद् ध्रुवम् ॥३५॥

*ननु प्रारब्धकार्याणां कर्मणां कुत्र संक्षयः । विद्योपार्जितदेहान्ते तद्-

भोगानन्तरमेव ब्रह्म सम्पद्यते 'तस्य तावदेव चिर' मित्यादिश्रुतेः । भोक्तव्ये पुण्यपापे चैकशरीरभोग्यफलके यदि स्यातां तर्हि तच्छरीरान्ते ब्रह्म सम्पद्यते, यदि तु बहुशरीरभोग्यफलके स्यातां तदा बहुशरीरान्ते सम्पद्यते परं भोगेनैवारब्धकार्यें पुण्यपापे क्षपयित्वेति नियम इति सर्वमवदातम् ॥१९॥

इति श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये चतुर्थाध्यायस्य प्रथमः पादः ॥१॥

---

हान्तेऽथवा खलु ॥३६॥ देहान्तरावसाने वा ? निर्दुष्टं किं मतं त्रिषु ? । 'तस्य तावदि' तिश्रुत्या श्रेष्ठः पक्षोऽस्ति मध्यमः ॥३७॥ मैवं श्रुत्योच्यते यस्मान्मुक्तिर्भोगादनन्तरम् । यत्र भोगः समाप्तस्तत् तस्यान्ते देवसंक्षयः ॥३८॥



## श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये

# चतुर्थाध्यायस्य द्वितीयः पादः ।

### * अथ वागधिकरणम् ॥१॥

प्रतिक्रान्ते पादे विद्याधिगमेन भोगेन च पुण्यपापे विनाश्य भोगायतनं देहमपहाय ब्रह्मविद् ब्रह्म सम्पद्यते । तत्र कथं सम्पद्यत इत्यपेक्षाया-मर्चिरादिमार्गेण परं पदं गत्वेति वक्तुं प्रथममुत्क्रान्तिप्रकारं चिन्तयति—

## वाङ्मनसि दर्शनाच्छब्दाच्च ।४।२।१।

इदमाम्नायते—"अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्" । छा० ६।८।६। । तत्र 'वाङ्मनसि सम्पद्यते' इत्यत्र संशयः । किं वाग्वृत्तेर्मनसि सम्पत्तिरुत वृत्तिमत्या वाच इति । किं युक्तम् ? वाग्वृत्तेरेव सम्पत्तिः कुतः ? वाचो मनसः कार्यत्वाभावेन तत्र वाक्स्वरूपसम्पत्त्यनुपपत्तेः । तात्पर्यानुपपत्त्या वाक्छब्दस्य वाग्वृत्तौ लक्षणया तस्या एव मनसि सम्पत्तिरुपपद्यत इति प्राप्तेऽभिधीयते—वाङ्मनसीति । वागेव मनसि सम्पद्यते संयुज्य तिष्ठतीत्यर्थः । कुतः ? दर्शनात् । दृश्यते हि स्वापादिषु वागि-

*'वाङ् मनसि' वाक्ये या मनःसम्पन्नतोदिता । वाग्वृत्तेरुत वाचः सा ? किं युक्तमिति चिन्त्यते ॥१॥ मनो न कारणं वाचस्तस्माद्वाग्वृत्तिमान् । लीयते कारणे कार्यमिति विद्वद्विनिश्चयः ॥२॥ वाग्वृत्तौ लक्षणा वाचस्तात्पर्यानुपपत्तितः । दर्शनादथ शब्दाच्च द्वितीयस्यैव युक्तता ॥३॥ यस्मादत्र हि सम्पत्तिः संयोगो न लयस्ततः । मनसोऽकारणत्वेऽपि न दोषः कश्चिदत्र हि ॥४॥ वाचमनु च सर्वेषां सम्पत्तिरत एव हि ।

न्द्रिय उपरतेऽपि मनसः प्रवृत्तिः। वाग्वृत्तेः सम्पत्तावप्येतदुपपद्यत इत्यत आह शब्दाच्चेति। श्रुतौ 'वाङ्मनसि सम्पद्यते' इति वाच एव सम्पत्तिरभिधीयते न वृत्तिमात्रस्य। न हि तदानीं वृत्तिमात्रसम्पत्तौ स्वरूपेण वागिन्द्रियस्य सद्भावे किमपि प्रमाणमुपलभ्यते। यत्तु वाचो मनसोऽकार्यत्वान्नोपपद्यते सम्पत्तिरिति तन्न सम्पत्तिरत्र संयोगमात्रं न तु लयो येनोक्तदोषः स्यात् ॥१॥

## अत एव सर्वाण्यनु ।४।२।२।

यतो मनसि वाचो लयः किन्तु संयोगः। अत एव वाचमनु मनसोऽनुपादानत्वेऽपि सर्वेन्द्रियाणां तत्र श्रुत्युक्ता सम्पत्तिरुपपद्यते ॥२॥

### * अथ मनोऽधिकरणम् ॥२॥

## तन्मनः प्राण उत्तरात् ।४।२।३।

एवं 'मनः प्राणे' ( बृ० ६।८।६। ) इत्युत्तरवाक्ये किं सर्वेन्द्रियसम्पत्त्याधारस्य मनसः प्राणे लयो भवति संयोगमात्रं वेति विशये 'अन्नमयं हि सोम्य मनः ( छा० ६।२।४। ) इत्यत्र मनसोऽन्नविकारत्वश्रवणादन्नस्य च 'ता अन्नमसृजन्त' ( छा० ६ ) इत्यब्विकारत्वश्रवणात् आपोमयः प्राणः' ( छा० ६।६।५। ) इति प्राणस्याप्प्रकृतिकत्वात्तेन 'मनः प्राणे' इति प्राणशब्दस्य प्राणकारणभूतास्वप्सु लक्षणया स्वप्रकारणभूतासु

*'मनः प्राणे'ऽत्र किम्प्राणे लयो वै मनसोऽथवा ॥५॥ संयोगमात्रमेवात्र किं युक्तमिति चिन्त्यते। आद्य एव यतोऽन्नस्य विकारो हि मनः श्रुतौ॥६॥ प्राणस्य चाब्विकारत्वं तत्परम्परया लयः। प्राणकारणभूतास्वप्सु प्राणस्य हि लक्षणा ॥७॥ अहङ्कारविकारत्वं मनसो सम्मतं तथा। प्राणे नभोविकारत्वं तस्मादन्त्यं वरं मतम् ॥८॥ आप्यायकत्वमन्नादेर्मन आदेस्तु बुध्यताम्। गौरवात् प्राणशब्दस्य युक्ता नैवाप्सु लक्षणा ॥९॥

परम्परया मनसः सम्पत्तिर्लय एवेति प्राप्तेऽभिधीयते तन्मनः प्राण इति । मनस अहंकारिकत्वादाकाशकार्यत्वाच्च प्राणस्याप्लक्षणागौरवाच्च न प्राणे लय उपपद्यते । "अन्नमयं हि सोम्य मन." 'आपोमयः प्राणः' इति मन प्राणयोरन्नादिभिश्चाप्यायनमात्रत्वं तस्मान्मनसः प्राणे संयोग एवेति ॥३॥

× अथाध्यक्षाधिकरणम् ॥३॥

## सोऽध्यक्षे तदुपगमादिभ्यः ।४।२।४।

'प्राणस्तेजसी' त्युत्तरवाक्ये किं प्राणस्य तेजसि सम्पत्तिरुत जीव इति संदेहे 'प्राणस्तेजसि' इति श्रुतेस्तेजस्येवेति प्राप्तेऽभिधीयते–सोऽध्यक्ष इति । स प्राणोऽध्यक्षे "सकारणं कारणाधिपाधिपः" इति सर्वकरणाध्यक्षे जीवे सम्पद्यते । कुतः ? तदुपगमादिभ्यः । "एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति" ( बृ० ४।३।३८। ) इति प्राणस्य जीवोपगमोऽभिधीयते । एवं "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" (बृ० ४।४।२। ) इति च । "कस्मिन्नुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठास्यामि" ( प्र० ६।३। ) इति श्रुतिर्जीवेन सह प्राणस्य प्रतिष्ठामपि बोधयति । तथा च प्राणो जीवेन प्राक्संयुज्य तेन सह तेजसि सम्पद्यते । नन्वेवं 'प्राणस्तेजसि' इति साक्षाच्छ्रुतेर्विरोध इति चेन्न, प्राणस्याध्यक्षसंयोगेऽपि गङ्गया संयुज्य यमुनायाः सागरगमनेऽपि 'यमुना सागर गच्छति' इतिवत् 'प्राणस्तेजसि' इति व्यपदेश उपपद्यत एव । सोऽध्यक्ष इत्यस्य

---

*'प्राणस्तेजसि' इत्यत्र प्राणस्तेजसि लीयते ? । किम्वा जीवेऽत्र किं युक्तमाद्य तेजसि वै श्रुतेः ॥१०॥ 'आत्मानमन्तकाले'ऽत्र जीवापगमतः परम् । प्राणस्य प्राणिना साकम्प्रतिष्ठायाः श्रुतेरपि ॥११॥ संयुज्य गङ्गया कालिन्द्या अब्धौ गमनेऽपि च । यमुना सागरं गच्छतीतिवत् 'तेजसि' श्रुतिः ॥१२॥

'प्राणस्तेजसि' इति श्रौतवाक्यसामञ्जस्याय च 'मुख्य प्राण एवेन्द्रियाणां प्राणपदवाच्यानां सङ्गम इत्यर्थन्तु न शङ्कनीय एव । अनेक श्रुतीनां वैयर्थ्यप्रसङ्गात् ॥४॥

## ॐ अथ भूताधिकरणम् ॥४॥

## भूतेषु तच्छ्रुतेः ।४।२।५।

पूर्वसूत्रेण जीवसम्परिष्वक्तस्य प्राणस्य तेजसि सम्पत्तिरभिहिता । सा च सम्पत्तिस्तेजोमात्र आहोस्वित्समवेतेषु सर्वेषु भूतेष्विति । सर्वेषु भूतेषु सम्पद्यते जीवसचिवः प्राण इति । कुतः ? तच्छ्रुतेः "पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयः" ( बृ० ४।४।५ ) इत्यात्मनः सर्वभूतमयत्वश्रवणात् ॥५॥

ननु क्रमेण सम्पत्तावपि 'पृथिवीमय' इत्यादिश्रुतिः सङ्गच्छत इत्यत आह—

## नैकस्मिन् दर्शयतो हि ।४।२।६।

न क्रमेणैकस्मिन् सम्पत्तिरुपपद्यते । एकैकस्य सृष्ट्यादिकरणासामर्थ्यात् । यतो दर्शयतश्चासामर्थ्यं श्रुतिस्मृती । "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" "तासां त्रिवृतं त्रिवृतमेकैकस्य करवाणि" ( छा० ६।३।२।३ ) इति श्रुतिः । "नाना वीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः । समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः । महदाद्याविशेषान्ता ह्यण्डमुत्पादयन्ति ते" ( वि० पु० १।२।६२।६३। ) इति । तस्माद्भूतान्तरमिलितस्यैव तेजसोऽत्र ग्रहणमिति ॥६॥

*'प्राणस्तेजसि' वाक्येऽत्र तेजोमात्रे हि किं लयः । प्राणस्यात्मयुजो भूतेषु संसृष्टेषु वा लयः ? ॥१३॥ किं भवेदाद्य इत्येव तेजोमात्रश्रुतियतः । सर्वभूतमयत्वोक्त्याऽऽत्मनः परो हि युक्तिभाक् ॥१४॥

## + अथासृत्युपक्रमाधिकरणम् ॥५॥

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ।४।२।७।

किमिदमुत्क्रमणं ब्रह्मविदोऽन्यस्य च समानमाहोस्विदन्यस्यैवेति संशयेऽन्यस्यैवेति । कुतः ? ब्रह्मविदस्त्वत्रैवामृतत्वश्रवणादुत्क्रमणाभावात् । तथा च श्रुतिः "अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" ( का० २।६। १४। ) इति ।

अत्राऽभिधीयते-समाना चाऽसृत्युपक्रमादिति । ब्रह्मविदोऽप्यासृत्युपक्रमादुत्क्रान्तिः समानैव । आसृत्युपक्रमादित्यस्य प्राङ्नाडीप्रवेशादित्यर्थः । नाडीप्रवेशस्तु ब्रह्मविदोऽपि गमने श्रूयत एव "शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभि निस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" ( का० २।६।१६ ) इति नाडीप्रवेशः श्रूयते । बृहदारण्यके च "तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः" ( बृ० ४।४।२ ) इति श्रूयते । तत्र "शतं चैके"ति श्रुत्यभिहितसुषुम्नानाडीद्वारा प्राणप्रयाणस्य प्रकृतश्रुत्यापि मूर्ध्नेवित्यनुमोदितस्य तस्य ब्रह्मविदभिप्रायकत्वात् । "चक्षुरादिभ्यः" प्राणगतिस्त्वन्याभिप्रायेति गम्यते । "अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" ( का० २।६।१४। ) इत्यस्य का गतिरित्यत आह-अमृतत्वञ्चानुपोष्येति । चोऽवधारणे । करणकलेवरादिसम्बन्धवेलायामेवोत्तरपूर्वाघयोर्यस्त्यागः स एवामृतपदव्यपदेश्यः । दुःखहेतुभूतस्याघस्य विनाशे दुःखानुभवाभावादमृतत्वप्राप्तिरेवेति भावः । एतच्च तच्छ्रुति-

*उत्क्रमणमिदं ब्रह्मविदोऽन्यस्यैव भाषितम् ? । यद्वा ब्रह्मविदश्चापि ? किं स्यादादिम एव हि ॥१५॥ यस्माद् ब्रह्मविदश्चास्ति ह्यत्रैवामृतताश्रुतिः । आसृत्युपक्रमात् तन् स्याद् द्वयोस्तथा च या श्रुतौ ॥१६॥ विदुषोऽमृतता सा चोत्तरपूर्वाघनाशतः ।

पूर्वार्धेन स्पष्टीक्रियते "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।" इति हृदयाधिष्ठितसुखदुःखहेतुभूतपुण्यपापप्रमोकानन्तरमेवामृतत्ववचनम् । श्रौतस्यात्रेत्यादिवाक्यस्य ब्रह्मविदो विद्यासमये कर्मक्षयानन्तरं विमुक्ति-दशायां योऽयं ब्रह्मानुभवस्तं प्राप्नोतीत्यर्थः । प्रतिपादितं चैतद्विस्तरेण जन्मादिसूत्र इत्यत्र संक्षेपः ॥७॥

## तदापीतेः संसारव्यपदेशात् ।४।२।८।

अपरित्यक्तदेहसम्बन्धस्यैवामृतत्वमिति । अपीतिर्देशविशेषमाश्रित्य या ब्रह्मप्राप्तिरूपावस्था । आतदवस्थं देहसम्बन्धलक्षणः संसारो व्यपदिश्यते "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" ( छा० ६।१४।२। ) धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि" ( छा० ८।१६।१ ) इत्यादिश्रुतिभिरिति ॥८॥

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ।४।२।९

ब्रह्मविदोऽपि क्रममुक्तौ सूक्ष्मशरीरसम्बन्धोऽस्त्येव । कथमवगम्यते ? प्रमाणतस्तथोपलब्धेः । अर्चिरादिमार्गेण गमने 'त प्रतिब्रूयात्' ( कौ० १।२ ) इति चन्द्रमसा संवादश्रवणात् । तस्मात्सूक्ष्मशरीरसम्बन्ध उपल-भ्यत एव ॥९॥

## नोपमर्देनातः ।४।२।१०।

अतः "यदा सर्वे प्रमुच्यन्त" इति श्रुतिर्न शरीरसम्बन्धस्योपमर्द-नामृतत्वमभिधत्ते ॥१०॥

## अस्यैव चोपपत्तेरूष्मा ।४।२।११।

सत्येव सूक्ष्मदेह उपलभ्यमान एष ऊष्मास्यैव सूक्ष्मदेहस्यैव धर्मः । मरणानन्तरं स्थूलदेह ऊष्मणोऽनुपलब्धिर्भवति । ततश्च क्वचिदुपलब्धिः सूक्ष्मशरीरेण सहैव ब्रह्मविद उत्क्रान्तिं द्योतयतीति । अत आसृत्युपक्र-माद् ब्रह्मविदोऽन्यस्य च समानमुत्क्रमणमिति ॥११॥

अह्मविद उत्क्रान्तिर्नोपपद्यत इति भूयस्सञ्चोद्य सामाधत्ते —

## प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ।४।२।१२।

ननु बृहदारण्यके पूर्वमविद्रुप उत्क्रान्तिमभिधाय "प्राप्यान्तं कर्मण-स्तस्य यत्किञ्चेह करोत्ययम् । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण इति तु कामयमानः" ( बृ० ४।४।६। ) इत्यविद्वद्विषयं समाप्य "अथाका-मयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रा-मन्ति ब्रह्मैव सन् ब्रह्माप्येति" ( बृ० ४।४।६। ) इत्यनया ब्रह्मविद उत्क्रा-न्तेः प्रतिषेधादिति चेन्न, शारीरात्–शरीराध्यक्षाज्जीवात्प्राणानामुत्क्रान्ति-रत्र प्रतिषिध्यते । न तु शरीरात् । पूर्वत्र 'अथाकामयमानः' इति ब्रह्म-विदो जीवस्यैव श्रुतिरतस्तस्यैव 'न तस्य प्राणा उत्क्रामन्ती' त्यनेन परा-मर्शः । एव तस्येत्यत्र तच्छब्देन विद्वज्जीवस्तदुत्तरषष्ठ्या च तस्यैव जीव-स्य सम्बन्धोऽभिधीयते । उत्क्रमणस्यापादानताऽपि शारीर एव सान्नि-ध्यात् न तु शरीर इति । सम्बन्धमात्राभिधायिन्याः षष्ठ्याश्चापादानत्व-मपि बोध्यते 'नटस्य श्रृणोती' तिवत् । अस्मिन्नर्थे न विवादः स्पष्टो ह्येकेषाम्–"योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात्प्राणा उत्क्रामन्ति" ( बृ० ४।४।६। ) इति माध्यन्दिनाः शारीरमेवापादानमा-मनन्ति । अयम्भावः । ब्रह्मविदः शरीरत्यागसमय एव ब्रह्मसम्पत्तिः 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इत्यभिहिता तदा प्राणवियोगोऽपि सम्भवति । सञ्जातप्राणवियोगस्य त्वचिरादिमार्गेण गमनं ब्रह्मप्राप्तिश्च नोपपद्येते । अतो ब्रह्मविदो ब्रह्मप्राप्तेः प्राङ् न प्राणानामुत्क्रान्तिरिति प्रपञ्चितञ्चैतज्जन्मादिसूत्रेऽतोत्र संक्षेपः ॥१२॥

## स्मर्यते च ।४।२।१३।

"ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् । ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्" ( याज्ञवल्क्य० अ० प्र० १६७ ) इति ब्रह्मविदो मूर्धन्यनाड्योत्क्रमणम् स्मर्यते ॥१३॥

* अथ परसम्पत्त्यधिकरणम् ॥६॥

## तानि परे तथा ह्याह ।४।२।१४।

पूर्वत्र करणप्राणसहितस्य जीवस्य समुत्क्रान्तिसमये तेज आदि भूतसूक्ष्मेषु सम्पत्तिरभिहिता । तानि पुनर्जीवसहितानि भूतसूक्ष्माणि फलभोगाय यथास्थानमुपयान्ति, आहोस्विद्ब्रह्मणि सम्पद्यन्त इति संशयः । तत्र यथाकर्म यथाविद्यं फलोपभोगार्थमेवोपयान्तीति प्राप्तेऽभिधीयते-तानि पर इति । तानि सजीवानि भूतसूक्ष्माणि परस्मिन्नात्मन्येव सम्पद्यन्ते । उक्तार्थे श्रुतिं प्रमाणयति तथाह्याहेति । 'तेजः परस्यां देवतायाम्' (छा० ६।८।६। ) इति । सुषुप्तौ सति सम्पन्नस्य दुःखाभावः सुखानुभवश्च 'सुखमहमस्वाप्समिति । तथात्रापि परदेवतासम्पन्नस्य दुःखाभावः सुखानुभवश्चानुमीयते । श्रुत्यनुगुणैव व्यवस्था सम्पादनीयेति भावः ॥१४॥

+ अथाविभागाधिकरणम् ॥७॥

## अविभागो वचनात् ।४।२।१५।

किमियं परमात्मनि सम्पत्तिः 'पृथिव्यप्सु लीयत' इति पृथिव्यादीनां जलादिकारणापत्तिरेवाहोस्वित् 'वाङ्मनसि सम्पद्यते' इति वदविभागस्वरूपतेति विषये सर्वकारणस्वरूपपरमात्मनि कारणापत्तिरूपैवेति प्राप्तेऽभिधीयते अविभाग इति । विभागप्रतियोगिसंयोगोऽविभाग इति परमात्मना विलक्षणसंयोगरूपेयं सम्पत्तिरिति । वैलक्षण्यञ्चात्र पृथग्व्यवहारानर्हत्वमेव ।

---

*उपयान्ति यथास्थानं फलोपभोगहेतवे ॥१७॥ जीवयुक्तानि भूतानि ? सम्पद्यन्तेऽथवेश्वरे ? । परमेश्वरसम्पत्तौ फलभोगो न सम्भवेत् ॥१८॥ यथाकामं यथाविद्यं भोगार्थमुपयान्ति तत् । मैवं 'तेजः परस्यां देवतायामि'ति वाक्यतः ॥१९॥ सीतानाथे च सम्पन्नः सुखमनुभवेद् ध्रुवम् । दुःखाभावो हि तत्र स्यात् सुषुप्तौ च यथा तथा ॥२०॥

+ईशसम्पन्नतेयं किं कारणाप्तिर्धराम्बुवत् ? । अविभागोऽथवेयं स्याद्

कुतः ? वचनात् । 'वाङ्मनसि सम्पद्यते' इत्यतः । संयोगार्थकस्य सम्पद्यतेस्सर्वत्रान्वयात् । 'तेजः परस्यां देवताया' मित्यत्राप्यन्वयः । सम्पद्यतेश्चात्र विलक्षणसंयोगार्थकत्वम्पूर्वमेव निर्णीतमिति ॥१५॥

❀ अथ तदोकोऽधिकरणम् ॥८॥

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ।४।२।१६।

'समाना चासृत्युपक्रमा' दित्यनेन ब्रह्मविदामन्येषाञ्चोत्क्रान्तिः समानोक्ता । एव "शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेतिविष्वङ्ङन्या उत्क्रमणे भवन्ति" ( का० २। ६।१६। ) इत्यस्यां श्रुतावथोत्क्रान्तिरभिधीयते । तत्राय संशयः । किं ब्रह्मविदः शताधिकया मूर्धन्यया नाड्यैवोत्क्रमणमविदुषश्चान्याभिरेवेत्ययं नियमः सम्भवति न वा । न नियमः सम्भवतीति । कुतः ? अनेकनाडीषु मूर्धन्यनाडीविवेकस्याऽसम्भवादविशेषेणाभिधानाच्चेति प्राप्तेऽभिधीयते–शताधिकयेति । ब्रह्मविदस्तु शताधिकया मूर्धन्ययैव नाड्योत्क्रमणमन्यस्याविदुषो नाड्यन्तरेणैवेति नियमः ।

ननु नाडीविवेकाभावात्कथं मूर्धन्ययैवेति नियम इत्यत आह–विद्यासामर्थ्यादिति ।

---

यथा मनसि वाक् तथा ? ॥२१॥ किं युक्तमाद्य एवैषो सर्वकारणता यतः । सम्पद्यते पदं यस्मात् सर्वत्र ह्यनुपज्यते ॥२२॥ अविभागस्ततश्चैयं सम्पत्तिरिति निश्चयः ।

"शतञ्चैके'ति वाक्येन चोत्क्रान्तिः कथिता श्रुतौ ॥२३॥ तत्राय संशयो "विद्वान् नाड्या मूर्धन्ययैव हि । उत्क्राम्यति न चाविद्वान्" नियमोऽयं न सम्भवेत् ॥२४॥ सम्भवेदथवा ? किं स्यादाद्यो नाड्यविवेकतः ।

परमात्मोपासनरूपविद्यासामर्थ्यात् परमात्मशेषत्वानुसन्धानाच्च स उपासकः परमात्मनानुगृहीतो भवति । एवञ्च परमात्मानुग्रहेणैव तस्य तच्छेषभूतस्य जीवस्य निवासस्थानं हृदयं अग्रे ज्वलनं प्रकाशनं यस्य तथा भवति । अत एव तेन प्रकाशितद्वारो ब्रह्मविन्मूर्धन्यां सुषुम्नाख्यां नाडीमवगच्छतीति तया चास्य गमनमुपपद्यते ॥१६॥

## ❀ अथ रश्म्यनुसाराधिकरणम् ॥९॥

## रश्म्यनुसारी ।४।२।१७।

अथ मूर्धन्यनाड्या निर्गतो ब्रह्मविद्रश्मिभिरूर्ध्वमुपयाति । तथेदं श्रूयते "अथ यत्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" ( छा० ८।६।५। ) इति । अत्र प्रकारान्तरेणापि गतिः सम्भवत्याहोस्विद्रश्म्यनुसारेणैवेति संशये रश्म्यनुसारेणैवेति नियमासम्भवात्प्रकारान्तरेणापि । श्रुतेस्तु पक्षान्तरे चारितार्थ्यम् ।

इति प्राप्तेऽभिधीयते–रश्म्यनुसारीति । रश्म्यनुसार्येव ब्रह्मविद् गच्छत्यूर्ध्वम् । कथमवगम्यते । 'एतैरेव रश्मिभिः' इत्येवकारेणावधार्यते । पाक्षिकप्राप्तावेवकारो व्यर्थः स्यात् । तस्माद्रश्म्यनुसारेणैव ब्रह्मविदो गमनम् ॥१७॥

## निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वा-दर्शयति च ।४।२।१८।

नन्वहनि हृदयनाडीसूर्यरश्मिसम्बन्धस्य सत्वादहन्येव मृतो रश्म्यनु-

---

रामस्यानुग्रहादेव नाडीबोधस्ततोऽपरः ॥२५॥ भक्त्या चानुग्रहस्तस्य शेषत्वचिन्तनादपि ।

*रश्मिभिरूर्ध्वमुत्क्रान्तिश्छान्दोग्येऽभिहिता च या ॥२६॥ सा प्रकारान्तरेणापि सम्भवेदथवा तु सा । रश्म्यनुसारिणी चैव ? किं युक्तमात्र एव हि ॥२७॥ निश्यभावाद्धि रश्मीनां नियमः सम्भवेद् कुतः । गमनं

सारी सूर्यम्प्राप्योर्ध्वं गच्छति रात्रौ तु तत्सम्बन्धस्यासत्त्वान्न रश्म्यनुसारित्वमुपपद्यते । कुतस्तरां तदूर्ध्वंगमनमिति चेन्न, नाडीरश्मिसम्बन्धस्य यावद्देहभावित्वाद् रात्रावपि रश्म्यनुसारित्वेनादित्यं प्राप्य तद्द्वारा ब्रह्मप्राप्त्युपपत्तेः । दर्शयति च नाडीरश्मिसम्बन्धस्य यावद्देहभावित्वं श्रुतिः–

'अमुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः'(छा०।८।६।२।) । इति ननु रात्रौ रश्मय एव न भवन्ति कुतस्तदनुसारेण गमनमिति चेन्न, निदाघादौ रात्रावप्यूष्मोपलम्भाद्रश्मिसद्भावस्तदानीमप्यस्त्येव । क्वचिच्च शैत्याभिभवादूष्मणोऽनुपलम्भः । चकारः प्रमाणान्तरसंग्रहार्थकः । तस्माद्रात्रावपि मृतो ब्रह्मविद्रश्म्यनुसारेणादित्यमुपसङ्क्रम्य ब्रह्म प्राप्नोतीति ॥१८॥

## + अथ दक्षिणायनाधिकरणम् ॥१०॥

## अतश्चायनेऽपि दक्षिणे ।४।२।१९।

दक्षिणायने मृतस्य ब्रह्मविदो ब्रह्मप्राप्तिरस्ति न वेति संदेहः । न ब्रह्मप्राप्तिः । कुतः? 'अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चंद्रमस्सायुज्यं गच्छति" ( तै० ना० ५।२१। ) एवं चंद्रमस्सायुज्यमुपगतानां 'तस्मिन्यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्त्तन्ते' ( छा० ५। १०। ५। ) इति पुनर्निवर्त्तनश्रवणात् । अत एव ब्रह्मोपासनवतां भीष्मादीनामुत्तरायणकालस्य प्रतीक्षापीतिहासग्रन्थेषूपपद्यते । अतो न ब्रह्मप्राप्तिरिति प्राप्तेऽभिधीयते । अतश्चायनेऽपि दक्षिणे इति । अतः सम्बन्धस्य

---

रश्मिभिश्चाह्नि सम्भवत्येव पाक्षिकम् ॥२८॥ अनुवादस्तु तस्यैव योऽयं रश्मिभिरुत्क्रमः । 'अथैतैरेव' इत्येवमेवकारो यतः श्रुतः ॥२९॥ नाडीरश्म्योश्च योगस्य यावच्छरीरभाविता । ततोऽपरो निदाघान्तु रश्मयस्तापहेतुतः ॥३०॥

+ अयने दक्षिणे विद्वान् यो मृतस्तस्य किम्भवेत् । ब्रह्मप्राप्तिर्न वा

यावद्देहभावित्वादेव दक्षिणायने मृतस्यापि ब्रह्मविदोऽस्त्येव ब्रह्मप्राप्तिः। पितृयाणमार्गेण चन्द्रमण्डलप्राप्तानामविदुषामेव 'पुनर्निवर्तनम् न तु ब्रह्मविदः। कुतः ? 'तस्माद्ब्रह्मणो महिमानमाप्नोति' ( तै० न० ५२ ) इति तत्रैव वाक्यशेषात्। प्रक्षीणकर्मबन्धस्य ब्रह्मविदस्त्वर्चिरादिमार्गेण गतिमभिधाय 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' ( छा० ५।१०।२। ) इति ब्रह्मप्राप्तिः श्रूयते। दक्षिणायने तस्य मृतस्य तु चन्द्रलोकावाप्तिः विश्रमार्थमेवेति बहुश्रुतिप्रमाणानुरोधाद्योज्यम्। भीष्मादिमहात्मनान्तूत्तरायणकालस्य प्राशस्त्यबोधनार्थमेव तथाचार इति ॥१९॥

ननु स्मृतिषु 'यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः। प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ' ( गी० ८।२३। ) 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः' ( गी० ८।२४। ) इत्यादिना कथमुत्तरायणकालस्यैवानावृत्तौ हेतुताभिहितेत्यत्राह—

## योगिनः प्रति स्मर्येते स्मार्ते चैते ।४।२।२०।

अथ "तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षम्" ( छा० ५।१०।१। ) इति क्रमेणार्चिरह शुक्लपक्षादिप्राप्तेः श्रवणात्। न ह्येकस्य एतद्योगपद्येन सम्भवत्यतोऽन्यादेः कालपरत्वानुपपत्तेःकालशब्दस्य कालाभिमानिन्यामातिवाहिकदेवतायां लक्षणा। 'सन्दिग्धन्तु वाक्यशेषा' दिति न्यायेनोपक्रमे संदिग्धार्थकस्य कालशब्दस्य 'शुक्लकृष्णे गती ह्येते' 'नैते सृती पार्थ ! जानन्योगी मुह्यति कश्चन' ( गी० ८ ) इत्यु-

---

किं स्यादन्त्यं निवर्त्तनश्रुतेः ॥३१॥ भीष्मादीनां ततश्चैवोत्तरायणप्रतीक्षणम्। नाडीरश्म्योश्च योगस्य यावच्छरीरभाविता ॥३२॥ तत एव वरुञ्चाद्यमभवतानां निवर्त्तनम्। भीष्मादीनां तथाऽऽचारस्त्वयनस्य प्रशस्तये ॥३३॥

पसंहारश्श्रुत 'सृती' पदानुसारेण नेतव्यत्वात् । एते शुक्लकृष्णे गती स्मार्त्तौ स्मृतिविषयभूते चिन्तितव्ये योगाङ्गत्वेन प्रतिदिनं स्मरणाय योगिनः प्रति स्मर्येते श्रीगीताचार्येण 'नैते सृती पार्थ जनन्योगी मुह्यति कश्चन । तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन' ( गी० ८ ) इति । तस्मान्मुमूर्षुम्प्रति नात्रकालनियमनमिति ॥२०॥

इति श्रीभगवद्रामानन्दप्रणीते शारीरकमीमांसाया आनन्दभाष्ये चतुर्थाध्यायस्य द्वितीयः पादः ॥२॥

## श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये

# चतुर्थाध्यायस्य तृतीयः पादः ।

### * अथार्चिराधिकरण ॥१॥

### अर्चिरादिना तत्प्रथितेः ।४।३।१।

एवमतीतेन ग्रन्थेन ब्रह्मविद उत्क्रान्तिरभिहिता । इदानीमाब्रह्मप्राप्तेस्तस्याध्वा विचार्यते । तत्रानेकधा श्रुतिषु सोऽध्वा समाम्नायते । यथा छान्दोग्ये—"तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहः" ( छा० ५।१०।१। ) इत्यर्चिरादिक एकः । पुनस्तत्रैवाष्टमे प्रपाठके 'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' (छा० ८।६।५।) इति भिन्न एव । 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति' (बृ० ५।१०।१।)इति पुनरन्यः । 'स एतंदेवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोक स ब्रह्मलोकम्'(कौषी० १।३) इत्यपरः । 'सूर्यद्वारेण ते विरजाः प्रयान्ति' (मु० १।२।११।) इति चापरः । तत्रायं विशयः समुदेति । किमेभिर्नाना श्रुतिषु प्रभिन्नरूपेण प्रतिपादितैरध्वभिरुपासकोऽनियमेन गच्छत्याहोस्विदनेकविशेषणविशिष्टेन तत्र तत्र प्रतिपादितेनैकेनैवार्चिरादिनाध्वनेति । तत्र प्रकरणभेदात्प्रकारभेदाच्च भिन्ना एवैते सर्वेऽप्यध्वान इति सर्वैरेवानियमेनोपासनाद्यनुष्ठानभेदादब्रह्मविद् गच्छति । तथैव प्रतिपादितत्वादिति प्राप्तेऽभिधीयते अर्चिरादिनेति । अनेकविशेषणविशिष्टोऽर्चिरादिरेक एवाध्वा सर्वत्र प्रतिपाद्यते । अतः सर्वे हि ब्रह्मविदोऽर्चिरादिनाऽध्वनैव गच्छन्ति । कुतः? तत्प्रथितेः । तस्यैव बहुश्रुतिषु

*ब्रह्मप्राप्तेरनेके हि पन्थानः श्रुतिबोधिताः । तैरनेकाध्वभिर्भक्तोऽनियमेनैव गच्छति ॥१॥ नानाविशेषयुक्तेनैकेनार्चिरादिनाऽथवा ? । उपासनाद्यनुष्ठानभेदाद्यं मतं वरम् ॥२॥ नैतच्छ्रुतिषु सर्वत्र ह्यर्चिरादिर्मतो यतः । श्रुतीनामेकवाक्यत्वात् प्राप्तव्येशस्य चैक्यतः ॥३॥ मार्गस्यैक्यं न चानैक्यं तद् गच्छत्यर्चिरादिना ।

प्रसिद्धेः। न च प्रकरणभेदान्मार्गभेदः। सर्वासां मार्गपराणां श्रुतीनामैक्यात्। प्राप्तव्यस्य ब्रह्मण एकत्वाच्च। अन्यत्र श्रुतानां पदानामन्यत्रोपसंहारेण सर्वासामेकवाक्यतोपपत्त्यैकस्यैवार्चिरादिमार्गस्य प्रतिपादकत्वनिष्पत्तेः। तस्माद् ब्रह्मप्राप्तेरेक एवार्चिरादिलक्षणोऽध्वेति सिद्धम् ॥१॥

## * अथ वाय्वधिकरणम् ॥२॥

## वायुमब्दादविशेषविशेषाभ्याम् ॥४।३।२।

इदानीमर्चिरादिमार्गस्य विभिन्नासु श्रुतिषु यः क्रमभेद उपलभ्यते तस्य व्यवस्था क्रियते। तत्र छान्दोग्ये "मासेभ्यः संवत्सरं संवत्सरादादित्यम्" (छा० ४।१५।५।) इति श्रूयते। बृहदारण्यके "मासेभ्यो देवलोकं देवलोकादादित्यम्" (बृ० ६।२।१५। इति पञ्चमाध्याये "यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति" ( बृ० ५।१०।१ ) चैवं श्रूयते। तत्र संशयः। किं वायुशब्देन देवलोकशब्देन चैकार्थस्यैव प्रतिपाद्यत्वादुचितक्रमेण ब्रह्मविद् गच्छत्याहोस्वित् संवत्सरादूर्ध्वं देवलोकं गत्वा वायुलोकमिति। किम्प्राप्तम् ? अविशेषाद्यथेष्टम्। इति प्राप्तेऽभिधीयते। वायुशब्दादिति। संवत्सरादूर्ध्वं वायुमभिगच्छतीति। कुतः ? अविशेषविशेषाभ्याम्। देवलोकशब्दो हि देवानां लोकमित्यविशेषेण व्याख्यानेन वायुमेवाह। तथान्यत्र 'स वायुमागच्छति' ( बृ० ५।१०।१। ) इति विशेषेण रूपेण वायुमाचष्टे। तस्माद् देवलोकवायुशब्दाभ्यामविशेषविशेषाभ्यां वायुरेवाभिधीयते। अतः संवत्सरात्परं वायुमेवाभिगच्छतीति ॥२॥

---

* आदित्यमासयोर्मध्ये छान्दोग्ये वत्सरश्रुतिः ॥४॥ देवलोकः श्रुतस्तत्र बृहदारण्यके पुनः। तत्रैवादित्यतः पूर्वं वायुर्वै श्रूयते ततः ॥५॥ देवलोकस्य वायोश्च भिन्नताऽभिन्नताऽथवा ?। उदिते संशये चैवं किं युक्तमिति चिन्त्यते ॥६॥ शब्दभेदप्रसिद्धिभ्यां भिन्नतैवेति बुध्यताम्। अविशेषविशेषाभ्यां न भेद इति निश्चयः ॥७॥ अतः सम्वत्सरादूर्ध्वं वायुं गच्छति नान्यथा।

×अथ वरुणाधिकरणम् ॥३॥

## तडितोधि वरुणः सम्बन्धात् ।४।३।३।

"स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोक स प्रजापतिलोकं स ब्रह्मलोकम्" (कौपी० १।३।) इति श्रूयते। तत्र संशयः। किं वरुणादीनां पाठमनुसृत्य वायोः परं निवेश आहोस्विद्विद्युत ऊर्ध्वमेवेति संशये पाठस्यावैयर्थ्याय कुत्रापि निवेशस्त्वावश्यकस्तत्र विद्युतः ऊर्ध्वं निवेशाऽसम्भवात्! कुतः? 'तत्पुरुषोऽमानवः स एनान्ब्रह्मगमयति' इति तडित्पुरुषस्यैव ब्रह्मप्रापकत्वश्रवणात्। तत्रावकाशाभावेन वायोरूर्ध्वं वरुणादीनां निवेश इति प्राप्तेऽभिधीयते-तडितोऽधिवरुण इति। तडित ऊर्ध्वमेव वरुणो निवेशनीयः। कुतः? सम्बन्धात्। तडित मेघस्थत्वादुभयोः सम्बन्धस्तस्मात्। पाठावैयर्थ्याय क्वचिदपि निवेशनीये बलीयांसमर्थक्रममनुसृत्य विद्युतोऽधिवरुणो निवेशनीयः। तत ऊर्ध्वमिन्द्रादीनामन्यत्र श्रुतानां निवेशः। 'आगन्तूनामन्ते निवेश' इति न्यायमनुसृत्येति। ततश्चायं क्रमः सम्पन्नः नाडीरश्मिप्रवेशानन्तरमर्चिपमर्चिपोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षादुत्तरायणमासांस्तेभ्यः संवत्सरं संवत्सराद्वायुं वायोरादित्यमादित्याच्चन्द्रमसं चन्द्रमसो वैद्युतं वैद्युताद्वारुणं वारुणादैन्द्रमैन्द्राद्धातृलोक धातृलोकाद्विरजां तत्र स्नात्वा श्रीसाकेतलोकद्वारमिति ॥३॥

❀ अथातिवाहिकाधिकरणम् ॥४॥

## आतिवाहिकास्तल्लिङ्गात् ।४।३।४।

किमेतेऽर्चिरादयोऽध्वनश्चिह्नभूता अथवा भोगस्थानानि आहोस्विद्ब्रह्मप्रेप्सूनामातिवाहिका इति संशयेऽध्वचिह्नभूताश्चैते। कुतः? लौकिकोप-

×'स एतं देवयानं' हीत्यादौ किं वरुणादयः ॥८॥ वायोः परं निवेश्याः स्युरथवोर्ध्वं नु विद्युतः?। तडितः पुरुषस्यैव ब्रह्मप्रापकता श्रुता ॥९॥ ततो विद्युत ऊर्ध्वं तु सन्निवेशो न सम्भवेत्। अवकाशो न तत्रास्ति वायोरूर्ध्वं ततो भवेत् ॥१०॥ ( × सन्निवेश इति शेषः ) वरुणस्य निवेशन्तु सम्बन्धाद्विद्युतः परः। तडितो मेघवृत्तित्वात् सम्बन्धो वरुणेन हि ॥११॥ पाठक्रमाद् बलीयस्त्वाच्चार्थक्रमस्य सर्वथा। तत इन्द्रो

देशवन्निर्दिष्टत्वात् । अथवा भोगस्थानान्येव । कुतः ? अग्निलोकादिश-ब्दानां दर्शनात् । इति प्राप्तेऽभिधीयते—आतिवाहिका इति । ब्रह्मविदामति-वहनकर्तारश्चैते परमात्मना नियुक्ता देवताविशेषाश्चैतेऽचिरादयः । कुतः ? तल्लिङ्गात् । गच्छतां जनानां गमयितृत्वमेवातिवाहिकत्वम् । तच्च 'स एनान्ब्रह्म गमयती' त्युपसंहारवाक्ये स्पष्टमेव दृश्यते । एतदनुरो-धेन पूर्वतनानामप्यातिवाहिकत्व सिद्धम् । अर्चिरादिशब्दानाञ्चार्चिराद्य-भिमानिदेवतापरत्वमिति प्रागेवाभिहितम् ॥४॥

ननु वैद्युतस्यैव पुरुषस्य 'स एनान् ब्रह्म गमयति' इति श्रुतेर्ब्रह्म-प्रापकत्वदर्शनात् कथमन्येषामुपरितनानामातिवाहिकत्वमित्यत्राह—

**वैद्युतेनैव ततस्तच्छ्रुतेः ।४।३।५।**

वैद्युतेन विद्युल्लोकादागतेन अमानवेनैवातिवाहिकेन विद्युत उपरि-ष्टाद् ब्रह्मविदामाब्रह्मप्राप्तेर्गमनम् । कुतः ? तच्छ्रुतेः । 'स एनान् ब्रह्म गमयति' इति तस्यैवाब्रह्मप्राप्तेर्गमयितृत्वश्रुतेः । वरुणादीनामातिवाहि-कत्वममानवानुग्राहकतयेति सुगमम् ॥५॥

+ अथ कार्याधिकरणम् ॥५॥

**कार्यं बादरिरस्य गत्युपपत्तेः ।४।३।६।**

- ब्रह्मविदामर्चिरादिमार्गेण गमनमर्चिरादिमार्गस्य स्वरूपञ्च प्रदर्शि-तम् । इदानीमेतद्विचार्यते । किमयमर्चिरादिको गणः कार्यं हिरण्यगर्भ-

---

विधिस्तस्मादागन्तवन्तनिवेशतः ॥१२। ।क्रमस्ततस्तु सम्पन्नो भक्तानामा-तिवाहिकः । अर्चिरहः सितः पक्ष उत्तरायणवत्सरौ ॥१३॥ वायुरादित्य इन्दुर्विद्युद्वरुणो च देवराट् । धाता च विरजा तस्यां स्नात्वा साकेतमा-प्नुयात् ॥१४॥

* अध्वनश्चिन्हभूता स्युरथवा भोगभूमयः । किम्वाऽर्चिरादयो ब्रह्म-प्रेप्सूनामातिवाहिकाः ॥१५॥ तत्राद्य एव पक्षः स्याद् युक्तो लोकोपदेश-

न्तदुपासीनान् गमयति उत परंब्रह्मैव ब्रह्मोपासीनान् । आहोस्वित्प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनान् परंब्रह्मेति सन्देहे कार्यमुपासीनानेव कार्यं हिरण्यगर्भं गमयतीति बादरिराचार्यो मन्यते । कुतः ? अस्य परिच्छिन्नहिरण्यगर्भोपासकस्य देशविशेषस्थस्य तत्प्राप्त्यर्थतया गत्युपपत्तेः । सर्वगतस्य सर्वात्मभूतस्य परब्रह्मणः प्राप्तये गत्यनुपपत्तेरिति भावः ॥६॥

## विशेषितत्वाच्च ।४।३।७।

पुरुषोऽमानव एत्य ब्रह्मलोकान् गमयति " ( बृ० ६।२।१५। ) इति श्रुतिस्थबहुवचनान्तेन लोकशब्देन गन्तव्यस्य ब्रह्मणो विशेषितत्वात् । "प्रजापतेः सभां वेश्म प्रपद्ये" इति कार्यब्रह्मणः सभावेश्मप्राप्त्यनुसन्धानाच्च तत्रैव गतिरुपपद्यते ॥७॥

अथैवं 'स एनान् ब्रह्म गमयति' इति निर्देशः कथं ब्रह्माणं बोधयेदित्यत्राह—

## सामीप्यात्तु तद्व्यपदेशः ।४।३।८।

'यो ब्रह्माणं विदधाति पूर्वम्' ( श्वे० ६।१८। ) हिरण्यगर्भं जनयामास पूर्वम्' इति हिरण्यगर्भस्य प्रथमजन्यत्वेन ब्रह्मसामीप्यात् ब्रह्मशब्देन व्यपदेशउपपद्यते ॥८॥

ननु हिरण्यगर्भप्राप्तस्य 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन' ( गी० ८।१६। ) इति शास्त्रेण पुनरावृत्तिरभिधीयत इति कथमर्चिरा-

---

वत् । लोकोक्त्या तु द्वितीयः स्यादिति प्राप्तेऽभिधीयते।॥१६॥ वैद्युतपुरुषस्यात्र गमयितृत्वदर्शनात् । लिङ्गात् तृतीय एव स्यात् पक्षो युक्तो न चादिमौ ॥१७॥

* कार्यं हिरण्यगर्भं किं तद्भक्तानर्चिरादिकः । राघवोपासकाँल्लोकान् गमयत्युत राघवम् ॥१८॥ यद्वा ब्रह्मात्मकत्वेन ह्यात्मनः समुपासकान् । राघवोपासकाँश्चापि राघवं गमयत्यसौ ॥१९॥ सर्वगस्य च राम-

दिना गतस्य 'तयोर्ध्वमायन्नमृतत्वमेति' ( का० २।६।१६। ) इत्यमृतत्व-वचनमुपपद्यतामित्यत्राह—

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ।४।३।६।

कार्यस्य ब्रह्मलोकस्यात्यये नाशे सति तदध्यक्षेण तल्लोकस्वामिना हिरण्यगर्भेणाधिकारिणा सह तत्रैवाधीतविद्यो विद्वान् अतो हिरण्यगर्भलोकात्परं ब्रह्म प्राप्नोति । कुतः ? अभिधानात् । 'ते ब्रह्मलोके तु परान्तकाले परामृताः परिमुच्यन्ति सर्वे' ( मु० ३।२।६ ) इति श्रौताभिधानादिति ॥६॥

## स्मृतेश्च ।४।३।१०।

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" ( कू० पु० १ ख० १२।२६७। ) इति स्मृतेश्च कार्यब्रह्मोपासकानर्चिरादिगणो नयतीत्यवगम्यते ॥१०॥

एवं बादरिमतमुक्त्वा जैमिनिमतमभिधत्ते ।

## परं जैमिनिर्मुख्यत्वात् ।४।३।११।

'स एनान् ब्रह्म गमति" इत्यादौ ब्रह्मशब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यत्वात्परमेव ब्रह्म गमयत्यर्चिरादिको गण इति जैमिनिराचार्यो मन्यते। तात्पर्यानुपपत्तौ हि लक्षणा भवति । न ह्यत्र गमनानुपपत्तिर्यतो लक्षणा स्यात् । परब्रह्मणः सर्वगतत्वेऽपि ब्रह्मविदो देशविशेषगमन एव मोक्षनियमात् । ब्रह्मलोकपदेन न तावद्धिरण्यगर्भलोकः शक्योऽवगन्तुम् । तत्र ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयसमासस्यैव,निषादस्थपतिन्यायेन सिद्धा-

---

स्य गम्यत्वानुपपत्तितः । बादरिर्मन्यते चात्र पक्षस्याद्यस्य युक्तता ॥२०॥ 'ब्रह्म गमयती' त्यत्र ब्रह्मशब्दस्य मुख्यता । ततोऽत्र जैमिनिर्मेने द्वितीयस्यैव युक्तता ॥२१॥ दोषाच्चोभयथा मेने तृतीयो बादरायणः । तत्क्रतुन्यायतश्चायं नियमः श्रुतिसम्मतः ॥२२॥

न्तितत्वात् । परब्रह्मणः सत्यसंकल्पस्य च तादृशाः स्वेच्छाविरचिता अप्राकृताश्च दिव्यलोका अपि श्रुतिस्मृतीतिहासपुराणादिषु प्रतिपाद्यन्त इति ॥११॥

## दर्शनाच्च ।४।३।१२।

"एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" ( छा० ८।३।४। ) इति श्रुतिर्दर्शयति मूर्धन्यनाड्या निस्सृतस्यार्चिरादिना ब्रह्मप्राप्तिम् ॥१ ॥

## न च कार्ये प्रत्यभिसन्धिः ।४ ३।१३।

यश्चार्चिरादिना गतस्य कार्यब्रह्मणि प्रत्यभिसन्धिः 'प्रजापतेः सभां वेश्म प्रपद्ये' इत्यनया श्रुत्यावगम्यते । सोऽपि परस्मिन्नेव ब्रह्मणि ज्ञेयः । न च कार्ये हिरण्यगर्भे । कुतश्चैतत् । तस्याभिसन्धातुः 'यशोऽहं भवामि ब्राह्मणानाम्' ( छा० ८।१४।१। ) इति वाक्यशेषे सर्वात्मभावाभिसन्धानात् । अतोऽर्चिरादिको गणः परमेव ब्रह्मोपासीनं नयतीति जैमिनिमुनेर्मतम् ॥१३॥

तदेवं जैमिनेर्मतम्प्रदर्श्येदानीं स्वमतेन सिद्धान्तमाह भगवान् बादरायणः—

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ।४।३।१४।

अर्चिरादिको गणोऽप्रतीकालम्बनान् प्रतीकालम्बनव्यतिरिक्तान् नयतीति भगवान् बादरायण आचार्यो मन्यते । प्रतीकालम्बनान् कार्यब्रह्मोपासकानेव वा नयतीति न नियमः । किन्तु ये परं ब्रह्मोपासते ये च प्रत्यगात्मानं प्रकृतिवियुक्तस्वरूपं ब्रह्मात्मकमुपासते-तथा भूतान्नयतीति नियमः । कथमिदमवगम्यते ? उभयथा च दोषात् । कार्यमुपासीनानिति पक्षे "अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनि-

ष्पद्यते" ( छा० ८।३।४। ) इत्यस्याः श्रुतेर्व्याकोपः । परमेवोपासीनानिति पञ्चाग्निविदोऽपि गमनदर्शनात् 'तद्य इत्थं विदु' रित्यादिश्रुतेर्व्याकोप इत्युभयथापि दोषात् । तस्मात्पूर्वोक्त एव नियमः । अत्र दृष्टान्तमाह तत्क्रतुश्चेति । 'यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" ( छा० ३।१४।३। ) "तं यथा यथोपासते" इति न्यायात् यथोपासकस्तथैव प्राप्नोति । एवञ्च प्रकृतिवियुक्तस्य ब्रह्मात्मकत्वानुसन्धानस्यैव सर्वथोपादेयत्वं तत्क्रतुन्यायात्सिद्धयतीति सिद्धान्तः ॥१४॥

## विशेषञ्च दर्शयति ।४।३।१५।

नामादिप्रभृतिपर्यन्तप्रतीकोपासकानां फलविशेषमेव श्रुतिर्दर्शयति "यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति" ( छा० ७।१।५। ) इति । अतः परब्रह्मोपासकान् प्रत्यगात्मानञ्च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनांश्चार्चिरादिको गणो नयतीति सिद्धम् ॥१५॥

इति श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये चतुर्थाध्यायस्य तृतीयः पादः



## श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये

# चतुर्थाध्यायस्य चतुर्थः पादः ।

### अथ सम्पद्याविर्भावाधिकरणम् ॥१॥

### सम्पद्याविर्भावः स्वेनशब्दात् ।४।४।१।

एवं ब्रह्मविदोऽर्चिरादिना पुनरावृत्तिवर्जितं गमनं तेन च ब्रह्मप्राप्तिमभिधाय मुक्तानामैश्वर्यनिर्णय इदानीं क्रियते । तत्रेदं श्रूयते-"एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" ( छा॰ ८।१२।२। ) अत्र संशयः । किं परज्योतिरुपसम्पन्नस्य कर्मसाध्यदेवादिरूपाभिनिष्पत्तिवत् ब्रह्मविद्यासाध्येन केनापि रूपेण सम्बन्धोऽनया श्रुत्याभिधीयत आहोस्वित्स्वाभाविकस्य स्वरूपस्यैवाविर्भाव इति । तत्र साधनानां साध्यनिष्पादकत्वदर्शनात् कर्मसाध्यदेवादिरूपसम्बन्धवद्विद्यासाध्येन रूपेण सम्बन्ध एवेति प्राप्तेऽभिधीयते सम्पद्याविर्भाव इति । कर्मफलस्यानित्यत्वेन तद्दृष्टान्तस्यात्रानवकाशात् । अत्र तूपासनरूपविद्यया कर्मरूपाविद्यातिरोहितस्यात्मस्वरूपस्य तिरोधाननिवृत्त्या स्वाभाविकरूपस्याविर्भावो भवत्यतोऽयं प्रत्यगात्माऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्याविद्यातिरोधानविरहितं स्वाभाविकस्वरूपाविर्भावरूपं विद्याफलं प्राप्नोति नत्वपूर्वाकारोत्पत्तिपरम् । कुतः? स्वेन शब्दात् ।

---

* 'एवमेवैष' इत्यत्र रूपस्याप्तिरुदीरिता । विद्यासाध्यस्य रूपस्य देवत्वमिव साऽथवा ॥१॥ स्वाभाविकस्य रूपस्य ह्याविर्भावोऽत्र किं वरम् । साध्यनिष्पादकत्वस्य साधनानां हि दर्शनात् ॥२॥ आद्यः पक्षः शुभो यस्माद्विद्या कर्मेव साधनम् । 'स्वेन रूपेण' इत्युक्त्या त्वन्त्यः पक्षो मनोहरः ॥३॥ तच्चापहतपाप्मत्वादि 'य आत्मा'ऽत्र भाषितम् । देवत्वादेरनित्यत्वाद् दृष्टान्तत्वं न सम्भवेत् ॥४॥

'स्वेन रूपेणाभिनिष्पद्यते' इति रूपविशेषणेन स्वेनेति कथनेनागन्तुकरूप-परिग्रहस्य व्यावर्तनाद् ॥१॥

ननु स्वरूपस्य नित्यप्राप्तत्वात्कः पुनः पूर्वावस्थातो विशेषो येन 'उपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति वचनं सार्थकं स्यादित्यत्राह—

## मुक्तः प्रतिज्ञानात् ।४।४।२।

'स्वेन रूपेणाभिनिष्पद्यते' इत्यनेन कर्मसम्बन्धतत्कृतदेहादिसर्वानर्थ-विनिर्मुक्तः स्वाभाविकेन रूपेण समवस्थित उच्यते । पूर्वन्तु अवस्थात्रय-कलुषिः ( स ंसारी चेति विशेषः कर्मरूपाविद्याकृतं यदात्मस्वरूपस्य तिरोधानं तन्निवृत्तिपूर्वकं यः स्वाभाविकस्वरूपस्याविर्भावः सः 'स्वेन रूपेणाभिनिष्पद्यत' इति वाक्यविषयः । कुतश्चैतद्विज्ञायते तत्राह-प्रतिज्ञानात् । "य आत्मापहतपाप्मा विजरः" ( छा० ८।७।१। ) इति प्रकृत्य 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इत्यनेनाविद्यासम्बन्धकृतजरामृत्युशोकादिसकलदोषविनिर्मुक्तस्यात्मनोऽन्वेष्टव्यत्वं विजिज्ञासितव्यत्वञ्चाभिधाय यस्तादृशमात्मानं विजानाति "स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्" ( छा० ८।७।१। ) इति तादृशात्मस्वरूपविदः सर्वलोकसर्वकामप्राप्तेः प्रतिज्ञानात् । तस्मादत्र परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पत्तिः कर्मसम्बन्धनिर्मुक्तिरूपा मुक्तिरेवाभिधीयते स्वाभाविकस्वरूपाविर्भावः स एवास्य जीवात्मन इति ॥२॥

ननु यस्य स्वेन रूपेणाभिनिष्पत्तिरुक्ता तस्य तत्स्वरूपं किं शब्दावाच्यं किंलक्षणञ्चेत्यपेक्षायामाह—

## आत्मा प्रकरणात् ।४।४।३।

अयमात्मा स्वरूपेणापहतपाप्मत्वादिगुणक एव । कुतः ? प्रकरणात् । "यथात्मापहतपाप्मा विजरो विमृत्युर्विशोकः" ( छा० ८।७।१। ) इति प्रकरणादवगम्यते । अयमाशयः । कर्मसंज्ञयाऽविद्यया तिरोहितस्वरूपः

संसारीत्युच्यते। स एव ब्रह्मविद्ययास्माच्छरीरात्समुत्थायार्चिरादिना परंज्योतिरुपसम्पद्याविद्यातिरोधाननिवृत्त्याविर्भूतस्वरूपो मुक्त इत्युच्यते। अस्य चात्मनोऽपहतपाप्मत्वादिसत्यसंकल्पत्वान्ता ये गुणा ये च ज्ञानानन्दादयो गुणास्ते संसारदशायां तिरोहिता आसन्। ततस्त एव गुणा विद्यया विनष्टे कर्मबन्धे परंज्योतिरुपसम्पन्नस्याविर्भवन्ति।

तथा चोक्तम्–'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥ वि०ध० १०४।५५।
यथोदपानकरणात्क्रियते न जलाम्बरम्।

सदेव नीयते व्यक्तिमसतः सम्भवः कुतः ?। वि० ध० १०४।५७
तथा हेयगुणध्वंसादवबोधादयो गुणाः।

प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते। वि०ध० १०४।५७
इति। तस्मात्सम्पद्याविर्भाव इति युक्तमुक्तम् ॥३॥

## * अथाविभागेन दृष्टत्वाधिकरणम् ॥२॥

## अविभागेन दृष्टत्वात् ।४।४।४।

किमयं परंज्योतिरुपसम्पद्य प्रक्षीणकर्मबंधः प्रत्यगात्मा ब्रह्मविभागेन तिष्ठत्याहोस्विदविभागेनेति संशये 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति। (श्वे० ।१।६) इति स्वस्मात्पृथङ्मत्वा सेवितात्परमात्मनः पृथक्त्वेन जीवस्थितेः सत्वाद् ब्रह्मविभागेनावतिष्ठत इति प्राप्तेभिधीयते–अविभागेनेति। 'अजो ह्येको जुषमाणोऽनुशेते' (श्वे० ।४।५) इति जीवस्याजत्वेन नित्यत्वात्। 'आकाशवत्सर्वगतश्च

* ब्रह्मणः किं विभागेनाविभागेनाथवा ननु। तिष्ठति प्रत्यगात्माऽयं मुक्तो ? श्रेष्ठ मतं नु किम् ॥५॥ 'पृथगात्मानमि' त्येनच्छ्रुत्या नाद्य वरं मतम्। व्याप्यव्यापकयोर्यस्मादपार्थक्यं ततोऽपरम् ॥६॥ ब्रह्मात्मनोः श्रुतौ दृष्टा व्याप्यव्यापकता खलु।

नित्यः' 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' 'अयमात्मा ब्रह्म' 'य आत्मनि तिष्ठन्नात्मनोऽन्तरः' ( बृ० ३।७।२२ ) इत्याद्यासु श्रुतिष्वात्मपरमात्मनोर्व्याप्यव्यापकत्वनियम्यनियन्तृत्वश्रवणाद् व्याप्यनियम्यस्वरूपस्थितिप्रवृत्योस्तद्व्यापकनियन्त्राधीनत्वोपपत्तेः । व्याप्यस्य व्यापकापृथक्सिद्धेश्च व्याप्यव्यापकयोरविभागेन स्थित्युपपत्तेस्तस्माद् 'अहं ब्रह्मास्मि' इति व्यपदेशादविभागेनैव तिष्ठतीति ॥४॥

## * अथ ब्राह्माधिकरणम् ॥३॥

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ।४।४।५।

पूर्वं परं ज्योतिरुपसम्पद्य निवृत्तावविद्यातिरोधानस्यात्मनः स्वरूपाविर्भावो भवतीत्यभिहितम् । तत्र येन स्वरूपेणाविर्भूय तिष्ठति तत्स्वरूपं मतभेदेन विचार्यते । किमयं जीवोऽपहतपाप्मत्वादिनाविर्भूय तिष्ठति उत चैतन्यस्वरूपेणाहोस्विदविरोधादुभयस्वरूपेणेति संशये जैमिनिराचार्यस्तु ब्राह्मेणापहतपाप्मत्वादिना स्वरूपेणेति मन्यते । कुतः ? उपन्यासादिभ्यः । दहरवाक्यावगतापहतपाप्मत्वादयो हि ब्राह्मगुणाः प्रजापतिवाक्येऽप्यात्मनो गुणतया 'य आत्मापहतपाप्मेत्यारभ्य 'सत्यसंकल्पः' इत्यन्तेन वाक्येनोपन्यस्यन्त इति । तस्मात्प्रत्यगात्मनः स्वरूपतो गुणतश्चापहतपाप्मत्वादिकमेवोपपद्यते न विज्ञानमात्रस्वरूपत्वमिति जैमिनेर्मतम् ॥५॥

## चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ४।४।६।

"एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" ( बृ०

---

* किमपहतपाप्मत्वादिना वा ज्ञानरूपतः ॥७॥ उभाभ्यां वाऽथ मोक्षेऽयं तिष्ठत्यात्मेति संशये । उपन्यासादितश्चाद्यो जैमिनिरिह मन्यते ॥८॥ चैतन्येन स्वरूपेणौडुलोमिर्ज्ञानरूपतः । उभयोरविरोधेन तूभाभ्यां बादरायणः ॥९॥

४।५।१३ ) इत्याद्यनेकश्रुतिभ्यः प्रत्यगात्मनस्तदात्मकत्वात्प्रज्ञानघनात्मकत्वाच्चैतन्यमात्रस्वरूपत्वात् । चिति तन्मात्रेण रूपेणायमवतिष्ठत इत्यौडुलोमिराचार्यो मन्यते ॥६॥

एवं मतद्वयम्प्रदर्श्य बादरायणो भगवान् स्वमतं सिद्धान्तयति-

## एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ।४।४।७।

एवमप्यात्मनो विज्ञानमात्रस्वरूपत्वाङ्गीकारेऽपि तत्र अपहतपाप्मत्वादीनां प्रकरणावगतानां गुणानामविरोधं बादरायणो भगवान् मन्यते। कुतो विज्ञायते। उपन्यासात्पूर्वभावात् । 'अपहतपाप्मे' त्यादिश्रौतवचनोपन्यासात्प्रमाणात् । पूर्वेषामपहतपाप्मत्वादिगुणानामपि भावाद्विद्यमानत्वात् । चेतनस्वरूपविरोधिपाप्मत्वादिदुष्टगुणनिषेधेनापहतपाप्मत्वादीनां चेतनस्वरूपप्रकाशकानां गुणानामविरोधादिति भावः । तदेवमपहतपाप्मत्वादीनां स्वरूपधर्मतया नाविद्यापरिकल्पितत्वम् । उभयोर्वास्तविकत्वेन विनिगमनाविरहादुभयगुणवत्त्वमेव । यथा च रसनेन्द्रियेणावगतस्य कृत्स्नस्य सैन्धव घनस्य रसमयत्वेन चक्षुराद्यवगततद्रूपकाठिन्यादिभिर्न विरोधः । तथैव 'कृत्स्नः प्रज्ञानघन एव' इति वाक्यावगतेनात्मनो विज्ञानघनस्वरूपेण 'य आत्मापहतपाप्मा' इत्यादिवाक्यावगतापहतपाप्मत्वादिधर्माणामविरोध इति ॥७॥

### * अथ संकल्पाधिकरणम् ॥४॥

## संकल्पादेव तच्छ्रुतेः ।४।४।८।

एवं ब्रह्मोपसम्पत्त्यनन्तरं मुक्तात्मनोऽपहतपाप्मत्वादिसत्यसंकल्पत्वान्तगुणकत्वमाविर्भवतीत्यभिहितम् । इदानीं स एव मुक्तात्मा सांक-

* जक्षन्नि' त्यादिवाक्ये या स्त्र्यादीनां समुपस्थितिः । सा किं मुक्तस्य यत्नाद्वा सकल्पादिति संशये ॥१०॥ लोके हि कार्यमात्रस्य यत्नजन्यत्वदर्शनात । आद्य एवेति सम्प्राप्ते सङ्कल्पादेव तच्छ्रुते ॥११॥

ल्पिकान्विषयाननुभवतीति छान्दोग्येऽभिधीयते । "स तत्र पर्येति जक्षन्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा" ( छा० ८।१२।३ ) इत्यादिना । अत्रायं संशयः । किं मुक्तात्मप्रयत्नान्तरजन्येयं स्त्र्यादीनामुपस्थितिराहोस्वित्परमात्मन इव संकल्पादेवेति । तत्र लोके कार्यमात्रस्य तत्तत्पुरुषप्रयत्नजन्यत्वदर्शनादस्यामपि मुक्तात्मनः प्रयत्नान्तरसाध्यत्वमेव स्यादिति प्राप्तेऽभिधीयते-संकल्पादेवेति । संकल्पादेवास्य सर्वकामावाप्तिः । कुतः ? तच्छ्रुतेः । "स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति" ( छा० ८।२।१ ) इति संकल्पादेव पित्रादिसमुत्थितिः श्रूयते । एवकारः साधनान्तरनिरपेक्षतां द्योतयति । संकल्पमात्रादेव सर्वकामावाप्तिरिति निर्गलितोर्थः ॥८॥

## अत एव चानन्याधिपतिः ।४।४।९।

अतः सत्यसंकल्पादेव अनन्याधिपतिर्नास्त्यन्यः पुरुषः कर्मादिर्वा नियामकः संकल्परोधको यस्य तादृशो भवति । इदन्तु युक्तम् । ब्रह्मोपासनयैवास्य सत्यसंकल्पत्वादिसिद्धिरिति न ब्रह्माधिपत्यमत्र वार्यते किन्तु तदतिरिक्तस्य कस्यचिदप्याधिपत्यं नास्तीत्यभिधीयते । अत एव 'स्वराड् भवति' ( छा० ७।२५।२ ) इत्यभिहितम् ॥९॥

## * अथाभावाधिकरणम् ॥५॥

## अभावं बादरिराह ह्येवम् ।४।४।१०।

इदानीं मुक्तात्मनः संकल्पसत्वात्तस्य शरीरेन्द्रियादिविषये विचार्यते-किं मुक्तात्मनः शरीरेन्द्रियाणि सन्ति नवेति संशये शरीरेन्द्रियाणा-

* देहेन्द्रियाणि मुक्तस्य सन्ति न वेति संशये । मन्यते बादरिर्नेति 'अशरीरमि'तिश्रुतेः ॥१२॥ विकल्पामननात् सन्ति जैमिनिरिति मन्यते । द्वादशाह इव द्वेधा मन्यते बादरायणः ॥१३॥ सन्ध्यवत्तन्वभावे स्याज्जाग्रद्वत्तद्विपर्यये । व्याप्तिरनेकदेहेषु ज्ञानेन स्यात् प्रदीपवत् ॥१४॥

मभावं बादरिराचार्यो मन्यते। कुतश्चैवम् ? आह ह्येवम्। 'न वै सश-रीरस्यः सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वा वसन्तं न प्रिया-प्रिये स्पृशतः ( छा० ८।१२।१ ) इति मुक्तस्य शरीराभावमभिधत्ते। संकल्पस्य मनोऽधीनत्वान्मनोऽतिरिक्तानामिन्द्रियाणामभाव इति मतम्। अत एव "मनसैतान् कामान् पश्यन् रमते। य एते ब्रह्मलोके" ( छा० ८ १२.५।६। ) इति श्रुतिः संगच्छते।

## भावं जैमिनिर्विकल्पामननात् ।४।४।११।

जैमिनिराचार्यो मुक्तस्य शरीरेन्द्रियाणां भावं मन्यते। कुतः ? विक-ल्पामननात् 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा' ( छा० ७।२६।२ ) 'इति विविधभावस्य कथनात् शरीरस्य भावमस्तीत्यवगम्यते। 'अशरीरं वाव सन्त' मिति श्रुतिस्तु कर्मादिनिमित्तकशरीराभावमभि-धत्त इति ॥११॥

एवं मतद्वयम्प्रदर्श्य स्वकीयं सिद्धान्तमाविष्करोति भगवान् बाद-रायणः—

## द्वादशाहवदुभयविधं बादरायणोऽतः ४।४।१२।

अत एव संकल्पादेवोभयविध शरीरेन्द्रियादिसहितं तद्रहितञ्च मुक्तं जीवं मन्यते भगवान् बादरायणः। द्वादशाहवत्। यथा 'द्वादशाहमृद्धिकामा उपेयु' रित्युपैति चोदनया द्वादशाहस्य सत्रत्वम् 'द्वदशाहेन प्रजाकाम याजयेत्' इति यजति चोदनया च तस्यैवाहीनत्वं भवति। तथा संकल्प-वैचित्र्यादत्राप्युभयविधम् ॥१२॥

शरीरेन्द्रियरहितस्य कथं भोगोपपत्तिरित्यपेक्षायामाह —

## तन्वभावे सन्ध्यवदुपपत्तेः ।४।४।१३।

स्वसंकल्पसृष्टतन्वाद्युपकरणाभावे सन्ध्यवदुपपत्तेः स्वप्नभोगवदी-श्वरसृष्टैरुपकरणैर्भोगोपपत्तेः। अयम्भावः। करणकलेवराद्यभावेऽपि

मुक्तः परमात्मप्रदत्तैस्तैस्तैरेव पितृलोकादिभिश्च लीलारसमनुभवति॥१३॥

## भावे जाग्रद्वत् ।४।४।१४।

स्वसंकल्पेन प्राप्तकरणकलेवरादिभावे पितृलोकादिविषयसद्भावे च जाग्रज्जीवभोगवन्मुक्तपुरुषः स्वप्नभोगविलक्षणं लीलारसमनुभवति ॥१४॥

नन्वात्मनोऽणुत्वात् 'स एकधा भवति त्रिधा भवति' इत्यादिनोक्ते-ष्वनेकशरीरेषु व्याप्त्यनुपपत्तेर्नानेकैरात्मकैः शरीरैर्मुक्तस्य भोग उपपद्यत इत्यत्राह--

## प्रदीपवदावेशस्तथा हि दर्शयति ।४।४।१५

यथैकस्मिन्प्रदेशे समवस्थितस्यैकस्यैव प्रदीपस्य स्वप्रभाद्वाराऽऽवेशः यथा चैकस्मिन्नपि देहे हृदयाद्येकदेशावस्थितस्यात्मनश्चैतन्यव्याप्त्या सर्वस्मिन्नपि शरीर आत्माभिमानस्तथा मुक्तस्याप्यनेकशरीरेषु समान एवात्माभिमानो व्यवहारश्च । एतदुक्तम्भवति । बद्धानां जीवानामनादि-कर्मणा सङ्कुचितज्ञानत्वाद्देहान्तरे चैतन्यद्वारा व्याप्तिर्न भवति स्वदेहे तु तेषामावेशोऽस्त्येव । मुक्तानान्तु परमात्मोपासनया गतकर्मबन्धानां पर-मात्मानुग्रहेणासंकुचितज्ञानत्वात् स्वदेहवद्देहान्तरेऽपि व्याप्तिरुपपद्यते । तेन च सर्वोऽपि व्यवहारः सम्यगुपपद्यते । तथा हि दर्शयति । "बाला-ग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" ( श्वे० ५।७। ) तथा च स्वसंकल्पेनैव मुक्तस्य सर्वमुपपद्यते इति न कश्चिद्दोषः ॥१५॥

ननु "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किंचन वेद नान्तरम्" ( बृ० ४।३।२१ ) इत्येषा श्रुतिर्मुक्तस्य बाह्यान्तरज्ञानाभावं वदत्यतः कथं तस्य सर्वज्ञत्वमुच्यत इत्यत्राह--

## स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ।४।४।१६।

एतज्ज्ञानाभाववचनं स्वाप्ययसम्पत्त्योरन्यतरापेक्षं न तु मुक्तिविष-

यकम् । स्वाप्ययः सुषुप्तिस्तत्र ज्ञानाभावः श्रुत्यन्तरेऽपि प्रतिपाद्यते "नाह खल्वयमेव सम्प्रत्यात्मानं जानात्ययमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति" ( छा० ८।११।२ ) इति । तथा 'वाङ्मनसि सम्पद्यते' इत्यादिदर्शनात् सम्पत्तिर्मरणं तत्रापि ज्ञानाभावः श्रुतौ प्रतिपादितः "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति" बृ० २।४।१२) इति । मुक्तस्य हि सार्वज्ञ्यं श्रुतावाविष्कृतम्-"स वा एष दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते। य एते ब्रह्मलोके" ( छा० ८।१२।५।६। ) इति मुक्तावस्थायां सर्वविषयकं ज्ञानं स्पष्टमेवाविष्कृतम्। तस्मात्संकल्पेनैव मुक्तस्य शरीरेन्द्रियादीनां सत्त्वमसत्त्वं सर्वज्ञानाश्रयत्वञ्चेति सिद्धम् ॥१६॥

*अथजगद्व्यापारवर्जनाधिकरणम् ॥६॥

## जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ।४।४।१७।

पूर्वं संकल्पमात्रेण मुक्तस्य सर्वकामावाप्तिरभिहिता। अनन्याधिपतित्वञ्चोक्तम् तथा सतीदमिदानीं विचार्यते। किं मुक्तस्य संकल्पमात्रेण परमपुरुषस्येव सर्वेश्वरत्वमपि प्राप्यत आहोस्वित्सर्वकामप्राप्तिरूपमैश्वर्यमेवेति संशये सर्वजगतामीश्वरत्वमपि। कुतः ? मुक्तस्यानन्याधिपतित्वेनार्थात्सर्वाधिपतित्वोपपत्त्या परमेश्वरस्येव सर्वनियन्तृत्वोपपत्तेः। "निरञ्जनः परमं साम्यमुपैति" इति, परमपुरुषसाम्याप्तिश्रवणाज्जगत्सृष्ट्यादिकर्तृत्वमपि मुक्तस्य सम्भवतीति प्राप्तेऽभिधीयते-जगद्व्यापारवर्ज्जमिति। जगद्व्यापारो जगदुत्पत्त्यादिकर्तृत्वं तेनाशेषचेतनाचेतन-

* सकल्पेनैव मुक्तस्य सर्वेशताऽपि किम्भवेत् ? अथवा सर्वकामानां प्राप्तिरेवेति संशये ॥१५॥ साम्यादिश्रुतितः पूर्वो नैष पक्षः शुभो यतः 'तदैक्षते' तिवाक्योक्तिरीशमेव प्रकृत्य हि ॥१६॥ मुक्तस्यासन्निधिस्तस्मान्न स लोकस्य कारकः। जगद्व्यापारवर्ज्योऽतः सायुज्ये रामसाम्यता ॥१७॥ भोगमात्रेण सा ज्ञेया मुक्तो नहि निवर्त्तते। निर्विकारं यथा

स्वरूपस्थितिप्रवृत्तिभेदनियमनं । तद्वर्जमविद्यातिरोधानराहित्यपूर्वकपर-ब्रह्मानुभवरूपम् 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणे' ति श्रुत्यभिहित-संकल्पमात्रेण सर्वकामावाप्तिरूपं मुक्तस्यैश्वर्यमस्ति । न तु जगदीश्वर-त्वमपि तत्तु परमपुरुषस्यासाधारणम् । कुतः ? प्रकरणात् । "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" ( तै० ३।१ ) इति परमात्मानमेव प्रकृत्याम्ना-तम्–न तु मुक्तात्मानम् । एवं "सदैक्षत बहु स्याम्प्रजायेयेति तत्तेजोऽसृ-जत" ( छा० ६।२।३. ) इत्यादि प्रकरणान्तरेष्वपि ज्ञेयम् । असंन्निहित स्वाच्चापि मुक्तस्य । नहि जगन्नियमनादिषु मुक्तस्य सान्निध्यमप्यस्ति । येन तस्याप्ययं व्यापारः स्यात् ॥१७॥

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डल-स्थोक्तेः ।४।४।१८।

ननु "स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति" ( छा० ७।२५।२ ) इत्यादौ प्रत्यक्षेणैव स्वतन्त्र्योपदेशान्मुक्तस्य निरं-कुशमैश्वर्यं स्यादिति चेन्न, आधिकारिकमण्डलस्थोक्तेः । अधिकारे नियु-क्तानां हिरण्यगर्भादीना लोकेषु स्थितान् भोगान्प्रति मुक्तस्य कामचार-स्योक्तेः विमुक्तबन्धो मुक्तो ब्रह्मविभूतिभूतेषु हिरण्यगर्भादीनां विकार-लोकेषु यथासंकल्पं विहरतीति तदर्थः । नहि तेन वाक्येन जगद्व्यापारोऽ-पि मुक्तस्यास्तीति प्रतिपाद्यते ॥१८॥

तर्हि संसारिवन्मुक्तस्यापि विकारान्तर्वर्तिभोगभोक्तृत्वाद्बद्धस्येव मुक्त-स्यापि भोग्यं क्षयिष्णु नश्वरं स्यादित्यत्राह--

---

रामं रमञ्चानुभवत्यपि ॥१८॥ मुक्त निवर्त्तयेन्नात्र श्रीरामो भक्तव-त्सलः । मृत्योः पूर्वं विनष्टत्वान्निवर्त्तयेन्न कर्म च ॥१९॥ नित्यधामगति-स्तस्मात् पुनरावृत्तिवर्जिता । परमानन्दमयी नित्या सर्वोत्कृष्टा बुधैर्मता ॥२०॥

## विकारावर्ति च तथा हि स्थितिमाह ।४।४।१९।

चकारः पूर्वोक्तहिरण्यगर्भादिलोकभोगसमुच्चयार्थकः । न केवलमाधिकारिकलोकस्थानेव भोगाननुभवति मुक्तोऽपि तु विकारे जन्मादिके न वर्तत इति निरस्ताखिलविकारं निरवधिककल्याणगुणसागरं परं ब्रह्म सविभूतिकमप्यनुभवति । तथा हि मुक्तस्य परमात्मनि सर्वात्मकेऽनन्तकल्याणगुणेऽनुभवितृत्वेन स्थितिमाह श्रुतिः-"यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति" ( तै० २।७ ) "रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति" ( तै० २।७ ) इति ।

अयमभिसन्धिः-अस्य चिदचिन्मिश्रस्य जगतः परमात्मविभूतित्वात्सर्वाधारे परमपुरुष एव जगत्स्थितिः "सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" ( छा० ६।८।४ ) "तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" ( का०:२।५।८ ) इत्यादिश्रुतेः एवञ्च मुक्तस्यापि ब्रह्मनिष्ठत्वात्सविभूतिकं ब्रह्मानुभवन्नाधिकारिकलोकभोगानप्यनुभवति मुक्तः । तदेव 'स स्वराड् भवति' इत्यादिश्रुत्याभिधियते न तु स्रष्टृत्वादिकर्तृत्वम् ॥१९॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने ।४।४ २०।

जगत्सृष्टिनियमनादिरूपो व्यापारस्तु परमात्मन एवेति दर्शयतश्चैवमेव श्रुतिस्मृती "सविश्वकृद्विश्वविदात्मयोनिः ( श्वे० ६।१६ ) "स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किञ्च । तत्सृष्ट्वा तदेवानुप्राविशत्" ( तै० २।६ ) एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" ( बृ० ४।४।२२ ) "एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" ( बृ० ३।८।९ ) "य ईशेऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय" (श्वे० ६।१७ ) "भयादस्या-

निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" ( का० २।६।३ ) इत्यादिका श्रुतिः । तथा स्मृतिरपि "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" ( गी० १०।८ ) "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" ( गी० १०।४२ ) तस्मान्मुक्तस्यैश्वर्यं जगद्व्यापारवर्ज्जमिति ॥२०॥

## भोगमात्रसाम्यलिङ्गाच्च ।४।४।२१

"सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" ( तै० १।२ ) इति मुक्तस्य ब्रह्मणा सह भोगमात्रेण साम्यं श्रूयते न तु जगद्व्यापारेणापि । तस्माल्लिङ्गाज्जगद्व्यापारवर्ज्जमेव मुक्तस्य सत्यसंकल्पतया सर्वेषु लोकेषु कामचारत्वमिति ॥२१॥

ननु परमात्मसंकल्पायत्तमेव मुक्तस्यैश्वर्यं यदि स्यात्तर्हि कदाचित्तदिच्छया पुनरावृत्तिरपि मुक्तस्याभ्युपेयेत्यत्राह–

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ।४।४।२२।

ध्यानोपासनवेदनादिशब्दवाच्यया परमपुरुषैकचिन्तनलक्षणयानन्यभक्त्या प्रसन्नेन परमपुरुषेणार्चिरादिना ब्रह्मलोकं नीतस्य मुक्तस्यानावृत्तिरेव "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते" ( छा० ८।१५।१ ) इत्यादिवैदिकशब्दादवगम्यते ।

एव स्वानन्यभक्तस्यानावृत्तिः स्वयं गीताचार्येण भगवताऽप्यभिहिता–

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमं गताः ॥गी० ।८।१५।

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते ॥गी०। ८।१६।

नहि सम्यगाराधितपरमपुरुषचरणस्य अत एवाप्तसमस्तकामस्य

सर्वदा नित्यनिरतिशयानन्दमनुभवतो मुक्तस्य कथञ्चिदपि जन्मजराम-रणादिदुःखसंकुले सातिशयसुखे जगति जायते पुनरावर्तनक्लेशलेशः । न वाखिलवात्सल्यसौजन्यसौशील्यकारुण्यजलधिर्भगवान् भक्तजनानुकम्पापरा-यणः परमपुरुषः श्रीरामचन्द्रः परमात्मा स्वानन्यभक्तं ज्ञानिनं स्वलोक-मानीय कर्हिचिदप्यावर्तयिष्यति । यतः स्मर्यते स्वाश्रितजनमनन्यभक्त-मुद्दिश्य तस्य परमकारुणिकस्य परमपुरुषस्य सर्वस्मादुत्कृष्टेयम्प्रतिज्ञा 'अप्यहं जीवितं जह्याम्" ( वा० आ० १०।१८ )

सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम । वा० यु० ।

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । गी० ।७।१७।
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् । गी० ७।१८।
अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् । गी० ।९।२२।
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि नचिरात्पार्थ ! मय्यावेशितचेतसाम् । गी० ।१२।७।
मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः । गी० ।१२।८।

तस्मात्परमपुरुषमुपसम्पन्नस्य मुक्तस्य पुनरावृत्तिर्न भवतीति सिद्धान्तः । सूत्रावृत्तिः शास्त्रसमाप्तिं गमयति ।।२२।।

इति श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः ।।४।।

। समाप्तश्चाध्यायः ।

बोधायनवृत्त्यभावे तत्सारमनुसृत्य हि ।
आनन्दभाष्यमेतच्च रामानन्देन निर्मितम् ।।

परिसमाप्तञ्च शास्त्रम् ।

मायावादिकुतर्कजालरचितव्याख्यानसंमूर्छितां—
यो व्याख्यासुधया त्रयीं भगवतीं सञ्जीवयन् राजते ।
तस्याचार्यशिरोमणेर्विजयिनो वादाहवे श्रीमतो—
रामानन्दमुनेर्वचोऽखिलजगत्क्षेमाय सञ्जायताम् ॥१॥

॥ श्रीमते रामानन्दाय नमः ॥

---

* वैष्णवभाष्यकारश्रीवैष्णवाचार्यनिर्मिता । विशिष्टाद्वैतसिद्धान्तसत्प्रकाशेन भास्वरा ॥१॥ मनोज्ञा रत्नमालेय सीतानाथाय चार्पिता । आनन्दभाष्यतत्त्वानां भूयात् सुप्रतिपत्तये ॥२॥

इत्युपनिषद्भाष्यकारपण्डितसम्राट्स्वामि
श्रीवैष्णवाचार्य–वेदान्तपीठाचार्य–
प्रणीताधिकरणमाला समाप्ता

